# व्याकरणकारिका

रचयिता

अध्यापक—श्रीहरिपददत्तः

एम. ए. (संस्कृते बङ्गसाहित्ये च)

सांख्यवेदान्ततीर्थः

(प्रथमः खण्डः)

# VYAKARANA KĀRIKĀ

Written by

**Prof. Haripada Datta**

M. A. (Sanskrit & Bengali)

Sankhya-Vedantatirth

**VOLUME ONE**

1895.

**Price :** Rs. Forty only (Library edition)
Rs. Thirty only (Ordinary edition)

# व्याकरणकारिका

( प्रथमः खण्डः )

## विषयसूची

### व्याकरणकारिका

(भूमिका)



### व्याकरणकारिका

# ( भूमिका )

## तत्र

## व्याकरणशास्त्रस्य इतिहासः

इतिहासे व्याकरणशास्त्रस्य युगचतुष्टयं कल्पितम् ऐतिहासिकैः। तद् यथा—

(१) युगं पाणिनेः पूर्व्वम्,
(२) पाणिनेर्युगम्,
(३) भर्तृहरिप्रभृतीनां युगम्,
(४) रामचन्द्रादीनां युगम्।

प्रतियुगं समासेन विवरणं प्रदीयते।

### (१) युगं पाणिनेः पूर्व्वम्।

कदा व्याकरणशास्त्रस्य समुद्भव इति न निश्चयः। एवं हि श्रूयते—

"अथाचार्य्या ऊचुः—ब्रह्मा वृहस्पतये प्रोवाच, वृहस्पतिरिन्द्राय, इन्द्रोभरद्वाजाय, भरद्वाज ऋषिभ्य, ऋषयो ब्राह्मणेभ्यः—तं खल्विममक्षरसमाक्षायमित्याचक्षते—"(ऋ-त) एवं हि शाकटायनेन स्मृतम्। देवमूलं हि शास्त्रं न तस्य कालो निर्णेतुं शक्यः।

यदिदानीं लभ्यते तदुच्यते। ऋचि तु दृश्यन्ते क्वचित् क्वचित् मन्त्राः। शास्त्रस्य बीजं तत्रैव निहितमिति प्रतीयते। एता हि ऋचः—

(१) यज्ञेन यज्ञमयजन्त देवाः ऋ १।१६४।५०
(२) ये सहांसि सहसा सहन्ते ऋ ६।६६।९
(३) पूर्व्वीरश्नन्तावश्विना ऋ ८।५।३१

एतासु शब्दस्य मूलं दर्शितम्। का वा प्रकृतिः, को वा प्रत्यय इह तदनुमातुं शक्यम्।

ब्राह्मणेषु तावत् शास्त्रस्य प्रसरो दृश्यते। यथा गोपथब्राह्मणम् (पू १।२४)—

"ओङ्कारं पृच्छामः, को धातुः, किं प्रातिपदिकं, किं नामाख्यातं, किं लिङ्गं, किं वचनं, का विभक्तिः, कः प्रत्ययः, कः स्वरः, उपसर्गो निपातः"—इत्यादि।

पुनरुपनिषदं पश्यामः। तत्र श्रूयते—"ओङ्कार एव सर्वा वाक्। सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति"।

स्पर्शवर्णा उष्मवर्णा इत्येतेषामिह संविभागो दृश्यते।

प्रातिशाख्यादिषु च शास्त्रस्य प्रसरः समधिक एव लक्ष्यते। स्वरे विधिस्तत्र दृश्यते। एषु प्रातिशाख्य ग्रन्थेषु स्वरविषया ये श्रुयन्ते विधः तेषामेव विकाशः पश्चात् पाणिनीये इत्येव हि विदुषां मतम्। नामाख्यातादीनामिहैव प्रविभागो दृश्यते।

पुनस्तत्र यास्कविरचितं निरुक्तम्। तत्र हि प्रकृतिप्रत्ययविभागेन पदव्यवस्था दृश्यते। अर्थप्रतिपादनं प्रकृतिप्रत्ययविगेन दृश्यते तावद् अत्रैव विशेषेण। प्राचीनानां शाब्दिकानां नामानि बहुश उपलभ्यन्ते निरुक्ते पुनरिहैव। पाणिनेः पूर्व्वमाविर्भूता अपरे बहवश्चाचार्य्याः। तेषां नामानि वहुधा च श्रूयन्ते। अष्टके स्वयमेव पाणिनिना आचार्य्या दश हि स्मृताः।

पाणिनेः पूर्व्वं यथा वा शास्त्रस्य समुद्भवः यथा वा शास्त्रस्य विवृद्धिः तथा यथा मया समासेन दर्शितम्। इह तु विस्तरः न मे लक्ष्यः। प्रासङ्गिकं किञ्चिदुक्तमिति।

पाणिनेः पूर्व्वमाचार्य्या ये चाविर्भूतास्तेषां पञ्जी मया पत्र प्रदीयते। (पञ्जी १ द्रष्टव्या, पश्चाच्च कारिकाकृत्य कथयिष्यामि।

(२) पाणिनेयु'गम्

भगवतः पाणिनेर्नाम्ना युगस्य नाम कृतम् ऐतिहासिकैः। भगवान् पाणिनिरष्टकस्य कर्त्ता। दैवी वाक् देवं पाणिनिमाश्रित्य रूपं लेभे। न हि व्याकरणे तस्य सदृशः कर्त्ता कश्चिदिहाभूत् न वा भविष्यति। "विचित्रा सूत्रस्य कृतिः पाणिनिना" इति स्वयमेवाह भगवान् पतञ्जलिः।

वाहीकदेशः (इदानीं पाकिस्थाने) तस्य जन्मभूमिः। शालातुरस्तस्य ग्रामः। मातुर्नाम दाक्षी। पितुर्नाम न तु निश्चयेन ज्ञातम्। पणिनस्तस्य पितुर्नाम इति केचित्। केचिदाहुः—शालङ्कस्तस्य पिता चेति। खीष्टपूर्व्वं नवकं शतकं तस्य काल इति हि विदुषां निश्चयः।

अष्टकस्य समासेन विवरणं यथा —

| अध्यायः | सूत्रसंख्या | विषयः (मुख्यतः) |
|---|---|---|
| प्रथमः— | ७५+ ७३+ ९३+११०=३५१ | संज्ञा |
| द्वितीयः— | ७२+ ३८+ ७३+ ८५=२६८ | समासः कारकञ्च |
| तृतीयः— | १५०+१८८+१७६+११७=६३१ | तिङ्, कृत्प्रत्ययः |
| चतुर्थः— | १७८+१४५+१६८+१४४=६३५ | तद्धितः |
| पञ्चमः— | १३६+१४०+११९+१६०=५५५ | तद्धितः |
| षष्ठः— | २२३+१९९+१३९+१७५=७३६ | स्वरः स्वरसन्धिश्च |
| सप्तमः— | १०३+११८+१२०+ ९७=४३८ | आदेशः आगमः |
| अष्टमः— | ७४+१०८+११९+ ६८=३६९ | अनुदात्तम् णत्वं षत्वम् |
| | ३९८३ | |

गच्छति च काले शास्त्रस्य पूर्त्तिः प्रयोजनमासीत्। कात्यायनेन वार्त्तिकं कृतम्। स तु कात्यायनो दक्षिणदेशीय इति महाभाष्यसम्मते ज्ञेयः। "प्रियतद्धिता दाक्षिणात्या" इति हि भाष्यम्। त्रीणि शतानि वर्षाणि पश्चात् पाणिनेः कात्यायनस्य जन्म चेति विदुषां मतम्।

पश्चात् तत्र महाभाष्यं भगवतः पतञ्जलेः। वार्त्तिकानां सूत्राणाञ्च भाष्यमिदम्। अपूर्वा हि रचनाशैली भगवतः पतञ्जलेः। न हि समा शैली दृश्यते चान्यत्र क्वचित्। महानयं ग्रन्थः। य पठति स जानाति। आकरः सर्वग्रन्थस्य महाभाष्यम्। अनेकशस्तत्र टीका बभुवुः (पञ्चो २ द्रष्टव्या)।

भगवान् पतञ्जलिः शेषनाग इत्यपि च कथ्यते। गोनर्दीय इति वा तस्य नाम। खीष्टपूर्वं द्वितीयं शतकं तस्य कालः। अयोध्या तस्य निवास इति स्थितिः। गोनर्दो हि तस्य देशस्य नाम। स हि देशः अयोध्यां निकषा क्वचिद् इति तु विदुषां मतम्।

पाणिनिः कात्यायनः पतञ्जलिः इति हि त्रयम्। त्रिमुनि व्याकरणम् अतएव नाम।

### (३) भर्त्तृहरेर्युगम्

इतिहासे व्याकरणसाहित्यस्य भर्त्तृहरिरिति प्रसिद्धं नाम। न केनापि तस्य नाम त्यक्तुं शक्यम्। शब्दाद्वैतवादस्य स एव हि स्थापयिता। न हि व्याकरणशास्त्रम् इदं तुच्छं परन्तु मोक्षशास्त्रमिदं व्याकरणम् इति भर्त्तृहरिणैव प्रदर्शितम्। शास्त्रस्य गौरवं हीयेत न

तत्र यदि भर्त्तृहरिरासीत्। तस्यैव हि नाम्ना युगस्य नाम तत एव हि कृतम्।

खीष्टीयं सप्तकं शतकं तस्य काल इति विदुषां मतम्। वाक्यपदीयं तस्य ग्रन्थः। ब्रह्मकाण्डं वाक्यकाण्डं पदकाण्डं चेति काण्डत्रयमस्मिन् ग्रन्थे वर्त्तते। इदं वाक्यपदीयं व्याकरणदर्शनस्य मूलम्। अर्व्वाचीनै-र्व्याकरणदर्शने यद् लिखितं तदिदमेव समाश्रित्य। विना वाक्यपदीयं न गतिरन्यथा कस्यचित्।

शतकत्रय य कर्त्ता भर्त्तृहरिरयं न वेति विदुषां संशयस्तु वर्त्तते। भट्टिकाव्यस्य कर्त्ता भर्त्तृहरिवयं न वेति संशयोऽपि सममेव वर्त्तते। परन्तु वहवो हि भर्त्तृहरय इत्येव हि विदुषां मतम्।

अस्मिनेव शतके जयादित्यः पाणिनिसूत्रमाश्रित्य काशिकां चकार। ६६०-मिते खीष्टाब्दे तस्य मृत्युरिति ज्ञायते इत्सिङ्-विवरणात्। काशिकायाः पञ्चाध्यायात्मकः प्रथमोभागस्तस्य कृतिरिति विदुषां निश्चयः। अध्यायत्रयात्मको द्वितीयो भागो वामनस्य कृतिरिति च विद्वांसः।

काले काशिकाया अपि टीका अनेकशो वभुबुः (पञ्जी ३ द्रष्टव्या)।

पाणिनिसूत्रक्रमं समाश्रित्य कृता चेयं काशिका सरला गम्भीरा मनोहरा च षोड़शशतकपर्य्यन्तं पठिता पाठिता चासीदिति स्थितिः।

कैयटस्तु महाभाष्ये प्रदीपं चकार। स चायं कैयटः काश्मीरवा-स्तव्यः—खीष्टीयम् एकादशशतकं तस्य कालः इति हि विदुषां निश्चयः। महाभाष्ये भर्त्तृहरिविरचितां टीकामाश्रित्य कैयटेन प्रदीपः कृत इति कैयटेन स्वयं कथितम्। स चायं प्रदीपो महाभाष्यस्य दुर्गममंशं सुगमं चकार—अद्यापि च स ग्रन्थो विदुषां मूर्द्धनि वर्त्तते खलु। अस्य कैयटग्रन्थस्य नागेशः पश्चाद् उद्योतं चकार—स चायं नागेशग्रन्थः इदानीमपि पठ्यते पाठ्यते च। प्रदीपोद्योतयुतं महाभाष्यमिदानीं सर्व्वत्रैव लभ्यते। काले प्रदीपस्य टीका अनेकशो वभुवुः। (पञ्जी ४ द्रष्टव्या)।

(४) रामचन्द्रादीनां युगम्

अष्टकसूत्रक्रममाश्रित्य एतावता पठनं पाठनञ्च चलितमासीत्। पश्चात् तत्र विषयानुक्रमः पाठश्चलितः। खीष्टीये त्रयोदशशतके रामचन्द्रशेषः

प्रक्रियाकौमुदीं चकार। अस्मिन् ग्रन्थे विषयानुक्रमं सूत्राणि दर्शितानि। समासे येषां येषां सूत्राणां प्रयोजनं तेषां तेषां सूत्राणाम् एकत्रैवेह ग्रन्थे समावेशः प्रदर्शितः। एवं कारके। एवं चान्यत्र। आसीत् खलु पूर्व्वं रूपमाला रूपावतारश्च। विषयाणां संक्षेपेण सूचणात् न तौ ग्रन्थौ तथा समादृतौ यथा तु चायम्। प्रक्रियाकौमुदी तु पिपठिषूणां चित्तम् अचिरात् जहार। सर्व्वत्रैव ग्रन्थस्य व्याप्तिरभूद् अचिरेणैव कालेन।

इमं पुनर्ग्रन्थमादर्शं कृत्वा रचिता भट्टोजिदीक्षितेन सिद्धान्तकौमुदी। इदानीं सैव सर्व्वत्र पठ्यते— सर्व्वत्र सैव हि सुप्रचारा। टीका वहुशो जाताः कौमुदीग्रन्थे (पङ्क्ती ५ द्रष्टव्या)।

भट्टोजिदीक्षितस्तावत् तैलङ्गब्राह्मणः। लक्ष्मीधरस्तस्य पिता वलभी च तस्य माता। रङ्गोजिभट्टस्तस्य भ्राता। खीष्टीयं षोड़शं शतकं तस्य कालः। अस्मिन् शतके मध्यभागे तस्य जन्म, सप्तदशशतके प्रथमे त्रिंशके तस्य मृत्युरिति विदुषां मतम्।

इतिहासे व्याकरणशास्त्रस्य युगचतुष्टयं मया प्रदर्शितम्। यस्मिन् युगे ये च ग्रन्था ये च ग्रन्थकारास्तेषाम् अतीव समासेन विवरणमिह समुपस्थापितम्। इह तु केवलं दिङ्मात्रमेव प्रदर्शितम्।

### (५) अन्यद् व्याकरणम्

पाणिनिव्याकरणम् विहाय स्थितमन्यदपि व्याकरणम्। पठनं पाठनं तेषामपि क्वचित् क्वचित् चलितं खलु। तेषु मध्ये केषाञ्चिदिह नामानि दीयन्ते :

(१) कलापव्याकरणम्— शर्व्ववर्माचार्य्यविरचितम्। रचनाकालः खीष्टीयं प्रथमं शतकम्। बङ्गेषु वहुलमिदं प्रचलितम्।

(२) मुग्धवोधव्याकरणम्- वोपदेवविरचितम्। खीष्टीयं चतुर्दशशतकं रचनाकालः। अस्य समुद्भवो महाराष्ट्रे प्रचलनन्तु बङ्गेष्वेव।

(३) प्रयोगरत्नमाला—पुरुषोत्तमदेवः खीष्टीयं षोड़शशतकं रचनाकालः।

(४) सारस्वतव्याकरणम्—अनुभूतिस्वरूपाचार्य्यप्रणीतम्। रचनाकालः त्रयोदशशतकम् (सम्भवतः)।

(५) संक्षिप्तसारव्याकरणम्—क्रमदीश्वरविरचितम्। वङ्गेषु चलितम् इदम्।

(६) जैनेन्द्रव्याकरणम्—कर्त्ता पूज्यपाददेवनन्दी। खीष्टीयं सप्तमं शतकं रचनाकालः।

(७) सिद्धहेमशब्दानुशासनम्—हेमचन्द्रप्रणीतम्। द्वादशशतकं रचनाकालः।

(८) चान्द्रव्याकरणम्—कर्त्ता चन्द्रगोमी। तस्य कालः खीष्टीयं पञ्चमशतकम्।

(९) हरिनामामृतव्याकरम्—श्रीजीवगोस्वामी कर्त्ता। रचनाकालः खीष्टीयं षोड़शशतकम्।

(१०) सरस्वतीकण्ठाभरणम्—भोजराजेन प्रणीतमिति प्रचारः। कालः खीष्टीयं षोड़शशतकम्।

(११) सुपद्मव्याकरणम्—पद्मनाभदत्तप्रणीतम्। खीष्टीयं चतुर्द्दशशतकं रचनाकालः।

अन्यच्च व्याकरणं स्थितमिति पूर्व्वं सूचितम्। पञ्जी पश्चात् दत्ता (पञ्जी ६ द्रष्टव्या)।

---

## पाणिनि-पूर्वजा:

### अन्यत्रस्मृता:

१) शिव
२) बृहस्पति
३) इन्द्र
४) वायु
५) भरद्वाज
६) भागुरि
७) पौष्करसादि
८) चारायण
९) काशकृत्स्न
१०) शन्तनु
११) वैयाघ्रपद्य
१२) माघन्दिनि
१३) वौढ़ि
१४) शौनकि
१५) गौतम
१६) व्याड़ि

### प्रातिशाख्यास्मृता:

१) अग्निवेश्य २) अग्निवेश्यायन ३) अन्यतरेय ४) आगस्त्य
५) आत्रेय ६) इन्द्र ७) उरव्य ८) उत्तमोत्तरीय ९) औदव्रजि
१०) औपगवि ११) काण्डमायन १२) कात्यायन १३) काण्व
१४) काश्यप १५) कौण्डिन्य १६) कोहलिपुत्र १७) गार्ग्य
१८) गौतम १९) जातूकर्ण्य २०) तैत्तिरीयक २१) दाल्भ्य
२२) नैगी २३) नकुलमुख २४) पञ्चाल २५) पौष्करसादि
२६) प्राच्यपञ्चाल २७) पाणिनि २८) माक्षायन २९) माक्षि
३०) वाभ्रव्य ३१) वृहस्पति ३२) ब्रह्मा ३३) भरद्वाज ३४) भारद्वाज
३५) माक्षव्य ३६) माचाकीय ३७) माण्डूकेय ३८) माध्यंदिन
३९) मीमांसक ४०) यास्क ४१) वाड़बीकर ४२) वात्सप्र
४३) वाल्मीकि ४४) वेदमित्र ४५) व्याड़ि ४६) शाकटायन
४७) शाकल ४८ शाकल्य ४९) शाकल्यपिता ५०) शाङ्खमित्रि
५१) शाङ्खायन ५२) शूरवीर ५३) शूरवीरसुत ५४) शैत्यायन
५५) शौनक ५६) स्थविरकौण्डिन्य ५७) स्थविरशाकल्य
५८) सांकृत्य ५९) हारीत।

### पाणिनिस्मृता:

१) आपिशलि
२) काश्यप
३) गार्ग्य
४) गालव
५) चाक्रवर्मण
६) भारद्वाज
७) शाकटायन:
८) शाकल्य
९ सेनक
१०) स्फोटायन

पक्ती २

पाणिनि (अष्टाध्यायी)

## वार्त्तिक

वार्त्तिककार

१) कात्यायन
२) भारद्वाज
३) सुनाग
४) क्रोष्टा
५) वाड़व
६) व्याघ्रभति
७) वयाघ्रपद्य

## (वृत्ति)

वृत्तिकार

१) पाणिनि २) श्वोभूति ३) व्याड़ि ४) कुणि ५) माथुर ६) वररुचि ७) देवनन्दी ८) चुल्लिभट्ट ९) निलूर १०) चूर्णिकार ११) जयादित्य १२) वामन १३) भागवृत्तिकार १४) भर्तीश्वर १५) भट्टजयन्त १६) केशव १७) इन्दुमित्र १८) मैत्रेय १९) पुरुषोत्तम २०) शरणदेव २१) भट्टोजिदीक्षित २२) अप्पयदीक्षित २३) नीलकण्ठवाजपेयी २४) अन्नंभट्ट २५) विश्वेश्वरसूरि २६ गोपालकृष्णशास्त्री २७) गोपालचन्द्र २८) ओरम्भट्ट २९) दयानन्द सरस्वती ३०) अप्पननैनार्य्य ३१) नारायणसुधी ३२) रुद्रधर ३३) उदयन ३४) उदयङ्करभट्ट ३५) रामचन्द्र ३६) सदानन्दनाथ ३७) लघुवृत्तिकार।

## (महाभाष्य)-पतञ्जलि

महाभाष्य टीकाकार:

१) भर्त्तृहरि २) कैयट ३) ज्येष्ठकलश ४) मैत्रेय ५) पुरुषोत्तमदेव ६) धनेश्वर ७) शेषनारायण ८) विष्णुमित्र ९) नीलकण्ठ १०) शेषविष्णु ११) शिवरामेन्द्र १२) प्रयागवेङ्कटाद्रि १३) तिरुमलयज्वा १४) कुमारतातय १५) राजनृसिंह १६) नारायण १७) सर्व्वेश्वरदीक्षित १८) गोपालकृष्ण १९) अज्ञातनामा २०) अज्ञातनामा।

## प्रक्रियाग्रन्थ

प्रक्रियाकार

१) धर्म्मकीर्त्ति
२) विमलमति
३) रामचन्द्र
४) भट्टोजिदीक्षित
५) प्रक्रियारत्नकार
६) नारायणभट्ट

पञ्जी ३

जयादित्य-वामन (काशिका)

टीकाकार

- रामदेवमिश्र
- हरदत्त (पदमञ्जरी)
- इन्द्रमित्र
- जिनेन्द्रबुद्धि (न्यास)
  - मैत्रेय
  - मल्लिनाथ
  - नरपति
  - पुण्डरीक
  - रत्नमति
- महान्यासकार
- विद्यासागरमुनि
- चिकित्माकार
- वृत्तिरत्नकार

---

पञ्जी ४

प्रदीपः (महाभाष्ये टीका-कैयटः)

टीकाकार

- व्याख्या (अज्ञातनामा)
- व्याख्या (हरिराम)
- स्फूर्त्ति (सर्व्वेश्वर गोस्वामी)
- विवरणम् (नारायण)
- स्फूर्त्ति (आदेन्न)
- प्रकाशिका प्रवर्त्तकोपाध्याय
- × रामसेवक
- × मल्लयपज्वा
- उद्योत नागेशभट्ट
- × नारायणशास्त्री
- उद्योतन अन्नंभट्ट
- विवरणम् ईश्वरकान्त
- विवरणम् रामचन्द्रसरस्वती
- महाभाष्यप्रदीपोद्योत नागनाथ (१४९३ खी:)
- महाभाष्यकैयटप्रकाशः चिन्तामणिः-१४४३ खी:

पञ्जी ५

भट्टोजिदीक्षित (सिद्धान्तकौमुदी)

- भट्टोजि स्वयं
- ज्ञानेन्द्र
- नीलकण्ठ
- रामानन्द
- नागेश
- रामकृष्ण
- वासुदेव
- रङ्गनाथ
- कृष्णमित्र
- रामचन्द्र
- तिरुमल
- तोप्पल
- लक्ष्मीनृसिंह
- शिवरामचन्द्र
- इन्द्रदत्तोपाध्याय
- व्यूढमिश्र
- वल्लभः
- अज्ञात
- अज्ञात
- अज्ञातनामा
- अज्ञातनामा

[द्रष्टव्यम्— स्थानाभावात् निर्विभक्तिकंनाम दर्शितम्-सर्वत्र सविभक्तिकं पठनीयम्]

अन्ये वैयाकरणाः

चन्द्रगोमी (चान्द्रव्या)

देवनन्दी (जैनेन्द्रव्या)

क्रमदीश्वर (संक्षिप्तसार)

रामाश्रम (सिद्धान्तचन्द्रिका)

वोपदेव (मुग्धवोध)

शर्व्ववर्मा (कातन्त्रव्या)

पद्मनाभ (सुपद्म)

अनुभूतिस्वरूपाचार्य्य (सारस्वतव्या)

श्रीजीव (हरिनामामृत)

पुरुषोत्तमदेव (प्रक्रियारत्नमाला)

भोज सरस्वतीकण्ठाभरण

हेमचन्द्र सिद्धहेमशब्दानुशासन

शर्व्ववर्मा — टीकाकार: शर्व्ववर्मा, वररुचि, उमापति, जिनप्रभसूरि, जगद्धर, पुण्डरीक

दुर्गसिंह (दुर्गवृत्ति) — टीकाकार: दुर्गसिंह, उग्रभूति, त्रिलोचन, वर्द्धमान

देवनन्दी — देवनन्दी, अभयनन्दी, प्रभाचन्द्र, महाचन्द्र, भाष्यकार

भोज — भोजराज, दण्डनाथ, कृष्णलीलाशुक, रामसिंह

इतः पूर्व्वं व्याकरणशास्त्रे युगचतुष्टयं मया प्रदर्शितम्। तत्र तत्र युगे प्रधानपुरुषाणां नामानि-चापि दर्शितानि। परन्तु विशेषस्तु तत्र न सर्व्वत्र दत्तः। इदानीं यथाप्राप्तं विशेष इह प्रदीयते।

पञ्जी च मया दत्ता पूर्व्वमपि। परन्तु न तत्रापि विशेषः स्थितः। यदि वा तत्र कस्यचित् टीकाकृतो नाम विद्यते, न विद्यते पुनस्तस्य कालः परिचयो वा। विशेषेस्तत्रापि च पुनरपेक्षितः। विशेष इह दीयते।

यदितः परं प्रदीयते तत् परिपूरकमेव गणनीयम्।

इतिहासे व्याकरणशास्त्रस्य कात्स्न्न कारिकाः पूर्व्वं मया कृताः। इयन्तं कालं ताः सर्व्वा गृहे मे स्थिताः पतिता हतादरा एव। तासामिह योजना क्रियते। प्रसङ्गस्तु स्थित एव—न हि दोषाय भविष्यति।

एवं हि कारिकानामिह विभागो भविता—

(१) पाणिनेः पूर्व्वं स्थिता ये वैयाकरणा तानाश्रित्य कृताः कारिकाः,

(२) पाणिनिमाश्रित्य तत्सम्प्रदायमाश्रित्य कृताश्च कारिकाः,

(३) अन्ये ये स्थिता वैयाकरणास्तानाश्रित्य कृताः कारिकाः।

## (१) पाणिनि-पूर्वजा वैयाकरणाः

### (क) महाभाष्ये स्मृताः

आदौ वक्ता शिवो ज्ञेयो बृहस्पतिस्तदन्तरम् ।
तत इन्द्रः सवायुश्च भरद्वाजस्ततः परम् ॥ १
ततश्च मुनयः सर्वे चक्रुः शास्त्रं यथामति ।
भागुरिः काशकृत्स्नश्च पौष्करसादिरेव च ॥ २
व्याघ्रपाद् शन्तनुर्व्याडिश्चारायणश्च शौनकिः ।
माध्यन्दिनिस्तथा रौढिर्गौतमः षोड़शस्तथा ॥ ३
अष्टके तु न ते प्रोक्ता भाष्यादिषु स्मृताः पुनः ।
पाणिनिपूर्व्वजा एते सम्प्रदायप्रवर्त्तकाः ॥ ४

### (ख). अष्टके स्मृताः

आपिशालिस्तु काश्यपो गार्ग्यश्च गालवस्तथा ।
चक्रवर्मा भरद्वाजस्तथा च शाकटायनः ॥ १
स्फोटायनश्च शाकल्यः सेनकश्च तथा दश ।
पाणिनिना स्मृताः सूत्रे तत्पूर्व्वजा इमे मताः ॥ २

### (ग) प्रातिशाख्ये स्मृताः

अग्निवेश्यः स्मृतस्तत्र चाग्निवेश्यायनस्तथा ।
स्मृतश्चान्यतरेयोऽपि तथागस्त्यः स्मृतः पुनः ॥ १
इन्द्रात्रेयौ स्मृतौ तद्वत् स्मृत उख्यस्तथैव च ।
तथोत्तमोत्तरीयश्च स्मृत औदव्रजिः पुनः ॥ २
औपशविः स्मृतस्तत्र तथा च काण्डमायनः ।
कात्यायनस्तथा काण्वः कौण्डिन्य-काश्यपो स्मृतौ ॥ ३
गार्ग्यः कोहलिपुत्रश्च जातुकर्ण्यश्च गौतमः ।
तैत्तीरियस्तथा तैत्तीरियकश्च महामुनिः ॥ ४
दाल्भ्यो नैगीश्च पञ्चालो नकुलमुख-पाणिनी ।
पौष्करसादिपञ्चालौ माक्षि-माक्षायनौ स्मृतौ ॥ ५
बृहस्पतिश्च बाभ्रव्यो ब्रह्मा भारद्वाजस्तथा ।
भरद्वाजश्च माक्षव्यो माचाकीयस्तथा मुनिः ॥ ६
माण्डूकेयः स्मृतस्तत्र माध्यन्दिनस्तथा स्मृतः ।
मीमांसकश्च यास्कश्च स्मृतश्च वाड़वीकरः ॥ ७

व्याड़ि-वाल्मीकि-वात्मप्र-वेदमित्राः स्मृताः पुनः ।
स्मृतौ शाकलशाकल्यौ स्मृतश्च शाकटायनः ॥ ८
शाङ्खमित्रिः स्मृतश्चापि शाकल्यस्य पिता तथा ।
शूरवीरः स्मृतश्चैव शूरवीरतनुस्तथा ॥ ९
शाङ्खायनः स्मृतस्तत्र शैत्यायनस्तथा स्मृतः ।
स्मृतः स्थविरकौण्डिन्यः शाकल्य-स्थविरस्तथा ॥ १०
सांकृत्यश्च स्मृतस्तद्वत् हारीतश्च स्मृतस्तथा ।
ऊनषष्टिः स्मृता एते प्रातिशाख्ये महाजनाः ॥ ११

## (२) पाणिनिस्तत्सम्प्रदायश्च

### पाणिनिः

पाणिनिर्भगवान् साक्षाद् आविर्भुतो महीतले ।
विनिर्ममे महच् शास्त्रमिह लोकहिताय च ॥ १
अष्टाध्यायी च तच्छास्त्रम् अष्टकमित्यपि स्मृतम् ।
शास्त्रमेतत्समं लोके न भूतो न भविष्यति ॥ २
दाक्षी तस्य मातुर्नाम नात्र च संशयः स्थितः ।
स्थितं हि वचनं तत्र "दाक्षीपुत्रकृते नये" ॥ ३
पणिनश्च पिता तस्य केचिदेवं च मन्वते ।
पणिन इति शब्दात्तु पाणिनिरिति लभ्यते ॥ ४
शलङ्को हि पिता तस्य प्राहुरेवं पुनः परे ।
शालङ्किरिति नाम्नापि ज्ञायते पाणिनिर्भुवि ॥ ५
शलङ्को वा पिता तस्य पणिनो वा पिता पुनः ।
विषये च पुनस्तस्मिन् न निश्चयः स्थितः क्वचित् ॥ ६
दाक्षी तस्य मातुर्नाम न तत्र संशयः स्थितः ।
एतन्मतं भवेद् ग्राह्यम् अन्यत् स्याद्वा यथा तथा ॥ ७
शालातुर इति ग्रामो वाहीके च स्थितः पुरा ।
तत्र हि पाणिनेर्जन्म इति च विदुषां मतम् ॥ ८
शतद्रुश्च नदी तत्र सिन्धुस्तत्र नदी पुनः ।
तयोर्मध्ये स्थितो देशो वाहीक इति कथ्यते ॥ ९
भारते पश्चिमे भागे स हि देशः स्थितः पुरा ।
इदानीं देशभागेन पाकिस्थाने गतो हि सः ॥ १०

आविर्भावो कदा तस्य न तद्ध ज्ञातं सुनिश्चयम् ।
विदुषां हि मते भेदो विषमस्तत्र वर्त्तते ॥ ११
नवमं शतकं तत्र खीष्टात् पूर्व्वं गतं खलु ।
तस्मिन् काले मुनेर्जन्म मतमेतत् सतामिह ॥ १२

कात्यायनः

काले तत्र च शास्त्रस्य पूर्त्तिरासीत् प्रयोजनम् ।
वार्त्तिकानि तदर्थञ्च कात्यायनश्चकार ह ॥ १
त्रीणि शतानि वर्षाणि पाणिनेः स परो मतः ।
षष्ठं च शतकं तस्मात् खीष्टात् पूर्व्वं भवेद्धि सः ॥ २
स च दक्षिणादेशीय इति हि विदुषां मतम् ।
"प्रियतद्धिता"श्चेति च भाष्येण सूचितं तथा ॥ ३

पतञ्जलिः

चकार च महाभाष्यं महामुनिः पतञ्जलिः ।
सूत्राणां वार्त्तिकानाञ्च भाष्यं तत् परमं महत् ॥ १
एतेन सदृशं भाष्यं न भूतो न भविष्यति ।
सर्व्वेषां मूर्द्धनि भाष्यमद्यापि च विराजते ॥ २
नाम हि गोणिकापुत्रो दृश्यते च महामुनेः ।
मातुर्नाम गोणिकासीद् एवं खलु प्रतीयते ॥ ३
गोनर्द्दीय इति नाम दृश्यते च मुनेः पुनः ।
गोनर्द्दो हि मुनेर्देश एव खलु प्रतीयते ॥ ४
गोनर्द्दो वा स्थितः कुत्र न ज्ञायते सुनिश्चयम् ।
अयोध्यां निकषा क्वचित् भवेदिति सतां मतम् ॥ ५
प्रादुर्भूतो महामुनिः कात्यायनात् परं खलु ।
द्वितीयं शतकं कालः खीष्टात् पूर्व्वं मुनेरिह ॥ ६

अष्टके

वृत्तिकाराः

गार्णिनिश्च तथा व्याडिः श्वोभूतिर्माथुरस्तथा ।
कुणिर्वररुचिस्तद्वत् देवनन्दी तथैव च ॥ १
चुल्लिभट्टिश्च निल्लूरश्चूर्णिकारश्च वामनः ।
भर्त्रीश्वरो जयादित्यो भागवृत्तेश्च कारकः ॥ २

केशवश्च जयन्तश्च मैत्रेयरक्षितः पुनः ।
शरणश्चेन्दुमित्रश्च भट्टोजिदीक्षितस्तथा ॥ ३
पुरुषोत्तमदेवश्च तथा चाप्पय्यदीक्षितः ।
नीलकण्ठश्च गोपालो विश्वेश्वरस्तथैव च ॥ ४
अन्नंभट्टो दयानन्दो गोकुलश्च महामतिः ।
ओरम्भट्टश्च नैनाय्यो नारायणसुधीः पुनः ॥ ५
रुद्रधरस्तथा तत्र रामचन्द्रस्तथा पुनः ।
उदयनः सदानन्दो लघुवृत्तेश्च लेखकः ॥ ६
उदयङ्करभट्टश्च सप्तत्रिंशन् महायशाः ।
वृत्तिकारा इति ख्याता दाक्षीपुत्रकृते नये ॥ ७

## महाभाष्य टीकाकाराः

टीकाकारा महाभाष्ये भर्तृहरिश्च कैयटः ।
पुरुषोत्तमदेवश्च मैत्रेयश्च महामतिः ॥ १
धनेश्वरो विष्णुमित्रः शेषनारायणस्ततः ।
प्रयागवेङ्कटाद्रिश्च शेषविष्णुस्तथा पुनः ॥ २
नीलकण्ठस्तथा ज्येष्ठकलशश्च सुधीवरः ।
राजन्सिंहस्तथा तत्र सर्व्वेश्वरः सुपण्डितः ॥ ३
कुमारतातयस्तद्वत् नारायणस्ततः परम् ।
शिवरामस्ततो ज्ञेयो यज्वा तिरुमलस्तथा ॥ ४
गोपालश्च ततो ज्ञेयमज्ञातनामकं द्वयम् ।
संख्यातो विंशतिस्तत्र महाभाष्ये कृतश्रमाः ॥ ५

## वृत्तिकाराणां विवरणम्

### (१) पाणिनिः

स्वसूत्राणां स्वयं व्याख्यां चकार पाणिनिर्मुनिः ।
काशिकायां महाभाष्ये तथा संकेतितं स्थितम् ॥ १
अध्याये प्रथमे तत्र पादे तत्र चतुर्थके ।
सूत्रे च प्रथमे भाष्ये प्रमाणंवचनं स्थितम् ॥ २
आरभ्यो"भयथा ही"ति "कार्य्यमि"ति समापितम् ।
तेन व्याख्या द्विधा प्रोक्ता व्याख्याता पाणिनिः पुनः ॥ ३

(२) श्वोभूतिः (३) व्याड़िः

श्वोभूतिः पाणिनेः शिष्यः सूत्रव्याख्यां चकार सः।
न्यासे तु "केचिदि"त्यत्र श्वोभूतिरेव लक्षितः ॥ १
अध्याये सप्तमे तत्र पादे तत्र द्वितीयके।
सूत्रे चैकादशे न्यासे प्रमाणं वर्त्तते खलु ॥ २
तत्रैव दृश्यते व्याड़ेर्नाम पुनः प्रकीर्त्तितम्।
ततश्च गम्यते तावद् व्याड़ेरपि च कर्त्तृता ॥ ३

(४) कुणिः

कैयटेन प्रदीपे तु कुणेर्नाम प्रकाशितम्।
व्याख्याता स्यात् कुणिस्तस्मात् मतमेतद् मनीषिणाम् ॥ १
अध्याये प्रथमे तत्र पादे प्रथमके पुनः।
द्विसप्ततिमिते सूत्रे प्रमाणं तत्र वर्त्तते ॥ २

(५) माथुरीवृत्तिः

अध्याये च चतुर्थके पादे तत्र तृतीयके।
एकोत्तरशते सूत्रे काशिकावचनं स्थितम् ॥ १
माथुरीवृत्तिरित्यादि तत्रैव कथितं पुनः।
माथुवीवृत्तिरित्यासीद् माथुरेन कृता खलु ॥ २

(६) वररुचिः

वररुचिः पुनः सूत्रे टीकामेकां विनिर्ममे।
वार्त्तिकानां न कर्त्ता सः भिन्नो वररुचिर्मतः ॥ १
चत्वारश्च स्मृता शास्त्रे नैको वररुचिः पुनः।
कः किं कुत्र चकारेह न सम्यक् ज्ञायते खलु ॥ २
चकार वार्त्तिकं कश्चित् लिङ्गवृत्तिं पुनः परः।
प्राकृतो च परः कश्चित् कश्चित् परश्च मण्डनम् ॥ ३

(७) देवनन्दी

श्रीदेवी जननी तस्य पिता तस्य च माधवः।
जन्म कर्णाटके "काले" जैन आसीत् स धर्मतः ॥ १
सूत्रे शब्दान्तरन्यासं देवनन्दी विनिर्ममे।
पञ्चमशतकं कालस्तस्य पुनः प्रकीर्त्तितः ॥ २

(८) चुल्लिभट्टिः

चुल्लिभट्टिकृता टीका न्यासे तत्र समुद्धृता ।
मैत्रेयरक्षितेनापि प्रदीपे सा पुनर्धृता ॥ १
हरिनामामृते ग्रन्थे चुल्लिभट्टेः मतं स्मृतम् ।
प्राचीना च ततः टीका चुल्लिभट्टिविनिर्मिता ॥ २

(९) निलूरः

निलूरस्य धृतं नाम देवेन तत् समुच्चये ।
श्रीपतिना च कातन्त्रे परिशिष्टे स्मृतं च तत् ॥ १
प्राचीना हि भवेत् टीका विदुषांश्च तथा मतिः ।
लुप्तो ग्रन्थः स्थितं नाम नाधिकं विद्यते ततः ॥ २

(१०) चूर्णिः

दृश्यते कस्यचिच्च चूर्णेर्नाम पुनः प्रकीर्त्तितम् ।
श्रीपतिना कृते ग्रन्थे परिशिष्टे विशेषतः ॥ १
जगदीशोऽपि तत् ग्रन्थे शब्दशक्तौ ददाति तत् ।
ततश्चूर्णिकृता टीका सूत्रे काचिदतिष्ठत ॥ २

(११) जयादित्यः

काशिकाया प्रणेतासीद् जयादित्य इति स्थितिः ।
सप्तमे मध्यभागे तु तस्य स्थिति विनिश्चिता ॥ १
जयादित्यो जयापीड़ो नान्य इति मतं सताम् ।
काश्मीरे स नृपश्चासीद् वामनः सचिवः पुनः ॥ २
प्रथमे पञ्चके वृत्तिं जयादित्यो विनिर्ममे ।
अध्यायत्रयके शेषे वृत्तिकर्त्ता च वामनः ॥ ३

(१२) वामनः

वामनः काशिकाकर्त्ता त्रिकमन्त्यं चकार सः ।
तस्यापि सप्तम एव कालस्तत्र विनिश्चितः ॥ १

(१३) भागवृत्तिः

भागवृत्तिरिहासीच्च टीका काचिद् गरीयसी ।
उल्लेखः परटीकासु दृश्यते वहुधा ततः ॥ १
स्मृता सा हरदत्तेन देवेन च पुनः स्मृता ।
स्मृता शरणदेवेन पुनः पुनः स्वकर्मणि ॥ २

लुप्ता टीका चिरान्नष्टा इदानीं सा न लभ्यते ।
कः कर्त्ता च पुनः ग्रन्थे तदपि विदितं न हि ॥ ३

(१४) भत्रीश्वरः

आसीद् भत्रीश्वरः कश्चित् सूत्रे व्याख्यां चकार सः ।
वर्द्धमानोऽपि नाम्ना तं स्मरति स्म महोदधौ ॥ १

(१५) भट्टजयन्तः

भट्टश्च जयन्तः सुधीः महानैयायिको मतः ।
वृत्तिं चक्रे स सूत्रेऽपि पाणिनीये नये पुनः ॥ १
आसीच्चन्द्रः पिता तस्य शक्तिस्वामी पितामहः ।
काश्मीरे च जनिस्तस्य नवमे शतके खलु ॥ २

(१६) केशवः

पण्डितः केशवः सूत्रे व्याख्यां काचिद् विनिर्ममे ।
भाषावृत्तौ स देवेन विशेषेण स्मृतः सुधीः ॥ १
रक्षितेन प्रदीपेऽपि तन्नाम यत्नतो धृतम ।
हरिनामामृते ग्रन्थे पुनश्च केशवः स्मृतः ॥ २

(१७) इन्दुमित्रः

व्याख्यानं विदधे सूत्रे तद्वदिन्दुमतीं पुनः ।
इन्दुमित्रः सुधीः कर्त्ता विट्ठलेन स्मृतश्च सः ॥ १

(१८) मैत्रेयरक्षितः

मैत्रेयरक्षितश्चक्रे दुर्घटवृत्तिमष्टके ।
स बङ्गीयः सुधीर्वौद्धो व्याकरणे धुरन्धरः ॥ १
द्वादशशतके तस्य जनिरासीदिति स्थितिः ।
मैत्रेयो रक्षितो वेति वहुधावरजैःस्मृतः ॥ २

(१९) पुरुषोत्तमदेवः

पुरुषोत्तमदेवोऽपि सूत्रे व्याख्यां विनिर्ममे ।
भाषावृत्तिरिति ख्याता तस्य टीका सुधीजनैः ॥ १
बङ्गप्रान्ते स्थितः सुधी वौद्धश्चासीत् स धर्मतः ।
द्वादशशतकं तस्य काल इह प्रकीर्त्तितः ॥ २

(२०) शरणदेवः

कर्त्ता दुर्घटवृत्तेश्च शरण इह कीर्त्तितः ।
स चापि धर्मतो वौद्ध इति सतां विनिश्चयः ॥ १

दशमं शतकं तत्र नवति पञ्च तत्र च ।
शकवर्षे तथाभूते टीका तेन विनिर्मिता ॥ २

(२१ भट्टोजिदीक्षितः

वृत्तिं सुमहतीं चक्रे भट्टोजिदीक्षितः सुधीः ।
अष्टके तत्कृता वृत्तिः कथ्यते शब्दकौस्तुभः ॥ १
जन्म तस्य महाराष्ट्रे जात्या पुनः स ब्राह्मणः ।
पिता लक्ष्मीधरस्तस्य रङ्गोजिस्तत्सहोदरः ॥ २
पुत्रो वीरेश्वरस्तस्य भानुजिश्च तथापरः ।
हरिस्तस्य प्रपौत्रश्च वीरेश्वरेसुतो हि सः ॥ ३
कौण्डभट्टश्च भ्रातृव्यः शेषकृष्णो गुरुस्तथा ।
षोड़शशतकं तस्य काल इह च कीर्त्तितः ॥ ४

(२२) अप्पयदीक्षितः

शूत्रे सूत्रप्रकाशस्य कर्त्ता चाप्पय्यदीक्षितः ।
षोड़शशतकं तस्य कालो वुधैर्विनिश्चितः ॥ १
रङ्गराजः पिता तस्य रामाचार्य्यः पितामहः ।
सप्ततिश्च तथा द्वौ च जीवत्कालः प्रकीर्त्तितः ॥ २

(२३) नीलकण्ठः

लिलेख दीपिकां शास्त्रे नीलकण्ठो महामतिः ।
षोड़शशतकं तस्य पुनः कालः प्रकीर्त्तितः ॥ १

(२४) अन्नंभट्टः

अन्नंभट्टो मिताक्षरां सूत्रे चक्रे सुधीवरः ।
षोड़शशतकं तस्य कालो वुधैः स्थिरीकृतः ॥ १

(२५ विश्वेश्वरसूरि पर्व्वतीयः

सुधानिधिं चकारेह सूत्रे विश्वेश्वरः सुधीः ।
षोड़शशतकं तस्य कालो वुधैर्विनिश्चितः ॥ १
लक्ष्मीधरः पिता तस्य पर्व्वतीयः स कथ्यते ।
द्वात्रिंशद्वा चतुस्त्रिंशत्तस्य चायुः पुनर्भुवि ॥ २

(२६) गोकुलचन्द्रः

वैश्यकुले समुत्पन्नो गोपाल इति पण्डितः ।
वृत्तिं क्षुद्रां चकारेह सूत्रे च पाणिनेः सुधीः ॥ १

बुधसिंहः पिता तस्य सुशीला जननी पुनः ।
शतके चोनविंशे स जीवति स्म पुनर्भुवि ॥ २

(२७) ओरम्भट्टः

ओरम्भट्टकृता टीका दीपिकेति निगद्यते ।
अजायत महाराष्ट्रे पश्चात् काशीमुवास सः ॥ १
शतके चोनविंशे स जीवति स्म पुनः सुधीः ।
अध्यापनां समाश्रित्य वाराणसीमुवास सः ॥ २

(२८) दयानन्दः

भाष्यं चक्रे दयानन्दः सूत्रे च पाणिनेर्मुनेः ।
शतके सः पुनर्विंशे जीवति स्म पुनर्भुवि ॥ १

(२९) अप्पनैनार्य्यः

"अप्पननैनार्य्येनेह वेङ्कटाचार्य्यसुनुना ।
प्रक्रियादीपिका मेयं कृता वात्स्येन धीमता" ॥ १

(३०) नारायणसुधीः

गोविन्दपुरवास्तव्यो नारायणसुधीः पुनः ।
अष्टाध्यायीप्रदीपं वै चकारेह सुविस्तृतम् ॥ १

(३१) रुद्रधरः

रुद्रधरः पुनः सूत्रे व्याख्यां काचिद् विनिर्ममे ।
मैथिलः स इति ज्ञातो न ज्ञातमधिकं पुनः ॥ १

**महाभाष्ये टीकाकाराः**

भर्तृहरिः

चतुर्थे शतके तत्र भर्तृहरिरजायत ।
वसुरातो गुरुस्तस्य भाष्ये टीकां चकार सः ॥ १
दीपिका नामतष्टीका भाष्ये तस्य प्रवर्त्तते ।
ग्रन्थो वाक्यपदीयश्च तस्यैवेति मनीषिणः ॥ २
नैको भर्तृहरिर्लोके बहवः कीर्त्तिता इह ।
तस्य नाम्ना चलन्तीह भट्टिकाव्यादयः पुनः ॥ ३

कैयटः

जैयटस्तु पिता यस्य यस्य महेश्वरो गुरुः ।
यस्योद्योतकरः शिष्यः स कैयटो महामतिः ॥ १

एकादशे स्थितिस्तस्य काश्मीरे च जनिर्मता ।
महाभाष्ये प्रदीपस्य स कर्त्ता कीर्त्तितः खलु ॥ २

मैत्रेयरक्षितः

मैत्रेयरक्षितो वौद्धः स बङ्गीयः प्रकीर्त्तितः ।
द्वादशशतकं तस्य काल इह विनिश्चितः ॥ १
वहुधा सीरदेवेन तस्य नाम प्रकीर्त्तितम् ।
रक्षितेन महाभाष्ये टीका काचित् विनिर्मिता ॥ २

ज्येष्ठकलशः

न ज्येष्ठकलशः स्वयं टीकां भाष्ये विनिर्म्ममे ।
तच्छिष्येण तदादेशात् टीका भाष्ये विनिर्मिता ॥ १
द्वादशे शतके तस्य जनिरिति मतं सताम् ।
स च काश्मीरको विद्वान् न कश्चित्तत्र संशयः ॥ २

पुरुषोत्तमदेवः

बङ्गप्रान्ते जनिस्तस्य वौद्धो विद्वान् इति स्थितिः ।
द्वादशशतकं तस्य काल इह विनिश्चितः ॥ ३
"प्राणपणा" महाभाष्ये तस्य कृतिरिति स्थिरम् ।
अपरे वहवो ग्रन्था विदुषा तेन निर्मिताः ॥ २

धनेशः

चिन्तामणिर्महाभाष्ये तस्य ग्रन्थ इति स्थितिः ।
स गुरुर्वोपदेवस्य त्रयोदशे स्थितः सुधीः ॥ १

शेषनारायणः

वासुदेवः पिता तस्य अनन्तश्च पितामहः ।
शतके षोड़शे जातः शेषनारायणः सुधीः ॥ १
सूक्तिरत्नाकरस्तस्य महाभाष्ये कृतिः स्मृता ।
शेषवंशधराः सर्व्वे व्याकरणे विचक्षणाः ॥ २

विष्णुमित्रः

विष्णुमित्रः स्मृतो विद्वान् दीक्षितेन तु कौस्तुभे ।
तस्य कृतिर्महाभाष्ये भवति च क्षीरोदरः ॥ १

नीलकण्ठः

पिता च वरदेश्वरो रामचन्द्रः पितामहः ।
षोड़शे शतके जातो नीलकण्ठो महामतिः ॥ १

विवेकं स महाभाष्ये कृतवानिति निश्चयः ।
बहवश्चापरे ग्रन्थाः शास्त्रे तेन विनिर्मिताः ॥ २

शेषविष्णुः

महादेवः पिता तस्य कृष्णसूरिः पितामहः ।
जन्म सप्तदशे तस्य टीका भाष्ये प्रकाशिका ॥ १
शेषवंशे सुविख्याते तस्य जनिरिति स्थितिः ।
शेषविष्णुः स नाम्ना च नाधिकं ज्ञायते ततः ॥ २

शिवरामेन्द्रः

स्थितः स शिवरामेन्द्रः षोडशशतकात् परम् ।
रत्नाकरो महाभाष्ये तस्य टीका प्रकीर्त्तिता ॥ १

प्रयागवेङ्कटाद्रिः

प्रयागवेङ्कटाद्रिश्च भाष्ये टीकां विनिर्म्ममे ।
तद्विद्वन्मुखभूषणमिति नाम्ना प्रशस्यते ॥ २

तिरुमलयज्वा

मल्लययज्वनः पुत्रो यज्वा तिरुमलः सुधीः ।
टीकामनुपदां चक्रे सप्तदशे महामतिः ॥ १
कुमारतातयः कश्चिद् भाष्ये टीकां विनिर्ममे ।
पारिजाते स्वयं सुधीः संकेतं कृतवान् यतः ॥ १

राजनृसिंहः

राजनृसिंहो महाभाष्ये टीकां काचिद् विनिर्ममे ।
बृहती नाम सा टीका न ज्ञातमधिकं ततः ॥ १

गोपालकृष्णशास्त्री

गोपालकृष्णशास्त्री च चिन्तामणिं विनिर्ममे ।
अष्टादशे जनिस्तस्य न च ज्ञातं ततोधिकम् ॥ १

सर्व्वेश्वरदीक्षितः

सर्व्वेश्वरो महाभाष्ये स्फूर्त्तिं चक्रे इति स्थितिः ।
केचिदाहुः प्रदीपस्य टीका स्फूर्त्ति नं संशयः ॥ १

नारायणः

विवरणं महाभाष्ये नारायणश्चकार च ।
न तस्य ज्ञायते कालो न वा देशः कुतश्चनः ॥ १

लभ्यते च महाभाष्ये टीकाद्वयं परं पुनः ।
न कर्त्तृता तयो ज्ञाता ततश्चेह विरम्यते ॥ १

### प्रदीपव्याख्या

चिन्तामणि सुधीर्विद्वान् "प्रकाशस्य" स कारकः ।
"उद्योतनं" कृतं नागनाथेन च महाधिया ॥ १
"विवरणं" चकारेह रामचन्द्रः सरस्वती ।
अकरोदीश्वरानन्दो "विवरणं" परं पुनः ॥ २
अन्नंभट्टस्तथा धीमानु"द्योतनं" विनिर्ममे ।
नागेशेन कृतं यच्च त"दुद्योत" इहोच्यते ॥ ३
"प्रकाशिकां" पुनः टीकां प्रणिनाय प्रवर्त्तकः ।
"विवरणं" परं चात्र नारायणो लिलेख च ॥ ४
आदेन्नस्य स्थिता "स्फूर्त्ति" "स्तथा" सर्व्वेश्वरस्य च ।
मल्लयः कृतवान् "व्याख्यां" तथैव रामसेवकः ॥ ५
हरिरामकृता "व्याख्या" प्रदीपे च विराजते ।
अज्ञातनामकः कश्चित् पुनः "व्याख्यां" चकार च ॥ ६

## काशिकाप्रस्थानम्

### जिनेन्द्रबुद्धिः-न्यासः

बौद्धो जिनेन्द्रबुद्धिः स काशिकायां व्यचेष्टत ।
तत्कृता काशिकाटीका न्यास इति निगद्यते ॥ १
विवरणपञ्जिका च सा टीका पुनरुच्यते ।
केवलं पञ्जिका वापि विवरणमथापि वा ॥ २
विद्वद्भिः सा प्रशंसिता कृत्तिमध्ये पुरातनी ।
तस्याः कृतेरिह कालः सप्तमं शतकं मतम् ॥ ३

### न्यासे व्याख्या-तन्त्रप्रदीपः

न्यासेऽपि बभुवुः टीकाः काले पुनरनेकशः ।
तासु तन्त्रप्रदीपश्च कश्चिदन्यतमः स्मृतः ॥ ४
रक्षितेन कृतो ग्रन्थो विशेषेण समादृतः ।
द्वादशशतकं तस्य कृतिकालो विनिश्चितः ॥ ५

### तन्त्रप्रदीपव्याख्या

तनुते स्म विवरणं प्रदीपे नन्दनः पुनः ।
ततः पुनः प्रभां चक्रे सनातनः सुधीवरः ॥ ६

अज्ञातनामकः कश्चिदालोकं च पुनर्दधौ ।
एवं पुनः प्रदीपेऽपि टीकात्रयमजायत ॥ ७

मल्लिनाथः-न्यासोद्योतः

न्यासोद्योतं पुनश्चक्रे मल्लिनाथस्त्रयोदशे ।
काव्ये टीकां विधायेह व्याकरणे व्यचेष्टत ॥ ८

नरपतिमहामिश्रः-न्यासप्रकाशः

नरपतिमहामिश्रो व्याकरणे पारङ्गमः ।
विद्यापतिप्रेरितः सन् प्रकाशं च दधौ पुनः ॥ ९

पुण्डरीकाक्षविद्यासागरः टीका

पण्डितपुण्डरीकाक्षः न्यासे टीकां चकार च ।
स विद्यासागरः ख्यातो बङ्गीयो वा भवेत् पुनः ॥ १०

रत्नमतिः-टीका

रत्नमतिः पुनः कश्चित् न्यासे टीकां विनिर्म्ममे ।
अमरटीकासर्व्वस्वे विशेषेण स्मृतो हि सः ॥ ११

हरदत्तः-पदमञ्जरी

तत्रास्ति दक्षिणे देशे चोलाख्यं मण्डलं महत् ।
तदन्तरा प्रवहति कावेरी सरितां वरा ॥ १३
"तातं पद्मकुमाराख्यं प्रणम्याम्बां श्रियं तथा ।
ज्येष्ठं चाग्निकुमाराख्यमाचार्य्यमपराजितम् ॥"
विदधे पदमञ्जरीं हरदत्तो विचक्षणः ।
अद्यापि सा महाटीका महीतले महीयते ॥ १४
हरदत्तः सुधीश्रेष्ठः व्याकरणे धुरन्धरः ।
स्वयमाह स्वटीकायां परिचयं यथायथम् ॥ १५
"प्रक्रियातर्कगहनप्रविष्टो हृष्टमानसः ।
हरदत्तहरिः स्वैरं विहरन् केन वार्य्यते ॥"
"एवं प्रकटितोऽस्माभिर्भाष्ये परिचयः परः ।
तस्य निःशेषतो मन्ये प्रतिपत्तापि दुर्लभः ।"
इहाष्टमे स्थितः सुधीरिति कालविदां मतम् ।
केचिदाहुरेकादशे जीवति स्म हरः पुनः ॥ १६

पदमञ्जरीव्याख्या

आश्रित्य मञ्जरीग्रन्थं रङ्गनाथः सुधीवरः ।
मकरन्दं ततानेह चोले सप्तदशे पुनः ॥ २०
कुङ्कुमविकाशं तत्र शिवभट्टो दधाविह ।
सा पदमञ्जरीव्याख्या न ज्ञातमधिकं ततः ॥ २१

विद्यासागरमुनिः-प्रक्रियामञ्जरी

प्रक्रियामञ्जरीं चक्रे स विद्यासागरो मुनिः ।
श्वेतगिरिगुरुस्तस्य स्थित एकादशे सुधीः ॥ २२

इन्दुमित्रः—अनुन्यासः

इन्दुमित्रश्चकारेह न्यासे टीकां परां ततः ।
अनुन्यासस्तदाख्या च स्थित एकादशे सुधीः ॥ २३

अज्ञातकर्तृकः-महान्यासः

चक्रे पुनर्महान्यासमज्ञातनामको जनः ।
सा कृतिर्द्वादशे स्थिता नापरं ज्ञायते ततः ॥ २४

रामदेवमिश्रः-वृत्तिप्रदीपः

शतके द्वादशे तत्र रामदेवः सुपण्डितः ।
टीकां वृत्तिप्रदीपञ्च न्यासे चक्र इति स्थितिः ॥ २५

वृत्तिरत्नः

चिकित्सा

वृत्तिरत्नश्च चिकित्सा पुनष्टीकाद्वयं स्थितम् ।
अज्ञातकर्तृकौ तौ द्वौ न ज्ञातं विशदं तयोः ॥ २६

प्रक्रियाग्रन्थाः

(१) रामचन्द्रः-प्रक्रियाकौमुदी

शेषवंशसमुत्पन्नो रामचन्द्रो महामतिः ।
प्रक्रियाकौमुदीं चक्रे प्रक्रियासु सहायिकाम् ॥ १
कृष्णाचार्य्यः पिता तस्य नृसिंहश्च सुतः पुनः ।
शतके षोड़शे प्राप्ते राजते स्म सुधीरिह ॥ २

कौमुदीव्याख्या

(१) शेषकृष्णः-प्रकाशः

शिष्येण शेषकृष्णेन प्रकाश इह निर्मितः ।
षोड़शशतकं तस्य जीवत्कालो विनिश्चितः ॥ १

(२) विट्ठल:-प्रसाद:

रामचन्द्रस्य पौत्रेण विट्ठलेन महाधिया ।
व्याख्याग्रन्थः प्रसादश्च विरचितः सतां मुदे ॥

(३) चक्रपाणि:-प्रदीपः

चक्रपाणिः-पुनश्चक्रे प्रदोपमिह यत्नतः ।
षोड़शशतकं तस्य कालः पुनः स्थिरीकृतः ॥

(४) वारणावनेश:-अमृतस्मृतिः

श्रीवारणावनेशोपि टीकां काश्चिद् विनिर्ममे ।
अमृतस्मृतिःनाम्ना सा प्रक्रियायां प्रवर्त्तते ॥

(५) विश्वकर्मा शास्त्री-व्याकृतिः

प्रक्रियाव्याकृतिं चक्रे विश्वकर्मा सुधीवरः ।
दामोदरः पिता तस्य भीमसेनः पितामहः ॥

(६) नृसिंहः-व्याख्यानम्

नृसिंहपण्डितश्चक्रे व्याख्यानं कौमुदीनये ।

(७) जयन्तः-तत्त्वचन्द्रः

तत्त्वचन्द्रं चकारेह जयन्तश्च महामतिः ॥

(८) विद्यानाथ:-रञ्जनम्

विदधे रञ्जनं तत्र विद्यानाथो मनोरमम् ।

(९) वरदराज:-विवरणम्

विवरणं पुनश्चक्रे वरदराजपण्डितः ॥

(१०) अज्ञातनामकः-दर्पणम्

अज्ञातनामकः कश्चिद् दर्पणं च विनिर्ममे ।
अभवन् प्रक्रियाटीका वहुशश्च यथोदितम् ॥

सिद्धान्तकौमुदी

भट्टोजिदीक्षितः

अजायत महाराष्ट्रे भट्टोजिदीक्षितः सुधीः ।
सिद्धान्तकौमुदीग्रन्थं चकार स महामतिः ॥ १

इदानीमपि स ग्रन्थो भजते प्रसरं वहु ।
पठनं पाठनं तस्य सममद्य प्रवर्त्तते ॥ २

सर्व्वत्र भारते तस्य प्रचारो दृश्यते वहु ।
व्याकरणमधीते यः स कौमुदीमधीयते ॥ ३

लक्ष्मीधरः पिता तस्य रङ्गोजिस्तत्सहोदरः ।
वीरेश्वरः सुतस्तस्य भानुजिरपरः सुतः ॥ ४
वीरेश्वरसुतो हरिस्तस्य पौत्रः प्रकीर्त्तितः ।
शेषकृष्णः सुविख्यातस्तस्य गुरुरिहेरितः ॥ ५
पञ्चाशदुत्तरे तत्र शतके तु चतुर्द्दशे ।
भट्टोजिदीक्षितो विद्वान् जीवति स्म धरातले ॥ ६
आश्रित्य कौमुदीं लोके बहुटीका विराजिताः ।
तासामहं यथाशक्ति वच्मि विवरणं परम् ॥ ७

(१) भट्टोजिदीक्षितः-प्रौढ़मनोरमा

भट्टोजिदीक्षितः स्वयं स्वके टीकां विनिर्ममे ।
प्रौढ़मनोरमा तस्य विद्वद्भिर्बहु शस्यते ॥ ८

प्रौढ़मनोरमाखण्डनम्

प्रौढ़मनोरमा तत्र खण्डिता च पुनः पुनः ।
जगन्नाथकविस्तस्याश्चकार कुचमर्द्दनम ॥ ९
मनोरमां ममर्द्देह चक्रपाणिः पुनस्ततः ।
वीरेश्वरसुतः शेषे ममर्द्द तामशेषतः ॥ १०

(२) ज्ञानेन्द्रसरस्वती तत्त्वबोधिनी

ज्ञानेन्द्रः कृतवान् टीकां सा तत्त्वबोधिनी स्मृता ।
रामानन्द्रो गुरुस्तस्य जातः षोड़शके सुधीः ॥ ११

उपटीका-गूढ़ार्थदीपिका

गूढ़ार्थदीपिकां चक्रे नीलकण्ठोगुरोर्नये ।
सा तत्त्वबोधिनीव्याख्या पुनर्लोके महीयते ॥ १२

(३) नीलकण्ठवाजपेय-सुखबोधिनी

मूलेऽपि कौमुदीग्रन्थे नीलकण्ठो व्यचष्टत ।
सा सुखबोधिनीं चक्रे टीका लोके प्रशस्यते ॥ १३

(४) रामानन्दः तत्त्वदीपिका

मधुकरसुतो विद्वान् रामानन्दः सुधीवरः ।
विदधे तत्त्वदीपिकां दीक्षितेन कृते नये ॥ १४

(५) नागेशः-(१) वृहच्छब्देन्दुशेखरः (२) लघुशब्देन्दुशेखरः

शब्देन्दुशेखरं चक्रे नागेशश्च महामतिः ।
अपि लघु वृहच्चापि द्वयमेव विनिर्ममे ॥ १५

(६) रामकृष्णः-रत्नाकरः

तिरुमलः पिता यस्य वेङ्कटाद्रिः पितामहः ।
स सुधी रामकृष्णोऽपि रत्नाकरं विनिर्म्ममे ॥ १६

(७) रङ्गनाथयज्वा-पूर्णिमा

सिद्धान्तकौमुदीग्रन्थे पूर्णिमायाश्च कारकः ।
रङ्गनाथः सुधीर्विद्वान् यज्वा पुनरुपाधिना ॥ १७

(८) वासुदेवदीक्षितः-बालमनोरमा

बालमनोरमां चक्रे वासुदेवः-सुधीवरः ।
इदानीमपि सा टीका पठ्यते पाठ्यते बुधैः ॥ १८
ताञ्जोरे दक्षिणे वास आसीदष्टादशे सुधीः ।
सुगमा सरला टीका कृता तेन महीयते ॥ १९

(९) कृष्णमिश्रः-रत्नार्णवः

रत्नार्णवं पुनश्चक्रे कृष्णमिश्रस्ततो नये ।
तस्यैव कौस्तुभे टीका प्रदीप इति कथ्यते ॥ २०

(१०) तिरुमलद्वादशाहयाजी-सुमनोरमा

कृता तिरुमलेनेह व्याख्यानं सुमनोरमा ।
पुत्रेण रामकृष्णेन रत्नार्णवः पुनः कृतः ॥ २१

(११) रामकृष्णः

शेषवंशे समुत्पन्नो रामकृष्णः सुधीवरः ।
चकार कौमुदीग्रन्थेः टीकां काञ्चिदिति स्थितिः ॥ २२
तोप्पलदीक्षितश्चक्रे प्रकाशं कौमुदीनये ।
चक्रे लक्ष्मीनृसिंहश्च विलासञ्च ततः परम् ॥ २३
रत्नाकरं तथा चक्रे शिवरामः सरस्वती ।
बालबोधं पुनश्चक्रे व्यूढमिश्रस्ततः परम् ॥ २४
मानसरञ्जनीं चक्रे तथा तत्र च वल्लभः ।
इन्द्रदत्तस्तथा चक्रे फक्किकायाः प्रकाशनम् ॥ २५
अज्ञातकर्तृकाः टीकाः सन्ति चात्र नये पुनः ।
शब्दरूसार्णवस्तत्र तथा च शब्दसागरः ॥ २६
लघुमनोरमा तद्वत् प्रकाशश्च सुधाञ्जनम् ।
न तेषां ज्ञायते कालो न वा देशः कुतश्चन ॥ २७

## अन्ये वैयाकरणाः

## मुग्धबोधव्याकरणम्

देवगिरौ महाराष्ट्रे वहति वरदा नदी ।
तदन्तिके स्थितो ग्रामः सार्थग्रामः स कथ्यते ॥ १
तत्र जातः कविर्विद्वान् वोपदेवो महामतिः ।
व्याकरणे प्रवक्ता सः सम्प्रदायप्रवर्त्तकः ॥ २
केशवो जनकस्तस्य वैद्यशास्त्रे पारङ्गमः ।
टीकाकर्त्ता महाभाष्ये धनेशस्तस्य शिक्षकः ॥ ३
देवगिरौ महाराष्ट्रे हेमाद्रिर्नृपतिस्तदा ।
आसीन् मन्त्री तदाश्रये वोपदेवः कविर्महान् ॥ ४
मुग्धबोधः कृतिस्तस्य कविकल्पद्रुमस्तथा ।
बङ्गेषु पठ्यते तस्य व्याकरणं विशेषतः ॥ ५
जातो विद्वान् महाराष्ट्रे शतके च त्रयोदशे ।
तत्रापि प्रथमो भागस्तस्य कालः प्रकीर्त्तितः ॥ ६
क्रमशो मुग्धबोधेऽपि टीका जाता अनेकशः ।
तासामहं यथाप्राप्तं विवरणं ददामि च ॥ ७
भट्टनन्दकिशोरश्च टीकामेकां विनिर्ममे ।
न तस्या ज्ञायते नाम चतुर्द्दशे कृता च सा ॥ ८
मुग्धबोधप्रदीपश्च टीकान्तरं ततोऽभवत् ।
न तस्य ज्ञायते कर्त्ता पञ्चदशे कृतो हि सः ॥ ९
टीकाकारास्तथा चान्ये मुग्धबोधे स्थिता इह ।
रामानन्दस्तथा तत्र देवीदासस्ततः स्थितः ॥ १०
काशीश्वरस्तथा विद्यावागीशश्च स्थितः पुनः ।
रामभद्रः परश्चात्र भोलानाथस्तथा परः ॥ ११
ते सर्व्वे मुग्धबोधे च टीकां चक्रुयथामति ।
ना तेषां ज्ञायते कालो न वा देशः कुतश्चन ॥ १२
कश्चिद् विद्यानिवासस्तु मुग्धबोधे श्रुतः पुनः ।
दुर्गादासः कृतेस्तस्य कथयति स्वके नये ॥ १३
दुर्गादासश्च बङ्गीयः सप्तदशे स्थितः सुधीः ।
पुत्रः स वासुदेवस्य नवद्वीपनिवासिनः ॥ १४

रामशर्मा च काशीशो गोविन्दो वल्लभःस्मृतः।
कार्त्तिकेयस्तथा तत्र स्मृतश्च मधुसूदनः॥ १५
केचिच्च परिशिष्टेऽपि कृतवन्तः श्रमं वहु।
तेषु नन्दकिशोरश्च काशीश्वरः श्रुताविह॥ १६
रामश्च तर्कवागीशः परिभाषां समादधे।
सप्तदशे स्थितिस्तस्य कालविदां विचारतः॥ १७

### कातन्त्रव्याकरणम्

शर्व्ववर्मा स्मृतः सूत्रे कात्यायनः स्मृतः कृति।
श्रीपतिः परिशिष्टे च विजयश्चोत्तरे स्मृतः॥ १
कर्त्तृचतुष्टयं शास्त्रं कातन्त्रं च निगद्यते।
समृद्धं स्यात् यथा शास्त्रं तथा वुधैर्विचेष्टितम्॥ २

### वृत्तिकाराः

#### शर्व्ववर्मा

कातन्त्रे शर्व्वमर्मापि वृत्तिकारः प्रकीर्त्तितः।
वृहद्वृत्तिस्तदाख्येति सा प्राचीना भवेदिह॥ १

#### वररुचिः

वररुचिस्तथा वृत्तिं चकारेह पुनर्मतम्।
चैत्रकुटी तदाख्या स्यात् तथा वुधैः प्रदर्शिता॥ २

#### दुर्गसिंहः

अनेके दुर्गसिंहाश्च व्याकरणे प्रकीर्त्तिताः।
कातन्त्रे कः पुनः कर्त्ता तदद्यापि न निश्चितम्॥ १
"दुर्गसिंहोऽथदुर्गात्मा दुर्गो दुर्गप इत्यपि।"
वहुधा दृश्यते नाम दुर्गस्येह महात्मनः॥ २
इह विक्रमसंवत्तु यस्य नाम्ना प्रतिष्ठितम्।
स विक्रमः सहोदरो दुर्गस्येति मतं पुनः॥ ३
दुर्गसिंहकृता वृत्तिः कातन्त्रे वहु दृश्यते।
अद्यापि सा महावृत्तिर्नरिच्यते परैरिह॥

#### दुर्गवृत्तिव्याख्या

दुर्गसिंहः परश्चान्यः पुनर्वृत्तौ व्यचेष्टत।
वृत्तिकारात् पुनः दुर्गाद् भिन्नो दुर्गो भवेद्धि सः॥

केचिद् दुर्गात् परं "गुप्त" योजयन्ति च नामनि ।
तेषां मते भवेन्नाम दुर्गगुप्तश्च पूर्णतः ॥
केचिदाहुः स्वयं दुर्गः स्ववृत्तौ च ववौ पुनः ।
केचिदाहुः परो दुर्गं परे दुर्गो प्रशिश्रिये ॥

उग्रभूतिः

चक्रे शिष्यहितन्यासमुग्रभूतिः कलापके ।
एकादशे स्थितिस्तस्य तथा बुधैर्विनिश्चितम् ॥

त्रिलोचनदासः

कातन्त्रपञ्जिकां चक्रे दासस्त्रिलोचनः पुनः ।
स्मृतः स वोपदेवेन स्थितस्त्रयोदशे सुधीः ॥

पञ्जिकाव्याख्या

उद्योतञ्च पुनश्चक्रे पञ्जिकायां त्रिविक्रमः ।
तस्यापि कीर्त्तितः कालः शतकं च त्रयोदशम् ॥

परे टीकाकाराः

कुशलो रामचन्द्रश्च विश्वेश्वरो जिनप्रभः ।
टीकां चक्रुश्च ते सर्व्वे पञ्जिकायां कलापके ॥

वर्द्धमानः

कातन्त्रविस्तरं चक्रे वर्द्धमानः कलापके ।
स स्मृतो वोपदेवेन द्वादशे तु स्थितेः सुधीः ॥

उपटीका

पृथ्वीधरः पुनः कश्चित् टीकां चक्रे तु विस्तरे ।
न ज्ञातो विस्तरस्तस्य ततोऽस्माभिः विरम्यते ॥
काशीराज-हरिरामौ टीकाकारौ परौ मतौ ।
लघुवृत्तिः प्रदीपश्च टीकाद्वयं पुनः स्थितम् ॥

उमापतिः

आसीद् लक्ष्मणसेनस्य सभाकविरुमापतिः ।
कलापे विदधे व्याख्यां द्वादशे तु स्थितः सुधीः ॥

जिनप्रभसूरिः

कातन्त्रविभ्रमं चक्रे पुरा सूरि जिनप्रभः ।
द्वादशे नवतिः पञ्च तदा टीकां लिलेख सः ॥

उपटीका

धीमान् चारित्रसिंहोपि टीकां लिलेख विभ्रमे ।
अष्टाषष्टिस्तदा वर्षाः पञ्चदशे स्थिते पुनः ॥

जगद्धरभट्टः

भट्टजगद्धरश्चक्रे स्वसुतस्य प्रशिक्षणे ।
कातन्त्रे बालबोधिनीं शतके तु चतुर्द्दशे ॥
स च काश्मीरको धीमान् विदुषां स पुरःसरः ।
मालतीमाधवे तस्य टीका काचिद् विराजते ॥

उपटीका

आश्रित्य बालबोधिनीं शितिकण्ठो लिलेख च ।
तस्य कालः पुनस्तत्र पञ्चदश प्रकीर्त्तितम् ॥

पुण्डरीकाक्षविद्यासागरः

कातन्त्रे पुण्डरीकाक्षः टीकाकारो वरः स्मृतः ।
स विद्यासागरः ख्यातः स्थितः पञ्चदशे सुधीः ॥

सुपद्मव्याकरणम्

दत्तेन पद्मनाभेन शतके च चतुर्द्दशे ।
कृतं व्याकरणं तत्र तस्य नाम्ना स्मृतं हि तत् ॥ १
दामोदरः पिता तस्य श्रीदत्तश्च पितामहः ।
मिथिलायां जनिस्तस्य विदुषां हि तथा मतम् ॥ २
इदं व्याकरणं बङ्गे बहुधा चलितं स्थितम् ।
इदं व्याकरणं बाल्ये मयापि पठितं पुनः ॥ ३
एतस्याश्च पुनः काले टीका जाताश्च काश्चन ।
काः काः टीकाः स्थितास्तत्र न ता ज्ञाताश्च नामतः ॥ ४
टीकाकृतां च केषाञ्चिद् नामानीह स्थितानि च ।
नामानि तत्र लब्धानि प्रदीयन्ते परे मया ॥ ५
पद्मनाभः स्वयं चक्रे टीकां तावत् स्वके नये ।
विष्णुमिश्रः स्थितो धीमान् टीकामपि चकार सः ॥ ६
रामचन्द्रः स्थितः कश्चित् तेन टीका विनिर्मिता ।
श्रीधरश्च स्थितस्तत्र टीकामपि चकार सः ॥ ७

---

ग्रन्था दृष्टाः

A Dictionary of Sanskrit Grammar—
Abhyankar

वैयाकरणसिद्धान्तकौमुदी—
Edited by Mahashabde

संस्कृत व्याकरणशास्त्रका इतिहास—युधिष्ठिर मीमांसक।

संस्कृत शब्दशास्त्रेर मूलकथा—शैलेन्द्रनाथ सेनगुप्त

---

## व्याकरणकारिका (भूमिका)

### व्याकरणदर्शनम्

तत्र

स्फोटवादः

दर्शने व्याकरणस्य तत्त्वं गुरु स्थितं बहु ।
पूर्वैश्च तानि तत्त्वानि दर्शितानि सविस्तरम् ॥ १
धातोरर्थो भवेद् वा को लकारैर्वा किमुच्यते ।
सुबर्थो वा कथं तत्र नाम्ना वा किं प्रतीयते ॥ २
कुत्र शक्तिः समासस्य निपातेन किमुच्यते ।
अभिधादि भवेद् वा किम् किमुच्यते नञादिना ॥ ३
इत्यादि बहुतत्त्वं च पूर्वैरिह विनिश्चितम् ।
स्थिताश्च बहवो ग्रन्थाः पुनस्तेषां निरूपणे ॥ ४
तत्त्वे रुचिः स्थिता येषां ते तान् ग्रन्थान् पठन्तु च ।
इह निरूपणं तेषां न हि लक्ष्यं स्थितं मम ॥ ५
स्फोटवादं समाश्रित्य मया किञ्चिद् इहोच्यते ।
तत्त्वानां प्रथमं तत्त्वं स्फोटतत्त्वं सतां मते ॥ ६
जायेत न्यूनता ग्रन्थे न किञ्चिदुच्यते यदि ।
तस्मात् किञ्चिद् इह प्रोक्तं प्रोक्तं पुनः समासतः ॥ ७

स्फोटवादः

वर्णो न यो भवेद् व्यङ्ग्यः स्वयं वर्णो भवेन्न यः ।
स स्फोटः कथितः शास्त्रे स्फोटो नित्यो भवेत् पुनः ॥
उच्चार्यन्ते यदा वर्णास्तदा स्फोटः प्रजायते ।
वर्णात् स लभते जन्म वर्णमतीत्य वर्त्तते ॥ २
अर्थस्य जनने हेतुः स स्फोटः कथितः पुनः ।
न चार्थानां प्रकाशः स्यात् स्फोटो यदि न विद्यते ॥ ३

पूर्वपक्षः

(मीमांसकः)

अर्थस्य वाचको वर्णो वर्णादर्थः प्रतीयते ।
स्फोटस्य कल्पना मिथ्या स्फोटेन किं भविष्यति ॥ ४

उत्तरपक्षः

(वैयाकरणाः)

अर्थस्य वाचको वर्णा इति हि भवतां मतम् ।
एतन्मतं समीचीनं न तावत् प्रतिभाति मे ॥ ५
वाचकश्चेद् भवेद् वर्णास्तदा प्रश्नो भवेदिह ।
प्रत्येकं वाचकः स स्याद् अथवा समुदायतः ॥ ६
प्रत्येकं वाचकस्तत्र यदि वर्णो भवेत् पुनः ।
वर्णान्तरं तदा तत्र भवेद् व्यर्थमिति स्थितिः ॥ ७
घकारश्चेद् भवेदुक्तो घटस्तदा प्रतीयते ।
उच्चारणं टकारस्य न तावत् स्यात् प्रयोजनम् ॥ ८
वर्णानां समुदितानां वाचकता भवेद् यदि ।
वर्णानां समुदायस्तु तदा ग्राह्यो भवेदिह ॥ ९
वर्णानां समुदायस्तु न युज्यते कथञ्चन ।
आशुविनाशिनो वर्णाः समुदायो न सिध्यति ॥ १०
प्रत्येकं वाचकत्वं च वर्णानां नेह युज्यते ।
न युज्यते वाचकत्वं वर्णानां समुदायतः ॥ ११

पूर्वपक्षः

(मीमांसकः)

एकस्मृतिं समारूढा वर्णा हि वाचका मताः ।
न तत्र दृश्यते दोषः स पक्षो युज्यते खलु ॥ १२

उत्तरपक्षः

(वैयाकरणाः)

एष चापि पुनः पक्षो न युज्यते कथञ्चन ।
विशेषस्य तिरोधानम् इह दोषो भवेन् महान् ॥ १३
"सरः" यदा भवेद् ग्राह्यो "रसः" ग्राह्यो भवेत् तदा ।
एकस्मृतौ यदा लीनौ न हि तौ द्वौ तदा पृथक् ॥ १४
एकलो वाचको वर्णो न तावत् स्यात् कथञ्चन ।
नापि समुच्चितो वर्णो वाचको वा भवेदिह ॥ १५
एकस्मृतौ समारूढो न वर्णो वाचको भवेत् ।
वर्णानां वाचकत्वन्तु न सिध्यति कथञ्चन ॥ १६

एकको वाचको न स्यात् न वाचकः समुच्चितः ।
स्मृतौ लीनो वाचको न न वर्णो वाचको भवेत् ॥ १७

"न प्रत्येकं न मिलिता न चैकस्मृतिगोचरः ।
अर्थस्य वाचको वर्णः किन्तु स्फोटः स च द्विधा ॥"

पूर्व्वपक्षः

(मीमांसकः)

इह वर्णः स्थितो नित्यः समुदायो हि युज्यते ।
नित्यानां समुदाये तु दोषः कश्चिद् न विद्यते ॥ १८
पूर्व्वं श्रुतो गकारो य स गकारः श्रुतः पुनः ।
प्रत्यभिज्ञा भवेदेवं वर्णो नित्यस्ततो भवेत् ॥ १९

उत्तरपक्षः

(वैयाकरणः)

यो गकारः श्रुतः पूर्व्वं स गकारः श्रुतः पुनः ।
प्रत्यभिज्ञावशादेवं वर्णस्य नित्यता भवेत् ॥ २०
इति यद् भवता प्रोक्तं न हि तद् रुचिरं भवेत् ।
उक्तं यद् न हि तत् सर्व्वं वाच्यमन्यत् स्थितं पुनः ॥ २१
वर्णानाञ्च समुत्पादो दृश्यते इह सर्व्वदा ।
विनाशोऽपि च वर्णानां सर्व्वदा दृश्यते खलु ॥ २२
स्थितो यस्य समुत्पादो नाशो यस्य स्थितः पुनः ।
स वर्णः स्यात् कथं नित्य इति तावद् न बुध्यते ॥ २३
समुत्पादः स्थितो यत्र विनाशो यत्र च स्थितः ।
न तत्र नित्यता काचिद् इति हि सङ्गतं भवेत् ॥ २४
नैयायिकैर्यदिहोक्तं सत्यं हि तत् प्रतीयते ।
एते वर्णा अनित्याः स्युर्न ते नित्याः कथञ्चन ॥ २५
प्रत्यभिज्ञाबलात् तत्र वर्णानां नित्यता यदि ।
समुत्पादबलात् तत्र वर्णानां स्यादनित्यता ॥ २६

"वर्णानां प्रत्यभिज्ञानबलात् स्यान्नित्यता यदि ।
अनित्यतैव किं न स्यात् उत्पादादिधियां बलात् ॥"

पूर्व्वपक्षः
(मीमांसकः)

वर्णो नित्यो विभुर्वर्ण इत्येव हि सतां मतम्।
नित्यानां समुदाये तु दोषः कश्चिन्न दृश्यते ॥ २७

उत्तरपक्षः
(वैयाकरणः)

वर्णो नित्यो विभुर्वर्ण इत्यपि गृह्यते यदि।
तथापि च न निस्तारो दोषो भवेत् तदापि च ॥ २८
नित्यो यदि भवेद्‌ वर्णो नित्यश्चार्थो भवेत्तदा।
अर्थस्य च प्रकाशः स्यात् सर्व्वदेव तदा पुनः ॥ २९
एषा दशा पुनर्लोके न दृश्यते कदाचन।
दोषः स्यादतिप्रसक्ति दुरुद्धारो भवेद्धि सः ॥ ३०

पूर्व्वपक्षः
(मीमांसकः)

इह व्यञ्जकवायुभिर्वर्णानां स्फुरणं भवेत्।
न यदा व्यञ्जकवायुर्न तदा स्फुरणं पुनः ॥ ३१
ध्वनिभिर्व्वा पुनर्वर्ण इह भवेत् प्रकाशितः।
न ध्वनिश्चेत् स्थितस्तत्र नापि वर्णः स्थितो भवेत् ॥ ३२
नित्यत्वे चापि वर्णानां व्यञ्जकत्वमिह स्थितम्।
व्यञ्जकत्वं समाश्रित्य वर्णानां कार्य्यकारिता ॥ ३३
सर्व्वत्र सर्व्वदा वर्णो व्यञ्जकत्वं भजेन्न च।
सर्व्वदा चार्थवोधश्च तस्मादिह न सिध्यति ॥ ३४

उत्तरपक्षः
(वैयाकरणः)

व्यञ्जकवायुभिस्तत्र यदि वर्णः प्रकाश्यते।
वायोस्तस्य पुनस्तत्र तिरोधानं भवेदपि ॥ ३५
आविर्भावे ध्वनेस्तत्र वर्णो यदि प्रकाश्यते।
ध्वनेरपि तिरोधानं सममेव भवेत् पुनः ॥ ३६
आविर्भावो यदा तत्र तिरोभावो यदा पुनः।
स्थायित्वञ्च तदा तस्य न सिध्यति कथञ्चन ॥ ३७

स्थायित्वे हि स्थिते तत्र समुदायो हि सिध्यति ।
स्थायित्वं न स्थितं तत्र समुदायो भवेत् कथम् ॥ ३९

"नित्यानामपि वर्णानां तत्तद्व्यञ्जकवायुभिः ।
ध्वनिभिर्वा तिरोधाने न वर्णसमुदायधीः ॥"

पूर्व्वपक्षः
(मीमांसकः)

संस्काराश्च यदा युक्ता अन्त्येन मिलिता यदा ।
अर्थस्मृतिं तदा ते च जनयेयुरसंशयम् ॥ ४०
यथा खलु भवेदेवं तथा वच्मि परे पुनः ।
विस्तर उच्यते तत्र प्रक्रिया स्याद् यथा स्फुटा ॥ ४१
वर्णानां समुदयाद्धि पदमिह प्रजायते ।
वर्णानां हि समूहः स्याद् इह पदमिति स्थितिः ॥ ४२
अनुभवः पदस्य चेद् वर्णस्यानुभवो भवेत् ।
प्रतिवर्णमनुभवात् संस्कारश्च प्रजायते ॥ ४३
पदे यदा त्रयो वर्णाः संस्काराश्च त्रयस्तदा ।
पञ्च यदि पदे वर्णाः संस्कारा अपि पञ्च च ॥ ४४
अनुभवः पदस्य च यदा क्वचिद् भवेदिह ।
अनुभवश्च वर्णस्य तदा प्राप्तो भवेत् पुनः ॥ ४५
प्रतिवर्णानुभवात् संस्कारश्च भवेदिह ।
एवं संस्कारकूटश्च कश्चित्तत्र प्रजायते ॥ ४६
वर्णस्य पुनरन्त्यस्य भवेदनुभवो यदा ।
तदा संस्कारकूटः स भवेत् खलु सहायकः ॥ ४७
अनुभव इहान्त्यस्य यस्मिन् क्षणे प्रजायते ।
स्थितः संस्कारकूटः स तेन च मिलितो भवेत् ॥ ४८
यदा तत्र मिलनं स्यादर्थस्मृतिः प्रजायते ।
एवं संस्कारकूटात् स्याद् अर्थबोधो न संशयः ॥ ४९

उत्तरपक्षः
(वैयाकरणाः)

यदिह भवता प्रोक्तं तदपि च न युज्यते ।
न च संस्कारकूटात् स्याद् अर्थबोधः कथञ्चन ॥ ५०

स्मृतेश्च जनने तत्र विषयो हि नियामकः ।
अनुभवो यमाश्रित्य तमाश्रित्य स्मृतिर्भवेत् ॥ ५१
अनुभवो घटस्य चेद् घटस्मृतिः प्रजायते ।
पटस्य तु स्मृतिस्तत्र न जायते कथञ्चन ॥ ५२
अनुभवः पटस्य चेत् पटस्मृतिः प्रजायते ।
घटस्य तु स्मृतिस्तत्र न भवेद्धि कथञ्चन ॥ ५३
वर्णस्य चेदनुभवो वर्णस्मृतिस्तदा भवेत् ।
अर्थस्य तु स्मृतिस्तत्र न युज्यते कथञ्चन ॥ ५४
अनुभवे तु वर्णस्य वर्णस्यैव स्मृतिर्भवेत् ।
अर्थस्मृतिः कथं वा स्यादिति तावद् न बुध्यते ॥ ५५
वर्णस्य चेदनुभवाद् अर्थस्मृतिः प्रजायते ।
यो वा को वा पुनरर्थस्तदा स्मृतो भवेदिह ॥ ५६
अनुभूय तदा चैकं जानीयात् निखिलं जनः ।
न प्रतिविषयं तत्र ज्ञानं हि स्यात् प्रयोजनम् ॥ ५७
न हि चेतद्भवेल्लोके न तावदेतदिष्यते ।
दोषः स्यादतिप्रसक्तिरेवं यदि भवेत् पुनः ॥ ५८
एकस्यानुभवात्तत्र परस्य चेद् भवेत् स्मृतिः ।
स्वभावस्य विपर्य्यासस्तदा दोषो भवेन् महान् ॥ ५९

## पूर्व्वपक्षः
## (मीमांसकः-प्राभाकरः)

कौमारिले यदुक्तं तत् न हि सम्यग् भवेदिह ।
इह तत्त्वं तथा न स्यात् यथा तैश्च प्रदर्शितम् ॥ ६०
संस्कारस्तु न चैकः स्यात् संस्कारस्तु द्विधा स्थितः ।
एकः स्मृतौ भवेद्धेतुरर्थे हेतुर्भवेत् परः ॥ ६१
अनुभवो यदा तत्र वर्णस्य जायते क्वचित् ।
संस्कारस्य द्वयं तत्र तदा खलु प्रजायते ॥ ६२
एकः स्मृतौ भवेद्धेतुः वर्णस्मृतिः प्रजायते ।
अर्थे परो भवेद्धेतुरर्थस्मृतिर्भवेत्तदा ॥ ६३

उत्तरपक्षः
(वैयाकरणाः)

एतदपि न हि ग्राह्यं दोषो भवेद् महान् यतः ।
गौरवं हि भवेत्तत्र संस्कारद्वयं यदि ॥ ६४
संस्कारादनुभवस्य नार्थस्मृतिः कथञ्चन ।
स्वभावस्य विपर्य्यासस्तदा दोषो भवेन् महान् ॥ ६५
संस्कारस्य द्वयं तत्र नापि चार्थं हि बोधयेत् ।
द्वयस्य कल्पने तत्र गौरवं हि भवेन् महत् ॥ ६६

"पूर्व्वानुभूतसंस्कारकूटान्नान्त्यस्पृशोऽर्थधीः ।
स्वभावस्य विपर्य्यासात् कल्पनेऽन्यस्य गौरवात् ॥"

पूर्व्वपक्षः
(मीमांसकाः)

क्रमबद्धा यदा वर्णास्तदा चार्थः प्रतीयते ।
नदी दीन इत्यादौ च विशेषत्वं न हीयते ॥ ६७
नदी यदा भवेद् ग्राह्यो दीन ग्राह्यो भवेन्न च ।
रस यदा भवेद् ग्राह्यो सर ग्राह्यो भवेन्न हि ॥ ६८
क्रमो यदा भवेत्तत्र न तदा स्याद् विपर्य्ययः ।
अर्थस्य च विशेषे स्यात् क्रमस्तत्र नियामकः ॥ ६९

संस्कारैरिह वर्णानाम् एकं हि स्मरणं भवेत् ।
शतं घटा इतिवज्ज्ञानं लोके हि दृश्यते ॥ ७०
इदमेकम् इदमेकम् इति ज्ञानं भवेद् यदा ।
द्वौ चेति च तदा ज्ञानं समुच्चयात् प्रजायते ॥ ७१
एकं हि स्मरणं तत्र नासिद्धं स्यात् कथञ्चन ।
अनुभवादिदं सिद्धं ततो ग्राह्यं भवेदिदम् ॥ ७२
बहूनां स्मरणे तत्र यदि वा गौरवं भवेत् ।
एकस्मृतिर्यदा तत्र न तदा गौरवं पुनः ॥ ७३
उपलब्धिर्यथा सिध्येत् तथा चेतत् प्रयोजनम् ।
उपलब्धौ निमित्तं स्यात् स्मरणं तद् विशेषतः ॥ ७४

उत्तरपक्षः
(वैयाकरणाः)

वर्णो यदि भवेन्नित्यो वर्णो विभुर्भवेद् यदि ।
देशत. कालतस्तस्य क्रमस्तावन् न सिध्यति ॥ ७५
नित्यानाञ्च विभूनाञ्च क्रमिकता न युज्यते ।
देशतः कालतस्तत्र न क्रमः स्यान् नियामकः ॥ ७६
उपलब्धौ निमित्तं चेद् एका स्मृतिर्भवेत् पुनः ।
एकस्याञ्च स्मृतौ तत्र न क्रमः स्यात् कथञ्चन ॥ ७७
स्मृतिर्यदि भवेदेका क्रमस्तत्र भवेत् कथम् ।
एकस्य न क्रमः सिद्धो बहूनां हि क्रमो भवेत् ॥ ७८
नित्यानां न क्रमस्तत्र विभूनां न क्रमः पुनः ।
एकस्यां न क्रमैस्तत्र क्रमस्तत्र न वास्तवः ॥ ७९

"नित्यानाञ्च विभूनाञ्च क्रमो नास्त्येव वास्तवः ।
उपलब्धिनिमित्तोऽस्ति सा चेदेका कुतः क्रमः ॥"

पूर्व्वपक्षः
(मीमांसकाः)

नित्यानाञ्च विभूनाञ्च नैव वा भवतु क्रमः ।
अनुभवः स्थितस्तत्र तस्मिन् क्रमो हि सिध्यति ॥ ८०
वर्णेषु प्रथमो यः स्यात् तस्य चानुभवः स्थितः ।
अनुभवक्रमे तत्र स प्रथमो भवेदिह ॥ ८१
वर्णेषु यो द्वितीयः स्यात् तस्य चानुभवः स्थितः ।
अनुभवक्रमे तत्र स द्वितीयो भवेत् पुनः ॥ ८२
अनुभवे क्रमस्तत्र तथैव हि प्रसिध्यति ।
अनुभवे क्रमस्तत्र तथा च वास्तवो भवेत् ॥ ८३
एकस्मृतिं समारूढा वर्णाः स्यातुं क्षमाः पुनः ।
औपाधिकः क्रमस्तत्र भवेद् ग्राह्यो मते च नः ॥ ८४
अनुभवक्रमस्तु स्याद् एकस्मृतौ विशेषकः ।
अर्थे तत्र विपर्य्यासो न तथा स्यात् कथञ्चन ॥ ८५

उत्तरपक्षः

(वैयाकरणाः)

स्मृतिर्यदा भवेत्तत्र नानुभवो भवेत्तदा ।
अनुभवो यदा तिष्ठेद् न तिष्ठेच्च तदा स्मृतिः ॥ ८६

इहैकस्मिन् क्षणे तत्र द्वयोः स्थितिर्न सम्भवेत् ।
कालतो यौगपद्यञ्च द्वयोरिह न सिध्यति ॥ ८७

स्मृतिर्यदा स्थिता तत्र नानुभवः स्थितस्तदा ।
इह स्मृतौ न तिष्ठेयुरनुभवाः कथञ्चन ॥ ८८

न स्मृतेर्गोचरा हि स्युरनुभवाः पुरातनाः ।
न स्मृतेर्विषयस्तावद् अनुभवो भवेदिह ॥ ८९

अनुभवो यदा तत्र न स्मृतेर्गोचरो भवेत् ।
अनुभवस्तदा तत्र स्थितश्चापि न तिष्ठति ॥ ९०

अनुभवो यदा नास्ति तदास्ति वा क्रमः कुतः ।
अनुभूतेः क्रमस्तावत् स्मृतौ तत्र न सिध्यति ॥ ९१

अनुभूतिक्रमाद वर्णाः स्मृतेर्न गोचराः स्थिताः ।
स्मृतौ नानुभवस्तत्र क्रमस्तत्र भवेत् कथम् ॥ ९२

"नानुभूतिक्रमाद् वर्णा क्रमिकाः स्मृतिगोचराः ।
गोचरोऽनुभवो नास्यास्तत्क्रमस्तु कुतस्तराम् ॥"

पूर्व्वपक्षः

(मीमांसकः)

न चेद् ज्ञातः क्रमस्तत्र न ज्ञातो वा भवेत् पुनः ।
अज्ञातश्च क्रमः कश्चिदवश्यं तत्र वर्त्तते ॥ ९३

यथा लोके भवेत् कार्य्यं कारणं स्यात् तथैव हि ।
कार्य्यानुसारिणी तत्र कारणस्य हि कल्पना ॥ ९४

"गामानय" यदा वाक्यं क्वचिदिह प्रयुज्यते ।
वर्णेभ्यस्तत्र स्थितेभ्य उदेति प्रत्ययः खलु ॥ ९५

क्रमः कश्चित् स्थित स्तत्र दृश्यते वा न दृश्यते ।
स्थितस्य परिहानं तु न न्याय्यं स्यात् कथञ्चन ॥ ९६

क्रमसिद्धौ यदा सिद्धिः स्फोटस्तदा निरर्थकः ।
स्फोटस्य कल्पना व्यर्था नास्ति तस्य प्रयोजनम् ॥ ९७
परन्तु च महान् दोषः स्फोटस्य कल्पने भवेत् ।
स्यादितरेतराश्रयः स्फोटस्तु गृह्यते यदि ॥ ९८
अर्थस्य प्रतिपत्तिस्तु नान्यथा च भवेद् यदा ।
स्फोटस्य कल्पना तत्र तदा च क्रियते खलु ॥ ९९
स्फोटस्य प्रतिपत्तिस्तु नान्यथा च भवेद् यदा ।
अर्थस्य कल्पना तत्र तदा च क्रियते पुनः ॥ १००
स्फोटसिद्धौ चार्थसिद्धिरेकत्र कल्पिता भवेत् ।
अर्थसिद्धौ स्फोटसिद्धिः परत्र कल्पिता पुनः ॥ १०१
स्यादितरेतराश्रय एवञ्च क्रियते यदा ।
दोषश्च स भवेन् महान् परिहर्त्तुं न शक्यते ॥ १०२

उत्तरपक्षः

(वैयाकरणाः)

काल्पनिको न हि स्फोटो न तस्य कल्पना मृषा ।
स्फोटस्य ग्रहणे हेतुरवश्यं तत्र वर्त्तते ॥ १०३
इदं वाक्यम् इति बोधः प्रायश इह दृश्यते ।
इयन्ति च पदानीति बोधोऽपि जायते पुनः ॥ १०४
इमे वर्णा इति चापि बोधः खलु प्रजायते ।
ते ते बोधा न मिथ्या स्युर्न हेयाश्च कथञ्चन ॥ १०५
इदं वाक्यम् इति बोधो यदा तत्र प्रजायते ।
तं बोधमवगाह्य च कारणं वर्त्तते तदा ॥ १०६
एकबोधमवगाह्य कारणं वर्त्तते च यत् ।
तत्कारणम् इह स्फोटः स्फोटो ग्राह्यो भवेत्ततः ॥ १०७
"देवदत्त गामानय" इति वाक्यं भवेद् यदा ।
त्रीणि तदा पदानि स्युर्वाक्ये तस्मिन् इति स्थितिः ॥ १०८
इह क्रमं समाश्रित्य गृह्यते चेत् पदत्रयम् ।
अर्थबोधे पुनस्तत्र क्रमश्चेत् कारणं भवेत् ॥ १०९
क्रमभङ्गे न तत्र स्याद् अर्थबोधः कथञ्चन ।
क्रमस्य चेद् भवेद् हानिर्हानिरर्थे भवेदपि ॥ ११०

"आनय गां देवदत्त" क्रमभङ्गे भवेत् पुनः ।
क्रमभङ्गे स्थिते तद्वद् नार्थबोधो भवेत् तव ॥ १११
भवति तु विपरीतम् अर्थबोधः प्रजायते ।
न क्रमः कारणं तस्माद् भवेदिह कथञ्चन ॥ ११२
अन्यद् हि कारणं किञ्चिद् अवश्यं तत्र वर्त्तते ।
तत् कारणं भवेत् स्फोटः स्फोटस्य कल्पना ततः ॥ ११३
न क्रमः कारणं तत्र न वर्णा वाचकाः पुनः ।
निदर्शनं परं चापि दर्शयामि तवाग्रतः ॥ ११४
"देवदत्त गामानय" यदा वाक्यं प्रयुज्यते ।
अष्टौ वर्णास्तदा तत्र स्थितः क्रमस्तवेप्सितः ॥ ११५
क्रमे यदि भवेद् भङ्गो वर्णे चेन् न्यूनता भवेत् ।
न तदा चार्थबोधः स्यान् मतं चेद् गृह्यते तव ॥ ११६
"गां देवदत्तानय" च पुनर्वाक्यं भवेद् यदा ।
तदा तत्र क्रमे भङ्गो वर्णाः सप्त पुनः स्थिताः ॥ ११७
न तदा चार्थबोधः स्यात् मते तव कथञ्चन ।
अर्थबोधस्तथापि स्याद् अर्थबोधो न हन्यते ॥ ११८
न क्रमः कारणं तत्र न वर्णा वाचकास्ततः ।
व्यतिरिच्य क्रमं वर्णं किञ्चिदिह च वर्त्तते ॥ ११९
यत् किञ्चिद् वर्त्तते चात्र यत् किञ्चिद् इह च स्थितम् ।
तदिह च भवेत् स्फोटो स्फोटो ग्राह्यो भवेत्ततः ॥ १२०
स्फोटस्य ग्रहणे हेतुरवश्यं वर्त्तते मम ।
काल्पनिको न हि स्फोटो न तस्य ग्रहणं वृथा ॥ १२१
वर्णपदविभागः स्याद् आविद्यको हि सर्व्वथा ।
स विभागो न ग्राह्यः स्यात् स्फोटस्तत्र च गृह्यते ॥ १२२
इदं सर्व्वमनुस्यूय यश्चान्तर्वहति स्थिरम् ।
स स्फोटः स महान् आत्मा तेन सर्व्वमिदं ततम् ॥ १२३

"इदं पदम् इदं वाक्यम् इमे वर्णा इति त्रिषु ।
प्रत्ययेषु स्फुटं स्फोट एक एवानुभूयते ॥"

श्रीहरिपददत्तविरचितः स्फोटवादः समाप्तः ।

ग्रन्था दृष्टाः

सर्व्वदर्शनसंग्रहः—पाणिनिदर्शनम्—माधवाचार्य्यः ।

स्फोटतत्त्वनिरूपणम्—शेषकृष्णः ।

वाक्यपदीयम्—भर्त्तृहरिः ।

वैयाकरणभूषणसारः—कौण्डभट्टः ।

परमलघुमञ्जुषा—नागेशभट्टः ।

स्फोटवादः - नागेशभट्टः ।

Philosophy of Word and Meaning—

Gaurinath Shastri.



श्रीहरिपददत्तकृता

## व्याकरणकारिका (भूमिका)

तत्र

## व्याकरणसाहित्यकोषः

पाणिनीये स्थिता ग्रन्था इह तावदनेकशः ।
अकारादिक्रमेण च सूची तेषां प्रदीयते ॥
अन्यद् व्याकरणं चापि लोके स्थितं क्वचित् क्वचित् ।
विवरणं तेषां चापि प्रदीयते प्रसङ्गतः ॥

### अ

**अकालवर्षः**—पिता अमोघवर्षः, अभिनवशाकटायनस्य समकालिकः ।

**अकाण्डताण्डवः**—परिभाषेन्दुखरे टीका, हरिनाथकृता ।

**अक्षरतन्त्रसूत्रम्**—गार्ग्यव्याकरणम् ।

**अग्निवेश्यः**—पाणिनि-पूर्वो वैयाकरणः । द्रष्टव्यम्—तैः प्राः ६।४ मैः प्राः ६।४ ।

**अग्निवेश्यायनः**—पाणिनि-पूर्व्वः वैयाकरणः । द्रष्टव्यम्—तैः प्राः १४।३२ । मैः प्राः २२।३२ ।

**अच्युतोपाध्यायः**— ग्रन्थः व्याख्याप्रदीपः ।

**अजितसेनाचार्य्यः**-मणिप्रकाशिका ।

**अन्नंयाचार्य्यः**—लिङ्गनिर्णयभूषणः ।

अतिमहद्वृत्तिः—शाकटायनीया ।

अथर्व्वप्रातिशाख्यम्—शौनककृतम् ।

अनिट्कारिका—एकादश श्लोकाः । सम्भवतः ग्रन्थोऽयं कातन्त्रनये । ग्रन्थकृदज्ञातः ।

अनुन्यासः—इन्दुमित्रः कर्त्ता ।

**अनुभूतिस्वरूपाचार्य्यः**— सारस्वतप्रक्रिया वृत्तिसहिता ।

**अन्यतरेयः**—पाणिनि-पूर्व्वो वैयाकरणः । द्रष्टव्यं ऋः प्राः ३।२२ ।

**अन्नंभट्टः**—अष्टाध्यायीवृत्तिकारः । ग्रन्थः—मिताक्षरा ।

**अपराचीनः**—यास्कसमकालिकः ।

**अङ्कननैनार्य्यः** - अष्टाध्यायीवृत्तिकारः । ग्रन्थः- प्रक्रियादीपिका । ग्रन्थारम्भः अङ्कननैनार्य्येन वेङ्कटाचार्य्यसूनुना । प्रक्रियादीपिका सेयं कृता वात्स्येन धीमता । न ज्ञातः कालः ।

**अप्पय्यदीक्षितः**—अष्टाध्यायीवृत्तिकारः। पिता-रङ्गराजाध्वरी, पितामहः आचार्य्यदीक्षितः, गोत्रेण भारद्वाजः। आयुः-७२ वर्षाणि। १५३० खीः जन्म। ग्रन्थाः कृताः शतादप्यधिकाः।

**अभयतिलकः**—जैनः कश्चिद् वैयाकरणः। हेमचन्द्रीये टीका शब्दानुशासने।

**अभयनन्दी**— जैनः। ग्रन्थः—महावृत्तिः शब्दानुशासने।

**अभयसूरिः**—(अभयचन्द्रसूरिः) कालो द्वादशशतकम्। ग्रन्थः - टीका शाकटायने।

**अभिनवशाकटायनः**— जैनः। शब्दानुशासनकारः। उनादिसूत्रं लिङ्गानुशासनञ्च तस्य।

अमरकोषपञ्जिका—नारायणः।

**अमरचन्द्रः**—स्यादिशब्दसमुच्चयः, परिमलश्च।

**अमृतभारती**— सुबोधिका (सारस्वते)।

अमरव्याकरणम—अमरसिंहकृतम्।

**अमृतस्मृतिः**—टीका प्रक्रियाकौमुद्याम्।

**अमोघवृत्तिः**—शाकटायनीये।

**अमोघः**—अतिमहद्वृत्तिः।

**अमोघवर्षः**—राष्ट्रकूटनरपतिः, पोष्टा अभिनव-शाकटायनस्य।

अम्बाकर्त्री—टीका परिभाषेन्दुशेखरे।

**अरुणदेवः**—लिङ्गानुशासनम्।

**अष्टकम्**-पाणिनेः सूत्रम्। अष्टाध्यायी।

**अष्टकम्**—आपिशलिकृता अष्टाध्यायी।

**अष्टधातुः**—अंशः खिलव्यकरणस्य। इत्-सिङ्-कथितः।

**अष्टमङ्गला**—अष्टमपादे (कलापे) आख्यातविवरणम तदाश्रित्य कृता अष्टममङ्गला। ग्रन्थकारः रामानीशार शर्म्मा।

**अष्टाध्यायी**— पाणिनेः।

**अष्टाध्यायीवृत्तिकारः**—वररुचिः। कातन्त्रे चैत्रकुटीवृत्तिकृत्।

**अहोवलभट्टः**—अन्ध्रदेशीयः। संस्कृते तेलङ्गव्याकरणकर्त्ता।

**आ**

आख्यातचन्द्रिका—भट्टमल्लकृता। आख्यातप्रक्रिया—कातन्त्रे। अनुभूतिस्वरुपाचार्य्यकृता।

आख्यातमञ्जरी—

आख्यातव्याकरणम्— वङ्गसेनः ।

आख्यातव्याख्यासारः—हरिरामशर्म्मा ।

आगस्त्यः— पाणिनिपूर्व्वो वैयाकरणः । द्रः ऋः प्राः वर्गः १।२ ।

आत्रेयः—पाणिनि पूर्व्वो वैयाकरणः । द्रष्टव्यम्—तैः प्राः ५।३१।१७।८
मैः प्राः ५।३३।२।५।६।८ ।

आत्रेयः—धातुपारायणकर्त्ता ।

आनन्ददत्तपद्धतिः—टीका-चान्द्रे ।

आपिशलिः— आपिशलिव्याकरणम् ।

आर्य्यवज्रस्वामी—जैनव्याकरणम् ।

आशुबोधव्याकरणम्— तारानाथकृतम् ।

आशुबोधव्याकरणम्—रामकिङ्करकृतम् ।

आश्वलायनप्रातिशाख्यम्—शौनकः कर्त्ता ।

इ

इन्दिरापतिः—परीक्षा । टीका-परिभाषेन्दु-शेखरे ।

इन्दुमित्रः—अनुन्य सकारः ।

इन्दुमित्रः—अष्टाध्यायीवृत्तिकारः । प्रसादः प्रक्रियाकौमुद्याम् । तत्र विट्ठलेन वहुधा इन्द्रमित्रस्य धृतं नाम । —"एतच्च इन्दुमित्रमतेन उक्तम् ।" एकादशशतकात् प्राचीनः ।

इन्दुप्रकाशः—टीका-परिभाषेन्दुशेखरे ।

इन्द्रः—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्—ऋक्तन्त्रः १।४ ।

इन्द्रः—देवराजः पुरन्दरः । ऐन्द्रस्य कर्त्ता ।

इन्द्रगोमी—वौद्धः । ऐन्द्रव्याकरणकर्त्ता ।

इन्द्रदत्तः—गूढ़ार्थफक्किकाप्रकाशः (महाभाष्ये) ।

इष्टतन्त्रव्याकरणम्—जयदेवः कर्त्ता इति प्रवादः ।

इन्द्रमिश्रः—कश्चिद् वैयाकरणः ।

इन्द्रोतदैवापशौनयभार्गवः—गुरुः प्रथमव्याड़ेः ।

उ

उखयः— पाणिणि-पूर्व्वो वैयाकरणः । द्रष्टव्यम्—तैः प्राः ८।२२।१०।२०।
१६।२३ । मैः प्राः ८।२१।१०।२१ २।४ २५ ।

**उग्रभूतिः**—कातापकः। शिष्यहितन्यासकर्त्ता।

**उज्ज्वलदत्तः**—पञ्चदशशतकम्। उणादिवृत्तिः। पञ्चपादी""त्तिः।

**उञ्छः**--अंशः खिलव्याकरणस्य। इत्-सिङ्-कथितः।

उनादिकोषः—नवकिशोरकृतः।

उनादिकोषः—रामशर्म्मा।

उनादिसूत्रकारः—शाकटायनः।

उनादिसूत्रम (दशपादी)—शाकटायनः।

उनादिसूत्रम् (पञ्चपादी)—उज्ज्वलदत्तः।

**उत्तमोत्तरीयः**—पाणिनिपूर्व्वौ वैयाकरणः। द्रष्टव्यम्—तैः प्राः ८।२०।

**उत्पलाचार्य्यः**—जगच्चन्द्रिकाकरः।

उत्पलिनी—व्याड़िकोषः।

**उदयचन्द्रसूरिः**—न्यासः (हैमः)। पाणिनीयमतदर्शनं च।

**उदयङ्करः**—टीका-लघुशब्देन्दुशेखरे।

**उदयङ्करभट्टः**—अष्टाध्यायीवृत्तिकर्त्ता। ग्रन्थः—मितवृत्त्यर्थसंग्रहः। अपरोग्रन्थः—परिभाषाप्रदीपार्च्चिः। "कृत्वा पाणिनिसूत्राणां मितवृत्त्यर्थसंग्रहम्। परिभाषाप्रदीपार्च्चिस्तत्रोपायो निरूप्यते।

**उदयकीर्त्तिः**—जैनः-पदव्यवस्था सूत्र कारिका-टीका।

**उदयनः**—मितवृत्त्यर्थसंग्रहः। ग्रन्थारम्भः—"मुनित्रयमतं ज्ञात्वा वृत्तीरालोच्य यत्नतः। करोत्युदयनः साधु मितवृत्त्यर्थसंग्रहम्॥"

**उदयसौभाग्यः**—(हैमे ढुण्ढिकांशकर्त्ता।

उनादिसूत्रवृत्तिः—दुर्गसिंहीये।

उपसर्गवृत्तिः—चन्द्रगोमिकृता।

उपाध्यायसर्व्वस्वम्—कातन्त्रे। सर्व्वेश्वरोपाध्यायकृतम्।

**उपमन्युः**—नन्दिकेश्वरः।

**उपमन्युः**—त्रयोदशशतकम्। टीका—काशिकायाम्।

उपसर्गवादः—हरिदीक्षितः।

उपसर्गविचारः - गदाधरचक्रवर्त्ती।

उपसर्गवृत्तिः—भरतमल्लः (मल्लिकः ?) षोड़शशतकम्।

**उवटः**—प्रातिशाख्यवृत्तिकर्त्ता।

**उमापतिः**—वैयाकरणकविः।

### ऋ

ऋकृतन्त्रव्याकरणम्—शाकटायनकृतं सामप्रातिशाख्यम्।

ऋक्प्रातिशाख्यम्—सहजकीर्त्ति-वामनाचार्य्यविरचितम्।

ऋज्वर्थव्याख्या—निरुक्तवृत्तिः—दुर्गाचार्य्यकृता।

### ऐ

ऐन्द्रम्—इन्द्रव्याकरणम्-देवराजकृतम्।

ऐन्द्रनिघण्टुः—वररुचिकृतः।

ऐन्द्रव्याकरणम्—इन्द्रगोमिकृतम्। बौद्धानामिदम्?

ऐन्द्रव्याकरणम्—इन्द्रमिश्रकृतम्, कवीन्द्राचार्य्यकथितम्।

ऐन्द्रव्याकरणम्—जैनेन्द्रव्याकरणम्।

### ओ

**ओरम्भट्टः**—अष्टाध्यायीवृत्तिकारः। ग्रन्थः—व्याकरणदीपिका। ओरम्भट्टो ब्राह्मणो महाराष्ट्रीयः। वासो वाराणस्याम्। कालः—ऊनविंशशतकम्।

### औ

**औदव्रजिः**—पाणिनि पूर्व्वो वैयाकरणः। द्रष्टव्यम्—ऋक् तन्त्र ३।६।१०

**औदुम्बरायणः**—निरुक्ते स्मृतः प्राचीनः ऋषिः।

औणादिकपदार्णवः—पेदुभट्टः।

**औपगविः**—पाणिनि-पूर्व्वः वैयाकरणः। द्रष्टव्यम्—वाजः प्राः ३।१७१

### क

कनकप्रभदेवेन्द्रसूरिः—हैमे लघुन्यासकर्त्ता।

**कर्म्मन्द्र**—कार्म्मन्दविवरणम्।

कलापटीका—दुर्गसिंहः (द्वितीयः)।

कलापधातुसूत्रम्—शर्व्ववर्म्मा।

कलापवृत्तिः—दुर्गसिंहः (प्रथमः)।

कलापव्याकरणम्—कुमारमर्व्ववर्म्मा।

**कविकण्ठहारः**—चर्करीतरहस्यकर्त्ता।

**कविकर्णपूरः**—चैतन्यामृतव्याकरणस्य कर्त्ता।

कविकल्पद्रुमः—धातुग्रन्थः, वोपदेवकृतः।

कविकामधेनुः—सुभूतिः।

कविरहस्यम्—हलायुधः।

कविराजः—कलापे। सुषेणविद्याभूषणः।

कण्टकोद्धारः—मन्नुदेवः। अष्टादशशतकम्। टीका-परिभाषेन्दुशेखरे।

कलापरत्नः—दुर्गसिंहः।

कलापसंग्रहः–टीका कलापे।

कल्याणमल्लः—शब्दरत्नटीका हरिदीक्षितकृते शब्दरत्ने।

कल्याणसागरः—षोड़शशतकीयः। ग्रन्थः—हैमलिङ्गानुशासनम्।

कविचन्द्रः–द्वारभाङ्गावास्तव्यः। कालः—सप्तदशशतकम्। ग्रन्थः—सारमञ्जरी।

काण्डमायणः—द्रष्टव्यं-तैः प्राः ६।१। पाणिनिपूर्व्व आचार्य्यः।

कातन्त्रसूत्रम् - शर्व्ववर्म्मकृतम्।

कातन्त्रकारकरत्नः—दुर्गसिंहः (तृतीयः)।

कातन्त्रकौमुदी (१,—गोवर्द्धनः। द्वादशशतकम्।

कातन्त्रकौमुदी (२)—गङ्गेशशर्म्मा।

कातन्त्रगणमाला—

कातन्त्रचन्द्रिका कातन्त्रसूत्रटीका वररुचिकृता। हरिदीक्षितस्तस्य कर्त्ता इति केचित्।

कातन्त्रचतुष्टयः—

कातन्त्रटीका—दुर्गसिंह (द्वितीयः)।

कातन्त्रधातुपाठः—शर्व्ववर्म्मा। संस्कर्त्ता दुर्गसिंहः।

कातन्त्रधातुवृत्तिः—कर्त्तादुर्गसिंह इत्येके।

कातन्त्रधातुवृत्तिटीका (मनोरमा)—रामनाथः।

कातन्त्रपरिभाषावृत्तिः–दुर्गसिंहः।

कातन्त्रपरिशिष्टचन्द्रिका—रामदासचक्रवर्त्ती।

कातन्त्रपरिशिष्टटीका—पुण्डरीकाक्षः।

कातन्त्रपरिशिष्टप्रबोधः—गोपीनाथः।

कातन्त्रप्रदीपः--पुण्डरीकाक्षविद्यासागरः।

कातन्त्रपञ्जिका—त्रिलोचनः (प्रथमः)।

कातन्त्रविस्तरवृत्तिः—वर्द्धमानः।

कातन्त्रवृत्तिः—दुर्गसिंहः (प्रथमः)।

कातन्त्रपरिभाषावृत्तिः—भावशर्म्मा ।

कातन्त्र-उणादिवृत्तिः—दुर्गसिंहः (प्रथमः)

कातन्त्रोत्तरः—विद्यानन्दः ।

कातन्त्रपरिशिष्टम्—श्रीपतिदत्तः ।

कातन्त्रपरिशिष्टप्रद्योतः—गोयीचन्द्रः । द्वादशशतकम् ।

कातन्त्रपरिशिष्टसिद्धान्तरत्नाकरः—शिवरामेन्द्रः ।

कातन्त्रबालबोधिनी—जगद्धरः । काश्मीरीयः । चतुर्द्दशशतकम् ।

कातन्त्ररहस्यम्—रमानाथविद्यावाचस्पतिः । षोड़शशतकम् ।

कातन्त्ररूपमाला—भावसेनः । द्वादशशतकम् ।

कातन्त्रलघुवृत्तिः—भावसेनः । द्वादशशतकम् ।

कातन्त्रविवरणम्—टीका वर्द्धमानस्य कातन्त्रविस्तरे । कर्त्ता-पृथ्वीधरः-
पञ्चदशशतकम् ।

कातन्त्रवृत्तिटिप्पणी—टीका दुर्गसिंहवृत्तौ । कर्त्ता-गुणकीर्त्तिः ।
चतुर्द्दशशतकम् ।

कातन्त्रवृत्तिव्याख्या - दुर्गसिंहकृतायां कातन्त्रवृत्तौ । कर्त्ता मोक्षेश्वरः ।
पञ्चदशशतकम् ।

कातन्त्रवृत्तिव्याख्या—(अष्टमङ्गला) । दुर्गवृत्तौ टीका । ग्रन्थकृत्—
रामकृष्णचक्रवर्त्ती । शब्दबोधप्रकाशिका तस्य ग्रन्थः ।

कातन्त्रव्याख्यासारः—रामदासचक्रवर्त्ती । द्वादशशतकम् ।

कातन्त्रसूत्रवृत्तिः—वररुचिः कर्त्ता इत्यके ।

कातीयसूत्रम्—कात्यायनकृतम् ।

काथक्यः - प्राचीनः शाब्दिकः ।

कात्यायनः—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्-वाजः प्राः ८।५३ ।

कात्यायनः—वार्त्तिककारः ।

कान्वः—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यं-वाजः प्राः १।१२३, १४६

कामधेनुः—वोपदेवः ।

कामधेनुसुधारसः—अनन्तः चिन्तामनिसुतः । षोड़शशतकम् । कामधेनु-
टीका ।

कारककारिका—कारकचक्रस्य नामान्तरम् इति केचित् । कारकचक्रम्
तु पुरुषोत्तमदेवस्य कृतिः । पुरुषोत्तमदेवो बङ्गीयः । कालः—
चतुर्द्दशशतकम् ।

कारककारिका—श्रीहरिपददत्तः (वर्त्तमानो ग्रन्थकारः) ग्रन्थस्यास्य रचना – खीः १९७३। प्रथम प्रकाशः खीः १९७३। कारिका-संख्या—३९४। ग्रन्थश्चायं पाणिनीये।

कारक-कौमुदी—कातन्त्रे।

कारकखण्डनम्—मणिकण्ठः।

कारकचक्रम्—भवानन्दः।

कारकचक्रम्—पुरुषोत्तमदेवः बङ्गीयः।

कारकटीका—भैरवः।

कारकतत्त्वम्—चक्रपाणिशेषः। सप्तदशशतकम्।

कारकनिर्णयः—गदाधरचक्रवर्त्ती। नवद्वीपवास्तव्यो नैयायिकः। कालः – चतुर्द्दशशतकम।

कारकपरिच्छेदः—रुद्रभट्टः।

कारकरत्नम्—दुर्गसिंह (तृतीयः)।

कारकवादः—कृष्णभट्टमौनी।

कारकविचारः—मणिकण्ठः।

कारकविलासः—

कारकविवेकः—जयरामभट्टाचार्य्यः। अष्टादशशतकम्।

कारकव्याख्या—कारकवादव्याख्या। जयरामभट्टाचार्य्यकृता।

कारिकावली—नारायणः।

कारकोल्लासः—भरतमल्लिकः। वर्द्धमानवास्तव्यः।

कार्त्तिकेयः—कातन्त्रस्य प्रवक्ता इति प्रवादः।

कार्मन्दविवरणम्—कर्मन्दः।

काव्यकामधेनुः—कविकल्पद्रुमटीका। वोपदेवः।

काशकृत्स्नः—वैयाकरणमुनिः।

काशिका—अष्टाध्यायीवृत्तिः। वामनः जयादित्यश्च।

काशिका—शिवसूत्रव्याख्या। नन्दिकेश्वरकृता।

काशिकातत्त्वविमर्शिनी—विमर्शिनीव्याख्या उपमन्युकृता।

काशिकान्यासः—जिनेन्द्रवुद्धिः।

काशिकाविवरणपञ्जिका—न्यासः। जिनेन्द्रवुद्धिकृतः।

काशिकावृत्तिः—शिवसूत्रीया।

काशिकावृत्तिः—पाणिनीया।

काशिकावृत्तिसारः—अमृतसूरिः (१)। वारणावतेशशास्त्री (२)।

काशीनाथविद्यानिवासः—सारस्वतसूत्रभाष्यकृत्। मुग्धकौटीकारश्च।

काशीश्वरपण्डितः—ज्ञानामृतव्याकारणम्। सौपद्मगणपाठकर्त्ता च।

काशीश्वरभट्टाचार्य्यः—शब्दरत्नाकर-कर्त्ता।

काश्यपः—बौद्धः। सिंहलदेशीयः। ग्रन्थः—बालबोधिनी।

काश्यपः—पाणिनि-पूर्व्वो वैयाकरणः। द्रष्टव्यम—वाजः प्राः ४.५, ८.५०।

काश्यपिः—महर्षिकाश्यपकृतं व्याकरणम्।

काश्यपीवृत्तिः—टीका चान्द्रे।

कुङ्कुमविकाशः—टीका न्यासे। शिवभट्टकृता।

कुञ्चिका (१)—लघुमञ्जुषाटीका। कृष्णमित्रः।

कुञ्चिका (२)—टीका परिभाषेन्दुशेखरे। कर्त्ता—दुर्व्वलाचार्य्यः।

कुणरवाड़वः—शाब्दिकः प्राचीनः।

कुनिः—अष्टाध्यायीवृत्तिकर्त्ता। प्रमाणं यथा महाभाष्यव्याख्यायां भर्तृहरिः—"अत एवां व्यावृत्त्यर्थं कुनिना तद्धित ग्रहणं कर्त्तव्यम्। अतो गणपाठ एव ज्यायान्—अस्यापि वृत्तिकारस्य—इत्येतदनेन प्रतिपादयति। (१।१।३८)। कुणिः वशिष्टस्य पुत्र इति ब्रह्माण्डपुराणम्। (३ ८।९७)

कुणिवृत्तिः—पाणिनीये।

कुप्पुशास्त्री—परिभाषाभास्करः। अष्टादशशतकम्।

कुमारतातयः—महाभाष्यटीकाकृत्। कालो न ज्ञातः।

पारिजातनाटके स्वयमाह कुमारत्तातयः—"व्याख्याता फणिराट्-कनाद—"इत्यादि। फणिराट्—पतञ्जलिः। एतेन भाष्ये टीका तेन कृता इति स्पष्टम्।

कुलचन्द्रः—दुर्गवाक्यप्रबोधकृत्। कालापकः।

कुमारः (१)—कार्त्तिकेयः कातन्त्रप्रवक्ता।

कुमारः (२)—विष्णुमित्रः। ऋक्प्रतिशाख्ये टीकाकारः।

कुलपतिः-शौनकः—ऋक्प्रतिशाख्ये कर्त्ता।

कुल्लुकभट्टः (द्वितीयः)—रूपप्रकाशिका।

**कुवेरपण्डितः**—अद्वैताचार्य्यजनकः। नवद्वीपवासी। ग्रन्थः—सूत्रसारव्याकरणम्।

**कृद्वृत्तिः**—मोक्षेश्वरः। द्वादशशतकम्।

**कृन्मञ्जरी**—कातन्त्रे। कर्त्ता—शिवरामशर्म्मा।

**कृष्णकर्णामृतः**—जुमरकौमुदी तस्य कृतिः।

**कृष्णकिङ्करप्रक्रिया**—प्रक्रियाकौमुदी। कर्त्ता रामचन्द्रः।

**कृष्णपण्डितः**—(शेषकृष्णः)—गूढ़भावृत्तिः (प्रक्रियाकौमुदीटीका)

**कृष्णपण्डितः**—पदचन्द्रिका।

**कृष्णभट्टमौनी**—वृत्तिदीपिका।

**कृष्णमिश्रः**—(कृष्णमित्रः) सप्तदशशतकम्। ग्रन्थाः—(१) वर्द्धमानसंग्रहः। (२) रत्नार्णवः—सिद्धान्तकौमुद्याम्। (३) कल्पलताप्रौढ़मनोरमायाम्। (४) भावदीपः-शब्दकौस्तुभे। (५) टीकावैयाकरणभूषणे। (६) कुञ्चिका-लघुमञ्जुषायाम्।

**कृष्णाचार्य्यः**—सिद्धान्तकौमुदीटीका।

**कृष्णलीलाशुकमुनिः**—पुरुषकारः (सरस्वतीकण्ठाभरणे)।

**कृष्णशास्त्री** (आर्भे)—(१) आख्यातविवेकः। (२) कारकवादः। कालः—अष्टादशशतकम्।

**कृष्णशेषः**—गूढ़भावविवृत्तिः (प्रक्रियाकौमुद्याम्)।

**केशवः**—कैशवीव्याकरणकर्त्ता।

**केशवः**—सप्तदशशतकम्। शिक्षाटीका (पाणिनीये)।

**केशवदत्तः**—दुर्घटोद्घाटः (संक्षिप्तसारे)।

**केशववृत्तिः**—पाणिनीये।

**केशवः**—द्वादशशतकादर्व्वाचीनः। पुरुषोत्तमदेवेन भाषावृत्तौ केशवस्य नाम धृतम्। "केशववृत्तौ तु विकल्प उक्त—हे प्राण हे प्राण् वा।"

**केशवः**—महाभाष्यटीकाकृत्। ग्रन्थः—महाभाष्यप्रदीपः। पिता—जैयटः, गुरुर्महेश्वरः, शिष्य उद्योतकरः। कालः खीः एकादशशतकम्। गच्छति काले प्रदीपस्य वहवो व्याख्याग्रन्था अभवन्। व्याख्यातारः—(१) चिन्तामणिः, (२) नागनाथः, (३) रामानन्दः, (४) ईश्वरानन्दः, (५) अन्नंभट्टः, (६) नारायणः, (७) नागेशः, (८) मलयराजा, (९) रामसेवकः, (१०) प्रवर्त्तकोपाध्यायः,

(११) आदेन्नः, (१२) नारायणः, (१३) सोमयाजी सर्व्वेश्वरः, (१४) हरिरामः (१५) अज्ञातः कश्चित् ।

**कैयटप्रकाशः**—नीलकण्ठः द्राविड़ः । सप्तदशशतकम् ।

**कैयटप्रकाशिका**—प्रवर्त्तकोपाध्यायः ।

**कैयटविवरणम् (१)**—ईश्वरानन्दः । षोड़शशतकम् ।

**कौण्डभट्टः**—भट्टोजिदीक्षितस्य भ्रातृव्यः । ग्रन्थः-वैयाकरणभूषणसारः ।

**कौण्डिन्यः**—पाणिनि-पूर्व्वो वैयाकरणः । द्रष्टव्यम्—तैः प्राः ४।३८, १८।३, १६।२ । मैः प्राः ५।४०, २।५।४, २।६।३, २।६।६ ।

**कौत्स्यः**—पाणिनि-शिष्यः ।

**कौत्स्यः**—प्राचीनो महर्षिः ।

**कोदण्डरामः**—शब्दमञ्जरी (क्षुद्रः ग्रन्थः) ।

**कोहलिपुत्रः**—पाणिनिपूर्व्व आचार्य्यः । द्रष्टव्यम्—तैः प्राः १७।२ । मैः प्राः २।५।२ ।

**कौमारम्**—कातन्त्रव्याकरणम् ।

**कौमारम्**—(१) मुनिपुङ्गवरचितो क्षुद्रोग्रन्थः । (२) भावसेनरचितो क्षुद्रोग्रन्थः ।

**क्रमदीश्वरः**—संक्षिप्तसारव्याकरणम् ।

**क्रियाकलापः**—धातुग्रन्थः-विजयानन्दः ।

**क्रियागुप्तकम्**—गणरत्नमहोदधौ । वर्द्धमानविरचितम् ।

**क्रियारत्नसमुच्चयः**—गुणरत्नसूरिः ।

**क्षपणकः**—विक्रमादित्यसभायाम् ।

**क्षमामाणिक्यः**—अनिट्कारिकाविवरणम् । जैनः ।

**क्षपणकन्यासः**—अष्टाध्यायीव्याख्या । कर्त्ता—देवनन्दी ।

**क्षपणकमहान्यासः**—जैनेन्द्रव्याकरणे । कर्त्ता—देवनन्दी ।

**क्षपणकवृत्तिः**—(औणादिके) गदासिंहः ।

**क्षीरतरङ्गिणी**—(धातुपाठे) क्षीरस्वामी ।

**क्षीरतरङ्गिणीवृत्ति**—

**क्षीरतरङ्गिणीसङ्केतः**—(क्षीरतरङ्गिणीसारः) कर्त्ता—क्षीरस्वामी ।

**क्षीरस्वामी**—काश्मीरदेशीयः । अष्टमशतकम् । अमरकोषे क्षीरतरङ्गिणीकर्त्ता ।

**क्षेमङ्करः**—टीका सारस्वते।

**क्षेमेन्द्रन्यासः**— क्षेमेन्द्रकृतः।

ख

**खिलः**— व्याकरणविशेषः। इत्सिङ्कथितः।

**खिलपाठः**-- धातुपाठः। जयादित्यपण्डितः।

ग

**गङ्गेशशर्मा**—कातन्त्रकौमुदी। नायं नैयायिकः।

**गणप्रकाशः**—नारायणन्याय पञ्चाननः।

**गणपाठः**—(१) आपिशलिः, (२) पाणिनिः, (३) पद्मनाभः, (४) हेमचन्द्रः।

**गणरत्नमहोदधि-टीका**— वर्द्धमानः। स्वग्रन्थस्य टीका स्वयं चकार।

**गणरत्नमहोदध्यवचूरिः**— श्लोकबद्धो ग्रन्थः। कर्त्ता न ज्ञातः।

**गणसूत्रविचारः**-- मन्नुदेवः। त्रयोदशशतकम्।

**गदसिंहः**—ग्रन्थः (१) अनेकार्थध्वनिमञ्जरी, (२) क्षपणकवृत्तिः।

**गदा**—परिभाषेन्दुटीका।

**गदाधरः**—व्याकरणदीपप्रभा।

**गदाधरचक्रवर्त्ती**—नैयायिकः नवद्वीपवास्तव्यः। व्याकरणे ग्रन्थाः— (१) व्युत्पत्तिवादः, (२) उपसर्गविचारः, (३) कारकनिर्णयः, (४) सर्व्वनामविचारः, (५) प्रत्ययविचारः।

**गदाधरभट्टाचार्य्यः**—व्युत्पत्तिवादः।

**गार्ग्यः**—पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम् —ऋः प्राः १।१५, ६।३५ ११।१७, १३।३१ वाः प्राः ४।१६।

**गार्ग्यः**—अक्षरतन्त्रसूत्रव्याकरणम्।

**गालवः**—पाणिनिपूर्व्वो आचार्य्यः।

**गिरिधरशर्मा**—विभक्त्यर्थनिर्णयः।

**गिरिधरः**—विभक्त्यर्थनिर्णयः।

**गीर्व्वाणपदमञ्जरी**—वरदराजभट्टः। भट्टोजिशिष्यः। सप्तदशशतकम्।

**गुणकीर्त्तिः**—जैनः। त्रयोदशशतकम्। कातन्त्रवृत्तिटिप्पणी।

**गुणरत्नसूरिः**—क्रियारत्नसमुच्चयः।

**गूढ़फक्किकाप्रकाशः**—सिद्धान्तकौमुदीटीका। इन्द्रदत्तः।

**गूढ़प्रकाशिका** -- प्रयोगरत्नमालाटीका।

**गूढ़भाववृत्तिः**—टीका प्रक्रियाकौमुद्याम्। कृष्णशेषः। षोड़शशतकम्।

**गूढ़ार्थदीपिनी**—वृत्तिः पाणिनिसूत्रे। सदाशिवमिश्रः। सप्तदशशतकम्।

**गूढ़ार्थप्रकाशः**—टीका लघुशब्देन्दुशेखरे। वासुदेवः (१८६३-१९४२)।

**गोकुलचन्द्रः**—पिता बुधसिंहः, माता सुशीला, गुरुःजगन्नाथः। सौदर्य्यः गोपालः, जात्या वैश्यः। कालः—१८४० खीः अष्टाध्यायी वृत्तिकारः। संक्षिप्ता टीका।

**गोणिकापुत्रः**—महाभाष्यकारः स्वयमिति नागेशः।—"गोणिकापुत्रः भाष्यकारः इत्याहुः" (पः १४५२)।— उद्योतटीका।

**गोदेवः**—गणपाठप्रकाशकः (पाणिनीये)।

**गोपालगिरिः**—टीका प्रबोधचन्द्रिकायाम्। ग्रन्थनाम—सुबोधिनी।

**गोपालकृष्णशास्त्री**—महाभाष्यटीकाकृत्। ग्रन्थः शाब्दिकचिन्तामणिः। कालः अष्टादशशतकम्। चिन्तामणिरष्टाध्यायीवृत्तिरित्येके।

**गोपालदेवः**—(१) मन्युदेवः। षोड़शशतकम्। भूषणः—शब्देन्दुशेखरे। परिभाषेन्दुशेखरे टीका।

**गोपालदेवः** (२)—प्रातिशाख्य टीकाकर्त्ता।

**गोपालदेवः** (३)— विषमार्थदीपिका (सारस्वते)।

**गोपीचन्द्रः**—त्रयोदशशतम्। टीका-संक्षिप्तसारे। अपरे ग्रन्थाः—(१) संक्षिप्तसारपरिभाषासूत्रटीका, (२) तद्धितपरिशिष्टटीका।

**गोपीनाथभट्टाचार्य्यः**—(१) परिशिष्टप्रद्योतः (कातन्त्रे)।

**गोयीचन्द्रः**— विवरणम् (संक्षिप्तसारे)।

**गोवर्द्धनः**—कातन्त्रकौमुदी। टीका—गणरत्नमहोदधौ।

**गोवर्द्धनीयवृत्तिः**—औणादिके।

**गोविन्दनाथः**—गोविन्दव्याकरणम्।

**गोविन्दभट्टः**—समासवादः।

**गोविन्दः**—अम्बाकर्त्री (टीका) परिभाषेन्दुशेखरे।

**गोविन्दरामः**— शब्ददीपिका-मुग्धबोधे।

**गौतमः**— प्राचीन ऋषिः। तैः प्राः ४३८।

**गोविन्दलीलामृतम्**—व्याकरणग्रन्थः। यदुनन्दनकृतः।

**गोविन्दव्याकरणम्**— गोविन्दः।

**गौतमः**— पाणिनिपूर्व्वो वैयाकरणः। तैः प्राः ५३८ मैः प्राः ५।४०।

## च

**चकोरः**—शब्दलिङ्गार्थचन्द्रिका (टीका)।

**चक्कनशर्म्मा**—धातुसंग्रहः।

**चक्रकारकम्**—कारकचक्रम्। वररुचिः।

**चक्रपाणिः**—शेषवंशीयः। सप्तदशशतकम्। (१) प्रौढ़मनोरमाखण्डनम्, (२) कारकतत्त्वम्, (३) कारकविचारः।

**चक्री**—जाग्रहीनेतिवादः (जाग्रहीतेतिपदस्य शुद्धिविचारः)।

**चङ्गदासः**—चङ्गुवृत्तिः।

**चङ्गवृत्तिः**—चङ्गदासः। ग्रन्थस्य विषयः—कृत्-तद्धित-समासा-सनादि-धातवश्च।

**चङ्गुदासः**—वैयाकरणजीवातुः (चाङ्गुसूत्रम्)।

**चण्डपण्डितः**—प्राकृतभाषायां वैयाकरणः।

**चतुष्टयवृत्तिः**—दौर्गवृत्तिः।

**चन्द्रः**—वौद्धपण्डितः। षड़ध्यायी तस्य ग्रन्थः। चन्द्र एव चन्द्रगोमी इत्येके। उक्तं वाक्यपदीये (२।४८९)—"स नीतो बहुशाखत्वं चन्द्राचार्य्यादिभिः पुनः" इति।

**चन्द्रः**—काश्मीरदेशीयः ब्राह्मणो वैयाकरणः।

**चन्द्रकला**—भैरवमिश्रः। अष्टादशशतकम्।

**चन्द्रकीर्त्तिः**—वौद्धः। ग्रन्थः—समन्तभद्रव्याकरणम्।

**चन्द्रकीर्त्तिः**—टीकाकारः सारस्वते।

**चन्द्रगोमी**—वङ्गीयो वौद्धः। अष्टाध्यायीम् आश्रित्य कश्चिद् ग्रन्थः।

**चन्द्रलिङ्गवृत्तिः**—चन्द्रगोमी।

**चन्द्राचार्य्यः**—भर्त्तृहरिस्मृतः। उक्तं तेन वाक्यपदीये "यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः। काले स दक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः॥ पर्व्वतादागमं लब्ध्वा भाष्यवीजानुसारिभिः। स नीतो बहुशाखत्वं चन्द्राचार्य्यादिभिः पुनः॥" २।४८८-४८९।

**चर्क्करीतरहस्यम्** (चर्क्करीतम् यङ्लुगन्तम्)—कर्त्ता कविकण्ठहारः।

**चर्मशिराः**—शाब्दिको मुनिः।

**चाक्रवर्मनम्**—चक्रवर्मविरचितं व्याकरणम्।

**चाङ्गुदासः**—वैयाकरणजीवातुः।

चाङ्गसूत्रम्— जीवातुसूत्रम् इति नामान्तरम्। चाङ्गदासकृतम्।

चान्द्रव्याकरणम्—

चान्द्रव्याकरणपद्धतिः—टीका चान्द्रे। आनन्ददत्तः कर्त्ता।

चान्द्रपारायणम्—धातुग्रन्थः। पूर्णचन्द्रकृतः।

चान्द्रलिङ्गकारिका— चन्द्रकृता।

चान्द्रलिङ्गानुशासनम्—

चान्द्रवृत्तिः—चन्द्रगोमिकृता। धर्मदासकृता वा।

चारायणः— महाभाष्ये स्मृतः पतञ्जलिना।

चिच्चन्द्रिका—टीका परिभाषेन्दुशेखरे। विष्णुशास्त्री।

चिच्छुवृत्तिः—कलापे।

चित्प्रभा – टीका लघुशब्देन्दुशेखरे। ब्रह्मानन्दः सरस्वती।

चिदस्थिमाला - टीका लघुशब्देन्दुशेखरे। कर्त्ता— वैद्यनाथो नागेश-शिष्यः।

चिद्रूपाश्रमः—विषमी टीका परिभाषेन्दुशेखरे।

चिन्तामणिः—टीका शाकटायने यक्षवर्मकृता।

चिन्तामणिप्रकाशिका—अजितसेनः। द्वादशशतकम्।

चिन्तामणिवृत्तिः—जैनव्याकरणे।

चिन्तामणिः— धनेश्वरः।

चुल्लिभट्टः—न्यासे मङ्गलाचरणे—"तत्र च वृत्तिः पाणिनिप्रणीतानां सूत्राणां विवरणं चुल्लिभट्टि-नलूरादि—"

चुल्लिभट्टिवृत्तिः— पाणिनीये।

चूर्णिः—अष्टाध्यायीवृत्तिकर्त्ता। श्रीपतिदत्तेन कातन्त्रपरिशिष्टे स्मृतः। महाभाष्यमेव चूर्णिरिति केषाञ्चिन्मतम्। केषाचित् मते तु चुल्लिभट्टिकृता वृत्तिरेव चूर्णिरिति।

चैतन्यामृतव्याकरणम्—परमानन्दकृतम्।

चैत्रकुटी—(कातन्त्रवृत्तिः) वररुचिकृता।

चोक्कनाथः—दक्षिणदेशीयः। सप्तदशशतकम्। ग्रन्थः—धातुरत्नावली ४३० कारिकाः, धातुरर्थसहितो व्याख्यातो ग्रन्थे।

ज

जगद्धरभट्टः— चतुर्दशशतकम्। बालबोधिनी।

**जगन्नाथः**—कविः वैयाकरणश्च। षोडशशतकम्। कृष्णशेषशिष्यः। प्रौढ़मनोरमाखण्डने मनोरमाकुचमर्द्दनं तस्य ग्रन्थः। अलङ्कारे रसगङ्गाधरस्तस्य ग्रन्थः।

**जगन्नाथः** (२)—वर्णक्रमलक्षणा (ऋक्प्रातिशाख्ये)।

**जगन्नाथः** (३)—सारप्रदीपिका (सारस्वते)

**जगदीशतर्कालङ्कारः**—महानैयायिको नवद्वीपवास्तव्यः। शब्दशक्तिप्रकाशिका।

**जयकृष्णः** वाराणसीवास्तव्यः। सप्तदशशतकम्। ग्रन्थाः-(१) विभक्त्यर्थनिर्णयः। (२) स्फोटचन्द्रिका, (३) सुबोधिनी-सिद्धान्तकौमुद्याम्, (४) विलासः-मध्यकौमुद्याम्, (५) काचिट्टीका-लघुकौमुद्याम्।

**जयकृष्णः**—सारमञ्जरी।

**जयदेवमिश्रः**—विजया।

**जयदेवः**—इष्टतन्त्रव्याकरणम्।

**जयन्तः**—तत्त्वचन्द्रः पाणिनिसूत्रवृत्तौ विठलकृतौ।

**जयन्तः**—वाग्विघटमुकुरः (सारस्वते)।

**जयरामभट्टाचार्यः**—वङ्गीयः। कारकवादः।

**जयसिंहमिश्रः**—लिङ्गवार्त्तिककर्त्ता।

**जयादित्यः**—वैयाकरणः इत्सिङ्कथितः।

**जयादित्यः**—काशिकाकारः। कालः सप्तमशतकम्। जयादित्यः काश्मीरराजः जयापीड़ एव इति केचित्। वामनस्तु तस्य मन्त्री इति। अष्टकस्य पञ्चमाध्यायपर्य्यन्ता तस्य कृतिरिति विदुषां मतम्। शेषन्तु वामनस्य इति।

**जयानन्दसूरिः**—ग्रन्थः लिङ्गानुशासनवृत्त्युद्धारः।

**जाग्रहीतेतिवादः**—जाग्रहीतेतिपदस्य शुद्धिविचारः। कर्त्ता—चक्री।

**जातुकर्ण्यः**—पाणिनि-पूर्व्वो वैयाकरणः। द्रष्टव्यम्—वाजः प्राः ४।१२५, १६०, ५।२२।

**जिनचन्द्रः**—सिद्धान्तरत्नः—सारस्वते।

**जिनसागरः**—वृहद्-ढुण्डिकाश-कर्त्ता।

**जिनेन्द्रसूरिः**—अष्टमशतकम्। काशिकान्यासः।

**जिनेश्वरः**—अष्टाध्यायीवृत्तिकर्त्ता ।

जीवातुः—वैयाकरणजीवातुः । चाङ्ग दासकृतः ।

**जीवेश्वरभट्टाचार्य्यः**—पञ्जिका (प्रयोगरत्नमालायाम्) ।

**जुमरनन्दी**—चतुर्द्दशशतकम् । ग्रन्थः—संक्षिप्तसारव्याकरणम् ।

जुमरकौमुदी—रघुनन्दनकृता ।

**ज्येष्ठकलशः**—महाभाष्यस्य काचित् टीका ज्येष्ठकलसेन कृता इति प्रसिद्धिः । न च स्वयं तेन टीका कृता, तदुपदेशेन तच्छिष्यैरित्यपि केचित् । गोत्रेण चायं कौशिकः । पिता राजकलशः पितामहो मुक्तिकलशः, पत्नी नागदेवी च । त्रयः पुत्राः—विल्हनः, इष्टरामः, आनन्दश्च । काश्मीरप्रदेशे कोनमुखे तस्य निवास इति स्थितिः । कालः—द्वादशशतकम् ।

जैनव्याकरणम्—(१) आर्य्य-वज्रस्वामी, (२) यशोभद्रः, (३) भूतिबलिः, (४) श्रीदत्तः, (५) सिद्धनन्दी ।

जैनशब्दानुशासनम्—अभिनवशासटायनः कर्त्ता ।

जैनेन्द्रीयधातुवृत्तिः—जैनेन्द्रव्याकरणे ।

जैनेन्द्रमहाभाष्यम्—देवनन्दी ।

जैनेन्द्रलिङ्गानुशासनम्—देवनन्दी ।

जैनेन्द्रव्याकरणम्—पूज्यपाददेवनन्दी । पञ्चमशतकम् । आदर्शः पाणिनेरष्ठकम् । वैदिकप्रकरणं ग्रन्थे परित्यक्तम् । कस्मिंश्चित् संस्करणे ३००० सूत्राणि कस्मिंश्चित् ३७०० सूत्राणि ।

जैनेन्द्रव्याकरणमहावृत्तिः—अभयनन्दी । नवमशतकम् ।

जौमरधातुमाला—जुमरनन्दी ।

जौमरवृत्तिः—जुमरनन्दी ।

**ज्ञानदीपिका**—अमरकोषटीका । श्रीपतिचक्रवर्ती । चतुर्द्दशशतकम् ।

ज्योत्स्ना—वाजसनेयिप्रातिशाख्यटीका । रामचन्द्रः ।

ज्योत्स्ना टीका लघुपरिभाषेन्दुशेखरे । उदयङ्करपाठकः वाराणसेयः ।

**ज्ञानविमलगणिः**—टीका शब्दभेदप्रकाशे ।

ज्ञानामृतव्याकरणम्—काशीश्वरपण्डितः ।

**ज्ञानेन्द्रसरस्वती**—तत्त्वबोधिनी (सिद्धान्तकौमुद्याम्)

## ढ

ढुण्टिका—हैमवृत्तिव्याख्या जिनसागरकृता।

ढुण्ढिका - (सारस्वते) मेघरत्नकृता।

ढुण्ढिका - दौर्गवृत्तिव्याख्या।

## त

तत्त्वचन्द्रः— टीका प्रक्रियाकौमुद्याम्।

तत्त्वबोधिनी—सिद्धान्तकौमुदी टीका। कर्त्ता ज्ञानेन्द्रसरस्वती। वाराणसीवास्तव्यः भट्टोजिदीक्षितस्य शिष्यः।

तत्त्वविमर्शिनी —नन्दिकेश्वरकाशिकाटीका। कर्त्ता उपमन्युः।

तत्त्वादर्शः— वासुदेवशास्त्री (१८८९)।

तन्त्रप्रदीपः—न्यासे टीका। कर्त्ता मैत्रेयरक्षितः। द्वादशशतकम्।

तरङ्गिणीवृत्तिः—(धातुपाठे) क्षीरस्वामी।

तरङ्गिणी—(धातुपाठे) हर्षकीर्त्तिकृता।

तात्याशास्त्री— भूतिः परिभाषेन्दुशेखरे।

तारानाथवाचस्पतिः - आशुबोधव्याकरणम्।

तारानाथतर्कवाचस्पतिः— वङ्गीयः। ऊनविंशतकम्। सरला टीका सिद्धान्तकौमुद्याम्।

तिङन्तशिरोमणिः— शिरोमणिभट्टाचार्य्यः।

तिमन्ना—वैयाकरणो दक्षिणदेशीयः। प्रत्याहारे क्षुद्रो ग्रन्थः।

तिरुमल्लः—सुमनोरमा सिद्धान्तकौमुद्याम्।

तिरुमलयज्वा—महाभाष्यटीकाकर्त्ता। पिता मलययज्वा। ग्रन्थः—अनुपदा। सप्तदशशतकम्।

तिलकमञ्जरी—धनपालः।

तैटीकिः— शाब्दिको मुनिः।

तैत्तीरियकः पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम् तैः प्राः २३।१७, २७।१८।

तोपुरी - लिङ्गनिर्णयभूषणः।

तोलङ्गदीक्षितः—दक्षिणदेशीयः। ग्रन्थः—प्रकाशः सिद्धान्तकौमुद्याम्।

त्रिपथगा—टीका परिभाषेन्दुशेखरे। कर्त्ता - राघवेन्द्रः।

त्रिलोकनाथः—

**त्रिलोचनः**— पिता मेघदासः, पुत्रः गदाधरः। ग्रन्थः कातन्त्रपञ्जिका।

**त्रिविक्रमः**—वर्द्धमालशिष्यः। ग्रन्थः-पञ्जिकोद्योतः (कुमारे)।

**त्रिशिखा**—टीका परिभाषेन्दुशेखरे। **लक्ष्मीनृसिंहः**—अष्टादशशतकम्।

**त्र्यम्बकः**—टीका त्र्यम्बकी परिभाषेन्दुशेखरे। ऊनविंशशतकम्। सातारवास्तव्यः।

**द**

**दक्षः**—मातामहः पाणिनेः।

दण्डकधातुवृत्तिः—कलापे।

दण्डकधातुः—शिवरामेन्द्र यतिः।

**दयानन्दसरस्वती**—अष्टाध्यायीवृत्तिकारः। **ग्रन्थः—अष्टाध्यायीभाष्यम्** जन्मः १८२४ स्वर्गवासः १८८३।

**दयापालः**—रूपसिद्धिः।

**दयारत्नः**—जैनः। सारस्वत परिभाषा।

**दयारामः**—टीका मुग्धबोधे।

दर्पणम्—टीका भूषणसारे। कर्त्ता हरिवल्लभः।

दशकम्—वैयाघ्रपदीयं व्याकरणम्।

दशपादीवृत्तिः—(औणादिके) माणिक्यदेवः।

दशवलकारिका—दशवलपण्डितकृता।

**दाक्षायणः** (व्याडि)—दक्षस्य पौत्रः, दाक्षेः पुत्रः। ग्रन्थः (१) संग्रहः, (२) उत्पलिनी, (३) लिङ्गानुशासनम्।

**दाक्षिः**—पाणिनेः मातुलः।

**दाक्षी**—पाणिनेः माता।

**दाक्षीपुत्रः**—पाणिनिः।

**दानविजयः** (जैनः)—शब्दभूषणः।

दाधिमथटिप्पनी—शिवदत्तप्रणीता।

**दाल्भ्यः**—पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम्—वाजः प्राः ४।१६।

दीपव्याकरणम्—चिद्रूपः।

दीपकव्याकरणम्—श्रीभवेश्वरसूरिः।

दीपप्रभा—नारायणभट्टकृता वाररुचे।

दीपिका—महाभाषटीका। कर्त्ता—भर्तृहरिः।

**दुर्गपदप्रबोधः**— वल्लभवाचनाचार्य्यः ।

दुर्गवाक्यप्रबोधः—कुलचन्द्रकृतः ।

**दुर्गसिंहः** (प्रथमः)— विक्रमदेवस्य (यस्य नाम्ना विक्रमसंवत्) भ्राता इति प्रवादः । अमरसिंहः पाण्डित्यनिबन्धनस्तस्यैव उपाधिः । निरुक्त-टीकाकृतो दुर्गाचार्य्याद् भिन्नः ।

**दुर्गसिंहः** (द्वितीयः) (१) कातन्त्रटीका । (२) षट्कारककारिका ।

**दुर्गसिंहः** (तृतीयः —ग्रन्थः कारकरत्नः ।

**दुर्गाचार्य्यः**—निरुक्तवृत्तिः ।

**दुर्गादासः**—धातुदीपिका कविकल्पद्रुमे । शब्दार्णवकोषः ।

**दुर्गादाससिद्धान्तवागीशः**—सुबोधा (मुग्धबोधे) ।

दुर्घटवृत्तिः—पाणिनीये । कर्त्ता—शरणदेवः । द्वादशशतकम् ।

दुर्घवृत्तिसंस्करणम् (दुर्घटपदसाधने)—सर्व्वरक्षितः कर्त्ता इति प्रवादः ।

दुर्घटोद्धारः—संक्षिप्तसारे । केशवचक्रवर्त्ती कर्त्ता ।

**दुर्व्वलाचार्य्यः**—दुर्व्वलव्याकरणम् । टीका (१) लघुमञ्जुषा, (२) परिभाषेन्दुशेखरे ।

**देवः**—दैवधातुकर्त्ता ।

**देवनन्दी**—जैनेन्द्रव्याकरणकर्त्ता । पञ्चमशतकम् । अपरोग्रन्थः—सर्व्वार्थसिद्धिः ।

**देवनन्दी**—अष्टाध्यायी वृत्तिकर्त्ता । पूज्यपाद इत्यपि नामान्तरम् । ग्रन्थनाम—शब्दावतारन्यासः । कालः—पञ्चदशशतकम् । जैनदर्शने ग्रन्थः—सर्व्वार्थसिद्धिः (तत्त्वार्थधिगमटीका) ।

**देवनन्दी** (जैनः)—नवमशतकं कालः । ग्रन्थः—सिद्धान्तसारस्वत-शब्दानुशासनम् ।

देववृत्तिः—उणादिवृत्तिः । कर्त्ता—पुरुषोत्तमदेवः ।

**देवशर्मा**—समन्वयप्रदीपसंकेतः । कारिका व्याकरणदर्शने ।

देशावलीविवृतिः—जगन्मोहनकृता ।

**देवीदीनः**—ऊनविंशशतकम् । ग्रन्थः—वृत्तिः-अष्टके (पाणिनीये) ।

**देवेन्द्रसूरिः**—हैमलघुन्यासकर्त्ता ।

दैवम्—धातुग्रन्थो देवप्रणीतः ।

दैवेन्द्र जैनशब्दानुशासनम् ।

दीपोद्धरणम्—मन्नुदेवः। अष्टादशशतकम्। ग्रन्थो नागेशीयपरिभाषेन्दुशेखरे।

दीपोद्धारः—मन्नुदेवः।

दौर्गटिप्पणी—मण्डनाचार्य्यः।

दौर्गटीका—दुर्गसिंहः (द्वितीयः)।

दौर्गधातुपाठः—शार्व्ववर्मिको धातुपाठः। प्रतिसंस्कर्त्ता दुर्गसिंहः (प्रथमः)।

दौर्गवृत्तिः—दुर्गसिंहः (प्रथमः)।

दौर्गवृत्तिढुण्डिका—

द्रुतबोधः—भरतमल्लिको बङ्गीयः।

ध

धनजित्—धातुकल्पलतिका।

धनपालः—तिलकमञ्जरी।

धनेश्वरः—महाभाष्यटीकाकर्त्ता। ग्रन्थः—चिन्तामणिः। प्रक्रियारत्नमणिश्च तस्यापरो ग्रन्थः। धनेश्वरो बोपदेवस्य गुरुः। कालः—त्रयोदशशतकम्।

धनेशः—धनेश्वरः।

धर्मकीर्त्तिः—रूपावतारः। प्रक्रियाग्रन्थः पाणिनीये।

धर्मघोरः—बोधिन्यासकृत्।

धर्मदासः—लघुवृत्तिश्चान्द्रे। तस्य शिष्यश्चन्द्रगोमी।

धरणीधरः—उदयसिंहसभायां पण्डितः। कालः—षोडशशतकम्। ग्रन्थः—वैयाकरणसर्व्वस्वः (पाणिनीये)। शिक्षा (पाणिनीया)—टीकाकर्त्ता च।

धातुकल्पलतिका—धनञ्जयः।

धातुकारिका—वसुप्रणीता।

धातुकारिकावली—भट्टोजिशिष्यो वरदराजः। कालः सप्तदशशतकम्। अपरा कृतिः—(१) लघुकौमुदी (२) मध्यकौमुदी।

धातुकौमुदी—पद्मनाभः।

धातुदीपिका (१)—कविकल्पद्रुमटीका। रामालङ्कारकृता।

धातुदीपिका (२)—कविकल्पद्रुमटीका। दुर्गादासकृता।

धातुनिर्णयः— धातुकौमुदीव्याख्या ।
धातुपाठः— आपिशलिः ।
धातुपाठः—अभिनवशाकटायनः ।
धातुपाठः— दौर्गसिंहीयः ।
धातुपाठः—पाणिनीयः ।
धातुपाठः—पूज्यपादीयः ।
धातुपाठः— बोपदेवीयः ।
धातुपाठः— हर्षकीर्त्तीयः ।
धातुपाठः— शार्व्ववर्म्मिकः ।
धातुपाठः—हैमः ।
धातुपाठवृत्तिः —धातुपाठटीका ।
धातुपारायणः— धातुपारायणिकः ।
धातुप्रकाशः – बलरामपञ्चाननः । स्वकृते प्रबोधप्रकाशे परिशिष्टरूपः ।
धातुप्रदीपः—मैत्रेयरक्षितः ।
धातुप्रत्ययपञ्जिका— धर्मकीर्त्तिः । अष्टमशतकम् ।
धातुमञ्जरी—धातुसंग्रहः । कर्त्ता—काशीनाथः ।
धातुमाला—जुमरनन्दी ।
धातुमाला – कारिकारूपा । ईश्वरकान्तकृता ।
धातुरत्नमञ्जरी—रामसिंहवर्मा ।
धातुरत्नाकरः— नारायणः । सप्तदशशतकम् ।
धातुरत्नावली (१)—राधाकृष्णः ।
धातुरत्नावली (२)—पाणिनीये ग्रन्थः । कारिकारूपा । घोक्नाथः-
षोड़शशतकम् ।
धातुवृत्तिः—सायणमाधवीया ।
धातुव्याकरणम्—वङ्गसेनकृतम् ।
धातुशेषः—वोपदेवः ।

न

नकुलमुखः—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्—ऋक्तन्त ३।४।१०
टीका ।
नग्नवृत्तिः—(औणादिके) पूज्यपादः ।

**नन्दसुन्दरः** (१)—वृहद् ढुण्डिका (अंशतः)।

**नन्दसुन्दरः** (२)—अवचूरिः हैमशब्दानुशासने।

**नन्दिकेश्वरः**—काशिका शिवसूत्रे।

नन्दिकेश्वरकारिका—अष्टाविंशतिकारिकारूपा।

नन्दिकेश्वरकारिकाविवरणम्—उपमन्युकृतम्।

**नरहरिः**—बालकबोधव्याकरणम्।

**नरेन्द्राचार्य्यः**—वृत्ति-वार्त्तिक-कर्त्ता सारस्वते। कालः दशमशतकम्।

नल्लूरवृत्तिः—अष्टके। नल्लूरकृता।

**नागेशः**—उद्योतः प्रदीपे। ग्रन्थाः कृताः शतादधिकाः। कालः अष्टादशशतकम्।

**नारायणः**—महाभाष्यटीकाकर्त्ता। ग्रन्थः—महाभाष्यविवरणम्।

**नारायणः** (१)—महाभाष्यप्रदीपे टीका।

**नारायणः** (२)—शब्दभूषणः (पाणिनीये)। अपरो ग्रन्थः—(१) शब्दमञ्जरी, (२) शब्दभेदनिरूपनम्।

**नारायणः वन्द्यः**—सप्तदशशतकम्। (१) सारावली (२) धातुपारायणम्।

**नारायणचक्रवर्त्ती**—कारिकावली।

**नारायणदण्डनाथः**—हृदयहारिणी (सरस्वतीकण्ठाभरणे)।

**नारायणन्यायपञ्चाननः**—गणप्रकाशः (जौमरे)।

**नारायणभट्टः**—प्रयोगरत्नं।

**नारायणभट्टः**—दीपप्रभा (वाररुचे)।

**नारायणभट्टः**—प्रक्रियासर्व्वस्वः।

**नारायणसुधीः**—अष्टाध्यायीवृत्तिकर्त्ता। ग्रन्थः—अष्टाध्यायीप्रदीपः (नामान्तरं शब्दभूषणम्)।

निघण्टुः—वाग्भटः (प्रथमः)

**नित्यानन्दपर्व्वतीयः**—ऊनविंशशतकम्। वाराणसीवास्तव्यः। टीकाकारः—(१) महाभाष्यप्रदीपे, (२) लघुशब्देन्दुशेखरे, (३) परिभाषेन्दुशेखरे।

निपातोपायोपसर्गवृत्तिः—तिलकः काश्मीरवास्तव्यः।

निरुक्तम्—यास्कविरचितम्।

निरुक्तभाष्यम्—स्कन्दस्वामिकृतम् ।

निरुक्तवृत्तिः—दुर्गाचार्य्यकृता ।

निरुक्तभाष्यम्—उग्राचार्य्यः । ऊनविंशशतकम् ।

निर्मलदर्पणम्—टीका प्रक्रियाकौमुद्याम् ।

निल्लूरः—अष्टाध्यायीवृत्तिकारः । उक्तं न्यासे मङ्गलाचरणे—"तत्र च वृत्तिः पाणिनिप्रणीतानां सूत्राणां विवरणं चुल्लिमट्टिनिल्लूरादि—"

नीलकण्ठः—वैयाकरणसिद्धान्तरहस्यम् सिद्धान्तकौमुदीटीका ।

नीलकण्ठमखी—टीका महाभाष्यप्रदीपे ।

नीलकण्ठदीक्षितः—परिभाषावृत्तिः ।

नीलकण्ठवाजपेयी—पिता वरदेश्वरः, पितामहः रामचन्द्रः । कालः षोड़शशतकम् । महाभाष्ये टीका—भाष्यतत्त्वविवेकः । अपरो ग्रन्थः—(१) पाणिनीयदीपिका (२) परिभाषावृत्तिः (३) सुबोधिनी-सिद्धान्तकौमुद्याम् (४) तत्त्वबोधिनीटीका गूढार्थदीपिका ।

नैगी—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्—ऋक्तन्त्रम् २।६।६, ४।३।२ ।

न्यायरत्नमञ्जूषा—हेमहंसगणिः रत्नेश्वरशिष्यः । १४५१ खीः । परिभाषाग्रन्थः ।

न्यासः—

कातन्त्रे—शिष्यहितन्यासः—उग्रभूतिः

सिद्धसूत्रे—हैमन्यासः—उदयचन्द्रः

पाणिनाये—क्षेमेन्द्रन्यासः—क्षेमेन्द्रः

पाणिनीये—काशिकान्यासः—जिनेन्द्रवुद्धिः

जैनेन्द्रीये—क्षपणकमहान्यासः—देवनन्दी

सिद्धसूत्रे—लघुन्यासः—देवेन्द्रः

पाणिनीये—बोधिन्यासः—धर्मघोरः

शाकटायनीये—शाकटायनन्यासः—प्रभाचन्द्रः

पाणिनीये—शब्दार्णवः—रामचन्द्रः

विद्याधरीये—विश्रान्तन्यासः—वामनः

वृहन्न्यासः—हेमचन्द्रः ।

न्यासव्याख्या—अनुन्यासः— इन्दुमित्रः

न्यासोद्योतः—मल्लिनाथः

तन्त्रप्रदीपः—मैत्रेयरक्षितः ।

न्यासोद्योतः—मल्लिनाथः (काव्यटीकाकृत्) ।

प

**पञ्चग्रन्थिः**- बुद्धिसागरीयं व्याकरणम् ।

पञ्चपादी (वृत्तिः)—औणादिके उज्ज्वलदत्तः ।

पञ्चपादी—औणादिके । माणिक्यदेवः ।

**पञ्चालः**—पाणिनिपूर्व्वो वैयाकरणः । ऋः प्राः २।३३ ।

पञ्जिका—काशिकान्यासः । जिनेन्द्रबुद्धिः ।

पञ्जिका - कातन्त्रे । त्रिलोचनकृता ।

पञ्जिका - चान्द्रे । भिक्षुरत्नमणिः ।

पञ्जिका – सुपद्मे । पद्मनाभकृता ।

पञ्जिका—प्रयोगरत्नमालायाम् । जीवेश्वरकृता ।

**पण्डितः**—चित्प्रभा परिभाषेन्दुशेखरे । पण्डितो गौड़ीयः कुरुक्षेत्रवासी । ऊनविंशशतकम् ।

पण्डितवार्त्तिकम्—व्योमनाथकृतम् ।

**पतञ्जलिः**— महाभाष्यकारः ।

पदचन्द्रिका—कृष्णपण्डितकृतं व्याकरणम् । षोड़शशतकम् ।

पदमञ्जरी—हरदत्तमिश्रकृता काशिकाव्याख्या ।

पदवाक्यरत्नाकरः—गोकुलनाथमिश्रप्रणीतः । कैयटादर्व्वाचीनः । कौण्डभट्टात् प्राचीनः ।

पदव्यवस्थासूत्रकारिका—विमलकीर्त्तिः ।

पदव्यवस्थासूत्रकारिकाटीका—उदयकीर्त्तिः जैनः ।

पदार्थनिरूपणम्—रामतर्कवागीशः ।

**पद्मनाभदत्तः** (प्रथमः)—पृषोदरादिवृत्तिकारः ।

**पद्मनाभदत्तः** (द्वितीयः)—सुपद्मप्रणेता ।

परिभाषा—उपस्कारः-हरिदीक्षितः ।

परिभाषा-टीका—हरिदीक्षितः ।

परिभाषापाठः-- दुर्गसिंहः ।

परिभाषाप्रकाशः—विष्णुशेषः।

परिभाषाप्रदीपार्चिः—उदयङ्करपाठकः। नानापाठक इति नामान्तरम्। वाराणसीवास्तव्यः। अष्टादशशतकम्।

परिभाषाभास्करः—(१) हरिभास्करः अग्निहोत्री आप्पाजीपुत्रः। सप्तदशशतकम्।

परिभाषाभास्करः—(२) सीरदेवकृतः। पाणिनीयः।

परिभाषार्थसंग्रहः - विद्यानाथशास्त्री।

परिभाषार्थसंग्रहव्याख्याचन्द्रिका—

परिभाषावृत्तिः – दण्डनाथकृता।

परिभाषावृत्तिः—नीलकण्ठः।

परिभाषावृत्तिः—भावशर्मकृता।

परिभाषावृत्तिः—सीरदेवीया।

परिभाषावृत्तिटिप्पणी—श्रीमान् शर्मा। वङ्गीयः—चम्पाहाटीनिवासी। ग्रन्थस्तु सीरदेवीयपरिभाषावृत्तौ टीका।

परिभाषावृत्तिटीका—रामभद्रदीक्षितः। सप्तदशशतकम्। सीरदेवीय-परिभाषावृत्तौ टीका।

परिभाषासंग्रहः—वासुदेवशास्त्री अभ्यङ्करः। ग्रन्था अन्तर्भुक्ताः—

(१) परिभाषासूचन (पाणिनीये) ९३
(२) व्याडीयपरिभाषापाठः १४०
(३) शाकटायनपरिभाषासूत्र ६८
(४) चान्द्रपरिभाषासूत्र ८६
(५) कातन्त्रपरिभाषासूत्रवृत्ति ६१
(६) कातन्त्रपरिभाषासूत्र ९६
(७) कलापपरिभाषासूत्र ११८
(८) जैनेन्द्रपरिभाषावृत्तिः १०८
(९) कातन्त्रपरिभाषावृत्तिः ६२
(१०) भोजदेवपरिभाषासूत्र ११८
(११) न्याय संग्रहः १४०
(१२) लघुपरिभाषावृत्तिः १२०
(१३) बृहत्परिभाषावृत्तिः १३०

(१४) परिभाषावृत्ति १४०
(१५) परिभाषाभास्करः १३२
(१६) नागेशसंगृहीतपरिभाषा।

परिभाषासूचनम्—व्याड़िरचितिमिति प्रवादः। व्याड़िस्तु कात्यायनादर्वाचीनः, पतञ्जलेः प्राचीनः। ९३ परिभाषाः।

परिभाषासूत्रम्—अभिनवशाकटायनः।

परिभाषासूत्रम्—गोयीचन्द्रः।

परिभाषेन्दुशेखरः—नागेशः।

परिमलः—व्याकरणग्रन्थः। अमरचन्द्रः।

परिशिष्टप्रवोधः—गोपीनाथः।

पष्पशाह्निकम्—आदिमो भागो महाभाष्ये।

पाणिनिः—अष्टककर्त्ता।

पाणिनि-तन्द्रवाद-नक्षत्रमाला—अप्पयदीक्षितः।

पाणिनीयमतदर्पणम्—उदयचन्द्रकृतम्।

पाणिनिशिष्याः—(१) कौत्सः (२) त्रिनयनः (३) व्याघ्रभूतिः।

पाणिनीयशिक्षा—पिङ्गलः कर्त्ता इति केचित्।

पाणिनीयशिक्षा—त्रिनयनोक्ता।

पाणिनीयशिक्षाटीका—धरणीधरः।

पाणिनिसूत्रम्—पाणिनिः।

पाणिनिसूत्रवृत्तिः—काशिकादि।

पाणिनिसूत्रवार्त्तिकम्—कात्यायनः।

पाण्डित्यमतदर्पणम्—उदयचन्द्रकृतम्।

पातञ्जल—महाभाष्यम्।

पात्रकेशरी—विद्यानन्दः (जिनसेनोक्तः)।

पार्षदसूत्रवृत्तिः—उवटेन प्रातिशाख्यग्रन्थे स्मृता।

पारसीकप्रकाशः—वेदाङ्गरायः।

पारिजातव्याकरणम्—जौमरसम्प्रदाये। रामहरिकृतम्। कालः १८१८ खीः।

पिङ्गलाचार्य्यः—शिक्षा पाणिनीये इत्येके।

पुञ्जराजः (पुण्यराज इति नामान्तरम्)—टीका वाक्यपदीये। द्वादशशतकम्।

**पुण्डरीकविद्यासागरः**—कातन्त्रप्रदीपः ।

**पुण्यनन्दनः**- रूपमाला ।

**पुण्यराजः**—टीका वाक्यपदीये ।

**पुण्यसुन्दरगणिः**—धातुपाठटीका हैमे ।

**पुरुषकारः**—कृष्णलीलाशुकविरचितः ।

**पुरुषोत्तमदेवः**—प्रामाणिकोऽयमचार्य्यः बङ्गप्रान्तीयः । काशो द्वादश-
शतकम् । महाभाष्ये टीका प्राणपणा ।

अत्र पद्यम्—

नमो बुधाय बुद्धाय यथा त्रिमुनिलक्षणम् ।
विधीयते प्राणपणा भाषायां लघुवृत्तिका ॥

कुण्डलीव्याख्यानमपि तद्रचितम् । तदुक्तम्—समाख्यातश्च पुरुषोत्तमदेवः परिसमाप्तसकलकार्य्यकलापः कुण्डलीव्याख्याने बद्धपरिकरः प्रतिजानीते—

"कुण्डलीसप्तके येऽर्था दुर्बोधाः फणिभाषिता ।
ते सर्व्वे प्रतिपाद्यन्ते साधुशब्देन भाषया ॥
यदि दुष्प्रयोगशाली स्यां फणिभक्ष्यो भवाम्यहम् ।"—

अपरे तस्य ग्रन्था व्याकरणे—

१ । कारककारिका २ । भाषावृत्तिः
३ । दुर्घटवृत्तिः ४ । परिभाषावृत्तिः
५ । ज्ञापकसमुच्चयः ६ । उणादिवृत्तिः
७ । कारकचक्रम् ।

त्रिकाण्डशेषः, अमरकोषपरिशिष्टम्, हारावली, वर्णदेशना-इत्येते चापि देवस्य ग्रन्थाः ।

**पुरुषोत्तमविद्यावागीशः**—वङ्गीयः ; पञ्चदशशतकम् । ग्रन्थः प्रयोग-
रत्नमाला ।

**पूर्णचन्द्रः**—चान्द्रपारायणकृत् ।

**पुष्करसादिः**—पौष्करसादिः द्रष्टव्यः ।

**पृथिवीश्वरः**—सर्व्वलक्षणा ।

**पृथ्वीधराचार्य्यः**—कातन्त्रविवरणम् ।

**पेद्दु भट्टः**—औणादिकपदार्णवः ।

पेरुसूरिः— पेदुभट्टः-औणादिपदार्णवकृत् ।

पौष्करसादिः—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्—तैः प्राः ५।३७, ३८ । १३।१६, १४।२, १७।६ मैः प्राः ५।३९, ४० । २।११६, २।५।६ ।

प्रकीर्णं—वाक्यपदीयस्य अंशविशेषः ।

प्रकीर्णव्याख्या—वाक्यपदीये । कर्त्ता हेलाराजः ।

प्रक्रियाकौमुदी—रामचन्द्रः । पञ्चदशशतकम् ।

प्रक्रियाप्रकाशः—शेषपण्डितकृतः ।

प्रक्रियाप्रसादः—टीका प्रक्रियाकौमुद्याम् । विरलस्वामी कर्त्ता ।

प्रक्रियारत्नमणिः—धनेश्वरः ।

प्रक्रियार्णवः—मदनपञ्चाननः ।

प्रक्रियाकौमुदीवृत्तिः—शेषकृष्णपण्डितः ।

प्रक्रियाकौमुदीसारः—काशीनाथः ।

प्रक्रियाप्रदीपः—चक्रपाणिदत्तः ।

प्रक्रियासंग्रहः—अभयचन्द्रः शाकटायनीये ।

प्रयुक्ताख्यातमञ्जरी—सारङ्गकविः ।

प्रवर्त्तकोपाध्यायः—कैयटप्रकाशिका ।

प्रक्रियासर्व्वस्वः— नारायणभट्टः ।

प्रत्याहारसूत्रम्—शिवसूत्रम् ।

प्रदीपः—महाभाष्यटीका-कैयटः ।

प्रदीपकालिका—भीमसेनः ।

प्रवोधचन्द्रिका—व्याकरणं विज्जलभूपतिकृतम् ।

प्रवोधप्रकाशः—व्याकरणम् वलरामकृतम् ।

प्रभा—टीका शब्दकौस्तुभे ।

प्रभाचन्द्रः (प्रथमः)—चन्द्रोदयप्रणेता ।

प्रभाचन्द्रः (द्वितीयः)—जैनव्याकरणप्रणेता ।

प्रभाचन्द्रः (तृतीयः)—शाकटायनन्यासः ।

प्रमोदजननी (मुग्धवोधे)—रामतर्कवागीशः ।

प्रयागवेङ्कटाद्रि—विद्वन्मुखमण्डनं महाभाष्ये ।

प्रयोगरत्नः—नारायणभट्टः ।

प्रयोगरत्नमाला—पुरुषोत्तमविद्यावागीशः ।

प्रयोगरत्नमालापञ्जिका—जीवेश्वरकृता ।

प्रयोगोन्मुखी—भट्टोजिदीक्षितः ।

प्रसिद्धपदवोधः—भरतमल्लिकः ।

प्राकृतप्रकाशः वररुचिः ।

प्राचीनवृत्तिः—

प्राच्य-पञ्चालः—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्—ऋः प्राः २।३३, २८१ ।

प्रौढ़मनोरमा—भट्टोजिदीक्षितः ।

प्रौढ़मनोरमाखण्डनम्—जगन्नाथः (रसगङ्गाधरकृत्) ।

प्रौढ़मनोरमाटीका—हरिदीक्षितः ।

प्लाक्षायनः—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्—तैः प्राः ६।६, १४ ११, १७, १८।५ । मैः प्राः ६।६, २ ६।२,३ ।

प्लाक्षिः—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्—तैः प्राः ५।३८, ६ ६, १४ १०, १७, मैः प्राः ५।४०, ६।६, २।६ ।

फ

फिट्सूत्रकारः—शान्तनवाचार्य्यः ।

ब

बलरामः - धातुप्रकाशः ।

बलरामपञ्चाननः—प्रवोधप्रकाशः ।

बाभ्रव्यः—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्-ऋः प्राः ११।६५ ।

बालंभट्टः—ताञ्जोरवासी । ग्रन्थः—(१) वालवोधिनी (२) वालरञ्जनी ।

बालतोषिणी—हरेकृष्णाचार्य्यः हरिनामाकृते ।

बालवोधिनी—वालंभट्टः । ताञ्जोरनिवासी ।

बालवोधिनी—जगद्धरः (काश्मीरीयः) कलापटीका ।

बालमनोरमा—टीका सिद्धान्तकौमुद्याम् । वासुदेवदीक्षितः ।

बालरञ्जनी—वालंभट्टः ताञ्जोरवासी ।

बालशिक्षा—व्याकरणम् । संग्रामसिंहः ।

बालकवोधः—नरहरिः ।

**बालाववोधनम्**—व्याकरणम्। काश्यपः सिंहलीयः।
**बास्कलभरराजः**—वैयाकरणः।
**बुद्धिसागरः**—पञ्चलक्षणम् (पञ्चग्रन्थी)।
**बृहच्छब्दरत्नः**—मनोरमाटीका। हरिदीक्षितकृता।
**बृहच्छब्दरत्नटीका**—बृहच्छब्दरत्नव्याख्या भवदेवः।
**बृहद्दर्पणम्**—मन्नुदेवः। अष्टादशशतकम्। ग्रन्थस्तु टीका भूषणसारे।
**बृहन्न्यासः**—हेमचन्द्रसूरिः।
**बृहद्व्याकरणसिद्धान्तमञ्जूषा**—रामकृष्णचौबेकृता।
**बृहद्वृत्तिढुण्ढिका**—

कर्त्ता— (१) उदयसौभाग्यः
(२) नन्दसुन्दरः
(३) जिनसागरः
प्रत्येकमंशतः

**बृहद्वृत्तिः**—सिद्धसूत्रे।
**बृहद्वृत्तिः**—हेमचन्द्रः।
**बृहन्मुग्धवोधः**—कृष्णचन्द्रन्यायपञ्चाननः।
**बृहस्पतिः**—पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम्-ऋकतन्त्रम् १।४
**बोधिन्यासः**—धर्म्मघोषः।
**बोपदेवगोस्वामी**—महाराष्ट्रीयः ब्राह्मणः। कालः-त्रयोदशशतकम्।
मुग्धवोधव्याकरणम्, कविकल्पद्रुमः तस्य ग्रन्थौ।
**ब्रह्मा**—पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम् ऋक्तन्त्रम् १।४।
**ब्रह्मानन्दसरस्वती**—ग्रन्थः-रत्नमहोदधिः रत्नाकरः।

भ

**भट्टजयन्तः**—अष्टाध्यायीवृत्तिकारः। स च काश्मीरदेशीयः नैयायिकः न्यायमञ्जरीकर्त्ता। पिता चन्द्रः। कालः नवमशतकम्।
**भट्टमल्लः**—आख्यातचन्द्रिका।
**भट्टोजिदीक्षितः**—महाराष्ट्रीयः। पिता लक्ष्मीधरः। भ्राता रङ्गोजिभट्टः। भ्रातृव्यः कौण्डभट्टः कालः षोड़शशतकम्। तस्य ग्रन्थाः—अष्टके—शब्दकौस्तुभः। अंशमात्रमिदानीं लभ्यते। सिद्धान्त-कौमुदी तत्कृतः प्रक्रियाग्रन्थः।

**भद्रेश्वरसूरिः**— दीपकव्याकरणम् ।

**भरतमल्लिकः**—बङ्गीयः । वर्द्धमानवास्तव्यः वैद्यः । षोड़शशतकम् ।

ग्रन्थः—(१) उपसर्गवृत्तिः (२) द्रुतबोधः ।

**भर्तृहरिः** - वसुरातो गुरुः । कालश्चतुर्थशतकम् । बहवश्च भर्तृहरय इति केचित् । ग्रन्थः—महाभाष्यदीपिका (महाभाष्ये) तत्परिमाणं २४००० श्लोकाः ।

अपरे ग्रन्था भर्तृहरिनाम्ना चलिताः—

(१) वाक्यपदीयम् (५) मीमांसाभाष्यम्

(२) भागवृत्तिः (६) वेदान्तसूत्रवृत्तिः

(३) भट्टिकाव्यम् (७) शब्दधातुसमीक्षा

(४) शतकत्रयम्

**भर्त्रीश्वरः**—अष्टाध्यायीवृत्तिकर्त्ता गणरत्नमहोदधौ वर्द्धमानः—"भर्त्रीश्वरेणापि वारणार्थमित्यत्र पुंलिङ्ग एव प्रयुक्तः ।"

उम्वेकेन श्लोकवार्त्तिके नामग्रहणात् उम्वेकादपि प्राचीनः भर्त्रीश्वरः ।

**भरद्वाजः**—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्-ऋक्तन्त्र १।४ ।

**भवदेवः**—टीका वृहच्छब्दरत्ने ।

**भरद्वाजः**—इन्द्रशिष्यः ऐन्द्रप्रचारकर्त्ता च ।

**भवानन्दसिद्धान्तवागीशः**—कारकचक्रम् ।

**भागवृत्तिः**—भागवृत्तिः कस्य कृतिरिति निश्चयेन न ज्ञातम् । भागवृत्तिर्भर्तृहरिरचिता इति केचित् । नैतद् युक्तम्- माघकाव्यादपि भागवृत्तिकृता संकलनं कृतमिति सीरदेवः । विमलमतिः भागवृत्तिकार इत्यपि केचित् । यथा तथा वा भवतु । वृत्तिरियं प्रामाण्येन स्वीकृता विद्वद्भिः । कैयटेनापि प्रदीपे भागवृत्तिवचनमुद्धृतम् ।

**भागुरिः**—प्राचीनो वैयाकरणः ।

**भानुजिदीक्षितः**—भट्टोजिपुत्रः । ग्रन्थः-रामाश्रमी ।

**भारद्वाजः**—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्-तैः प्राः २।५।२ । भाषिकसूत्रम् २।१९, ३।८ ।

भावदीपः— टीका शब्दकौस्तुभे । कर्त्ता भावमिश्रः ।

**भावदेवः**—टीका शब्दरत्ने (हारदीक्षितकर्त्तृ)।
भावप्रकाशः—टीका शब्दकौस्तुभे। वैद्यनाथकृता।
**भावशर्मा**—परिभाषावृत्तिः (कातन्त्रे)।
भावसिंहप्रक्रिया—भट्टविनायकः।
**भावसेनः**—(१) कुमारव्याकरणम् (२) कातन्त्ररूपमाला।
भाषानुशासनम्—यशःकविः।
भाषावृत्तिः—पाणिनीये। पुरुषोत्तमदेवः बङ्गीयः। द्वादशशतकम्।
भाषावृत्तिटीका—सृष्टिधरः। षोड़शशतकम्।
भाषावृत्त्यर्थविवृतिः—सृष्टिधरचक्रवर्त्ती।
भाषामञ्जरी—वेङ्कटमुष्विशास्त्री।
भाष्यकारः—पतञ्जलिः।
भाष्यदीपिका—भर्त्तृहरिः।
भाष्यप्रदीपः—कैयटाचार्य्यः।
भास्कररायदीक्षितः—दूषणः शब्दकौस्तुभे।
भिक्षुसूत्रम्—कार्म्मन्दिकृतम्।
**भीमभट्टः**—टीका परिभाषेन्दुशेखरे।
**भीमसेनः**—पाणिनीये धातुपाठव्याख्याता।
**भीमाचार्य्यः**—प्रदीपकलिका।
भूतिः—तात्याशास्त्री। टीका परिभाषेन्दुशेखरे।
**भूतिबलिः**—जैनो वैयाकरणः।
भूषणकारिका—भट्टोजिदीक्षितः।
भैमव्याकरणम्—भीमसेनः चतुर्द्दशशतकम्।
भैमीवृत्तिः—धातुग्रन्थः। भीमसेनाचार्य्यः।
भैरवमिश्रः—भैरवी परिभाषेन्दुशेखरे।
भैरवी—भैरवमिश्रः परिभाषेन्दुशेखरटीका।
भोजः—सरस्वतीकण्ठाभरणम्।
भोजव्याकरणम्—विनयसुन्दरकृतम्।
**भोलानाथः**—सन्दर्भामृतम् (मुग्धबोधे)।

**म**

मकरन्दः (१) टीका पद्मञ्जर्य्याम्। रङ्गनाथकृता।

मकरन्दः (२) टीका सुपद्मे । विष्णुमिश्रकृता ।

मङ्गरसः—चिन्तामणिप्रदीपः ।

मञ्जूषा – नागेशभट्टः ।

मणिकण्ठः—कारकखण्डनम् ।

मणिप्रकाशिका—अजितसेनाचार्य्यः ।

मण्डनाचार्य्यः—पिता वाहड़ः । कनकप्रभदेवस्य कनीयान् । मालवेन्द्रस्य प्रधानमन्त्री ।

ग्रन्थाः (१) सारस्वतमण्डणन् (३) कविकपद्रुमस्कन्धः
(२) उपसर्गमण्डणम् (४) दौर्गटिप्पणी ।

मतोन्मज्जा—टीका वैयाकरणभूषणे वनमालिविरचिता ।

मथुरेशविद्यालङ्कारः—सारसुन्दरी (सुपद्मे) ।

मदनपञ्चाननः—प्रक्रियार्णवः ।

मध्यकौमुदी—वरदराजः । सिद्धान्तकौमुदोसारः ।

मध्यमकौमुदी—टीका रामशर्म्मकृतव्याकरणे ।

मनोरमा—दौर्गधातुपाठे । रामनाथकृता ।

मनोरमाकुचमर्द्दनम्—प्रौढ़मनोरमाखण्डने जगन्नाथः (रसगङ्गाधरकर्त्ता)

मन्युदेवः—दोषोद्धारः ।

मलयगिरिः—मुष्टिसूत्रकृत् ।

मस्करीवृत्तिः—अनुभूतिस्वरूपाचार्य्यः ।

मल्लिनाथः (प्रथमः)—न्यासोद्योतः जिनेन्द्रीये ।

महानन्दः—टीका वैयाकरणभूषणसारे ।

महान्यासः—न्यासे काचित् टीका । ऊणादिसूत्रे उज्ज्वलदत्तेन स्मृतः ।

महान्यासः (क्षपणकन्यासः)—देवनन्दी ।

महावृत्तिः (सद्वृत्तिः)—काशिका । जयादित्य-वामनकृता ।

महावृत्तिः—जैनेन्द्रव्याकरणे ।

महीधरः—षोड़शशतकम् । टीका सारस्वतप्रक्रियायाम् ।

महेशः—धातुमाला ।

महेशनन्दी—षट्कारकम् ।

महाभाष्यम्—पतञ्जलिकृतम् ।

महामिश्रः—टीका व्याकरणप्रकाशे (जिनेन्द्रीये) ।

महावृत्तिः—जयादित्यवामनकृता काशिका।

महावृत्तिः—अभयनन्दी (जैनेन्द्रे)।

**माक्षव्यः**—पाणिनिपूर्वो वैयाकरणः। द्रष्टव्यम् ऋः प्राः वर्ग १।२।

**माचाकीयः**—पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम्-तैः प्राः १०।२२।

**माण्डुकेयः**—पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम्-ऋः प्राः वर्ग १ २, ३।१४।

**माथुरः**—अष्टाध्यायीवृत्तिकर्त्ता। पुरुषोत्तमदेवेन भाषावृत्तौ (१।२।३७) माथुरस्य नाम गृहीतम्। महाभाष्येऽपि (४।३।१०१) माथुरस्य नाम दृश्यते। काशिकायामपि प्रोक्तं—(४।३।१०१) "अन्येनकृता माथुरेण प्रोक्ता माथुरी वृत्तिः।"

माथुरीवृत्तिः—माथुरीवृत्तिः। कुणिः।

माधवीया धातुवृत्तिः—सायनाचार्य्यः।

माध्यन्दिनः—पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम्-वाः प्राः ८।३५।

**मानशर्मा**—विजया परिभाषाटीका।

माहेशव्याकरण—

**माक्षव्यः**—ऋक्प्रतिशाख्ये (१।२) स्मृतः आचार्य्यः।

**माचाकीयः**—प्राचीनः वैयाकरणः। उकारेकारपरौ ल्युपेते माचाकीयस्य। तैः प्राः १४।१६।

**माणिक्यदेवः**—उणादिसूत्रदशपादी।

**माण्डूकेयः**—ऋक्प्रतिशाख्ये स्मृतः। (१।१) प्राचीनो वैयाकरणः।

**माहेन्द्रः**—पाणिनिपूर्व्वो वैयाकरणः। ऐन्द्रव्याकरणस्य कर्त्ता।

माहेशसूत्रम्—प्रत्याहारसूत्राणि।

माहेश्वरसूत्राणि—प्रत्याहारसूत्राणि।

मितवृत्त्यर्थ संग्रहः—पाणिनीये। उदयनकृतः।

मिताक्षरा—पाणिनिवृत्तिः-अन्नंभट्टकृता।

**मीमांसकः**—पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम्-तैः प्राः-५।४१।

**मुग्धवोधव्याकरणम्**—वोपदेवकृतम्।

**मुग्धवोधटीका** (सुवोधा)—दुर्गादासविद्यावागीशः।

**मुग्धवोधटीका** (प्रमोदजननी)—रामतर्कवागीशकृता।

**मुग्धवोधवार्त्तिकटीका**—रामचन्द्रविद्यालङ्कारः।

मुष्टिसूत्रम्— जैनव्याकरणम्-मलयगिरिकृतम् ।

मुष्टिवृत्तिः— मलयगिरिः ।

मेघविजयः—एकादशशतकम् । हेमकौमुदी सिद्धान्तकौमुदीसदृशा ।

मेघरत्नः—सारस्वतव्याकरणढुण्ढिकाकृत् ।

मैत्रायणीयप्रातिशाख्यम्—सन्धि-स्वरौ धृतौ ।

मैत्रेयरक्षितः—महाभाष्यटीकाकर्त्ता । यद्यपि रक्षितस्य न कश्चिदुपोलभ्यो ग्रन्थस्तथापि सीरदेवेन बहुशः समुल्लेखात् ज्ञायते रक्षितेनापि कृता काचित् टीका भाष्ये । स चायं वङ्गीयो बौद्धः । द्वादशशतकं तस्य कालः । न्यासे तत्त्वप्रदीपस्तस्यैव ग्रन्थः । धातुप्रदीपः दुर्घंवृत्तिश्च तस्यैव कृती ।

मोक्षेश्वरः—चतुर्द्दशशतकम् । टीका कातन्त्रे ।

मौद्धबोधवृत्तिः—बोपदेवविरचितः ।

य

यक्षवर्मा—चिन्तामणिः शब्दानुशासने । शाकटायनीये ।

यङ्लुगन्तशिरोमणिः- पण्डितशेषकृष्णः ।

यमव्याकरणम्—यमारिः ।

यशःकविः—भाषानुशासनम् ।

यशःसागरः—समासशोभा ।

यशोधर्मदेवः (यज्ञवर्मा)—चिन्तामणिः । शाक-शब्दानुशासने ।

यशोभद्रः—जैनव्याकरणम् ।

यास्कः—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्—ऋः प्राः १७।४२ । ख्रीः पूः षष्ठशतकम् ततोऽपि वा पूर्व्वः ।

र

रक्षितः—मैत्रेयरक्षितः । प्राच्यदेशीयः ।

रघुनाथः— भट्टोजिदीक्षितशिष्यः । सप्तदशशतकम् । ग्रन्थः-लघुभाष्यम् सिद्धान्तकौमुद्याम् ।

रङ्गनाथः – पिता नारायणयज्वा । ग्रन्थः— मकरन्दः पदमञ्जर्य्याम् ।

रत्नपाणिः—अष्टादशशतकम् । षट्कारकविवरणम् ।

रत्नमतिभिक्षुः—चान्द्रपञ्जिका ।

रत्नमहोदधिः ब्रह्मानन्दसरस्वती ।

रत्नमालावृत्तिः—पुरुषोत्तमदेवः ।

रत्नमाला— प्रयोगरत्नमाला ।

रत्नाकरव्याकरणम्—ब्रह्मानन्दकृतम् ।

रत्नार्णवः—अष्टादशशतकम् । सिद्धान्तकौमुदीटीका । कृष्णमिश्रः ।

रत्नेशः—लक्षणसंग्रहः ।

रत्नेश्वरचक्रवर्त्ती – राजादिवृत्तिः (कलापे) ।

र-प्रत्याहारवाद—रामचन्द्रपाठकः ।

र-प्रत्याहारखण्डनम्—वैद्यनाथः पायगुण्डः ।

रमानाथशर्मा—पञ्चदशशतकम् । ग्रन्थः—(१) मनोरमा कातन्त्रधातुवृत्तौ (२) शब्दसाध्यप्रयोगः ।

रमसनन्दी—टीका षट्कारिकाविवरणे ।

रसवती—संक्षिप्तसारटीका क्रमदीश्वरकृता । सप्तदशशतकम् ।

रमाकान्तचक्रवर्त्ती—विभक्तितत्त्वार्थवादः ।

रमानाथचक्रवर्त्ती (प्रथमः)—पितामाहो रत्नेश्वरस्य । ग्रन्थः मनोरमा ।

रमानाथचक्रवर्त्ती (द्वितीयः)—रत्नेश्वरस्य पिता । ग्रन्थः—वक्तव्यवृत्तिः ।

रसवतीवृत्तिः—(जौमरकृतिः) जुमरनन्दी ।

राघवेन्द्रः—ऊनविंशशतकम् । (१) राघवेन्द्रव्याकरणम् । (२) शब्देन्दुशेखरखण्डनम् ।

राजन्सिंहः—शब्दवृहती-महाभाष्यटीका ।

राजादिवृत्तिः—रत्नेश्वरचक्रवर्त्ती ।

राजारामशास्त्री—ऊनविंशशतकम् । वाराणसेयः । ग्रन्थः—शब्दव्युत्पत्तिः ।

राधाकृष्णः—(१) धातुरत्नावली (२) अद्वयार्थः (३) वैयाकरणसर्वस्वसूचिः ।

राधावल्लभः गोस्वामी—सुबोधिनी (मुग्धबोधे) ।

रामकिङ्करसरस्वती—आशुबोधव्याकरणम् ।

रामकिशोरचक्रवर्त्ती—(१) अष्टमङ्गला, (२) शब्दबोधप्रकाशिका ।

रामकृष्णः—शब्दबोधप्रक्रिया ।

रामकृष्णभट्टः—सप्तदशशतकम् । ग्रन्थः—वैयाकरणसिद्धान्तरत्नाकरः ।

**रामकृष्णानन्दः**—टीका (महाभाष्ये) अंशतः।

**रामगोविन्दचक्रवर्त्ती**—ग्रन्थः शब्दाब्धितरी।

**रामचन्द्रः** (१)—ज्योत्स्ना वाज-प्रातिशाख्ये।

**रामचन्द्रः** (२)—नागेशशिष्यः अष्टादशशतकम् वृत्तिसंग्रहः (पाणिनीये)।

**रामचन्द्राचार्य्यः** (३)—विदग्धबोधः।

**रामचन्द्रः** (४)—पिता कृष्णाचार्य्यः। पञ्चदशशतकम्। अन्ध्रदेशीयः। ग्रन्थः—प्रक्रियाकौमुदी।

**रामचन्द्रदीक्षितः** (१)—उणादिकोषः (२) मणिदीपिका (उणादिसूत्रे) (३) शब्दभेदनिरूपणम्।

**रामचन्द्रभट्टः**—नागेशशिष्यः। पाणिनिसूत्रवृत्तिः।

**रामचन्द्रसरस्वती**—गुरुर्वासुदेवः सरस्वती। षोड़शशतकम्। विवरणम्—महाभाष्यप्रदीपे।

**रामचन्द्रविद्यालङ्कारः**—मुग्धबोधवार्त्तिकमाला।

**रामतर्कवागीशः**—(१) मुग्धबोधटीका (२) अमरकोषटीका (३) ऊणादिसूत्रटीका।

**रामदासचक्रवर्त्ती**—चन्द्रिका। कातन्त्रे कातन्त्रव्याख्यासारः।

**रामनाथचक्रवर्त्ती**—टिप्पणी कातन्त्रे।

**रामनाथचौबे**—(१) शब्देन्दुशेखरटीका (२) वैयाकरणभूषणटीका (३) वैयाकरणसिद्धान्तकौमुदीटीका। कालः—ऊनविंशशतकम्।

**रामरामविद्यावाचस्पतिः**—सप्तदशशतकम्। ग्रन्थः—लिङ्गादिसंग्रहटिप्पणी (कातन्त्रे)।

**रामनारायणः**—टीकाकारः सारस्वते।

**रामभट्टः**—टीका प्रक्रियाकौमुद्याम्।

**रामभद्रदीक्षितः**—पिता यज्ञरामः। ताञ्जोररासी। सप्तदशशतकम्। टीकाकारः परिभाषाग्रन्थे (सीरदेवे) पतञ्जलिचरितकारश्च। अपरो ग्रन्थः—उणादिमणिदीपिका।

**रामरामः**—टीका कविकल्पद्रुमे।

**रामशर्म्मा**—उणादिकोषकृत्।

**रामसिंहवर्मा**—श्रृङ्गवेषभूपतिः स तु नागेशस्य पृष्ठपोषकः। ग्रन्थः—धातुरत्नमञ्जरी।

**रामहरिपण्डितः**—पारिजातप्रणेता ।

**रामानन्दः**—सप्तदशशतकम् । टीका मुग्धबोधे ।

**रामालङ्कारः**—रामरामादभिन्न इत्येके । ग्रन्थः—सिद्धान्तचन्द्रिका सारस्वते ।

**रामाश्रमः**—सप्तदशशतकम् । ग्रन्थः-सिद्धान्तचन्द्रिका (सारस्वते) ।

**रामेश्वरः**—शुद्धाशुबोधव्याकरणम् ।

**रुद्रदेवः**—टीका सिद्धान्तभूषणे (कौण्डभट्टीयः) ।

**रुद्रधरः**—अष्टाध्यायीवृत्तिकर्त्ता मिथिलावास्तव्यः ।

रुद्रव्याकरणम्—कवीन्द्राचार्य्यसूचिपत्रे धृतम् ।

**रूपगोस्वामी**—नवद्वीपवासी वैष्णवः । हरिनामामृतव्याकरणम् ।

**रूपनारायणः**—बङ्गीयः । पञ्चदशशतकम् । ग्रन्थः-समाससंग्रहः (सुपद्मे) सुपद्मकारकम् ।

रूपप्रकाशः—जौमरे । कर्त्ता कुल्लूकभट्टः (द्वितीयः) ।

रूपमाला—विमलसरस्वती । द्वितीयः प्रक्रियाग्रन्थः पाणिनीये ।

रूपमालावृत्तिः—विमलसरस्वती ।

रूपमाला—पुरुषोत्तमदेवीये ।

रूपावतारः—धर्मकीर्त्तिः । द्वादशशतकम् । पाणिनीये प्रथमो प्रक्रिया-ग्रन्थः ।

## ल

लकारनिर्णयः—भवानन्दसिद्धान्तवागीशः ।

लघुवृत्तिः—पुरुषोत्तमदेवः । पाणिनीये ।

लघुवृत्तिः—धर्मदासः । चान्द्रे ।

लक्षणसंग्रहः—रत्नेशः ।

लघुवृत्तिः—शब्दार्णवचन्द्रिका ।

**लक्षणसूरिः** षड्भाषाचन्द्रिका (षड्भाषा)

**लक्ष्मीनृसिंहः**—अष्टादशशतकम् । (१) विलासः—सिद्धान्तकौमुद्याम् । (२) त्रिशिखा—परिभाषेन्दुशेखरे ।

लघुकौमुदी—लघुसिद्धान्तकौमुदी । वरदराजः भट्टोजिशिष्यः । सार-सिद्धान्तकौमुदी लघुकौमुद्या नामान्तरम् ।

लघुन्यासः—देवेन्द्रसूरिः हैमे ।

लघुपरिभाषावृत्तिः—द्वादशशतकम् । पुरुषोत्तमः ।

लघुचन्द्रिका—हैमे । विनयविजयगणिः ।

लघुभूषणकान्तिः—भूषणसारटीका ।

लघुभूषणदर्पणः—भूषणसारटीका ।

लघुमञ्जूषा—नागेशः । परमलघुमञ्जूषा तस्य सारः ।

लघुशब्दरत्न—मनोरमाटीका हरिदीक्षितः भट्टोजी-पौत्रः ।

लघुशब्देन्दुशेखरे—नागेशः । अष्टादशशतकम् । अपरो ग्रन्थः—वृहच्छब्देन्दुशेखरे ।

लघुशब्देन्दुशेखरव्याख्या—भूरिशो दृश्यन्ते—चिदस्थिमाला, चन्द्रकला, ज्योत्स्ना, गदा, भैरवी, विजया इत्यादि ।

लघुसारस्वतम्—कल्याणसरस्वती ।

ललितपरिभाषा—पुरुषोत्तमः ।

लालविहारी—टीका परिभाषेन्दुशेखरे ।

लिङ्गकारिका—चन्द्रकृता ।

लिङ्गनिर्णयभूषणः—तोपुरी ।

लिङ्गानुशासनटीका—पाणिनीये ।

लिङ्गानुशासनम्—

| | |
|---|---|
| (१) अभिनवशाकटायनः | (९) मोञ्जराजः |
| (२) अरुणदेवः | (१०) वामनः |
| (३) चन्द्रः | (११) वररुचिः |
| (४) दुर्गसिंहः | (१२) व्याड़िः |
| (५) देवनन्दी | (१३) शङ्करः |
| (६) पद्मनाभः | (१४) शन्तनुः |
| (७) पाणिनिः | (१५) हर्षवर्द्धनः |
| (८) वुद्धिसागरः | (१६) हेमचन्द्रः |

लिङ्गानुशासनवृत्तिः—वामनः ।

लिङ्गानुशासनवस्तूद्धारः—जयानन्दसूरिः ।

लिङ्गवार्त्तिकम्—जयसिंहः ।

लिङ्गसूत्रम्—वररुचिः ।

लिङ्गादिसंग्रहटिप्पणी रामनाथः ।

**लीलाशुकः**—पुरुषकारः (ग्रन्थः)।

**लोकेशाचार्य्यः**—सारस्वततत्त्वदीपिका।

**व**

**वक्तव्यवृत्तिकारः**— रमानाथचक्रवर्त्ती।

**वङ्गसेनः**—आख्यातप्रकरणम्।

**वनमाली**—सप्तदशशतकम्। ग्रन्थः-(१) मतोन्मज्जा—कौण्डीयभूषणसारे (२) सिद्धान्ततत्त्वविवेकः।

**वरदराजभट्टः**— भट्टोजिशिष्यः। सप्तदशशतकम्। (१) गीर्व्वाणपदमञ्जरी (२) लघुसिद्धान्तकौमुदी (३) मध्यसिद्धान्तकौमुदी (४) धातुकारिकावली।

**वररुचिः**—अष्टाध्यायीवृत्तिकर्त्ता। "विक्रमादित्यभूपस्य कीर्त्तिसिद्धेर्निदेशतः। श्रीमान्वररुचिर्धीमांस्तनोति पत्रकौमुदीम्।" कात्यायनः नामान्तरम्। बहवो हि वररुचयः।

**वररुचिः** (कात्यायनः)—वार्त्तिकम्।

**वररुचिः**— लिङ्गवृत्तिः, लिङ्गकारिका च।

**वररुचिः**—प्रयोगमुखमण्डनम्। (कारक-समास-तद्धित-कृदन्त)।

**वररुचिः**- पतञ्जलेरर्व्वाचीनः। प्राकृतप्रकाशः।

वररुचिलिङ्गसूत्रम्—

वर्णदेशना—पुरुषोत्तमदेवः।

वर्णप्रकाशः—घनश्यामः।

वर्णविवेकचन्द्रिका—काशीनाथः।

**वणिकुबेरनाथः**—प्राचीनो वैयाकरणः। ग्रन्थः—शब्दविवरणम्। पतञ्जलिः वररुचिः सर्व्ववर्मा भर्त्तृहरिः—इत्येतेषां मतमाकलय्य निर्मितो ग्रन्थः।

**वर्द्धमानः**—गोविन्दसूरिशिष्यः। जैनः। कालो द्वादशशतकस्य प्रथमो भागः। ग्रन्थः-(१) गणरत्नमहोदधिः (२) महोदधौ स्वकृता च टीका। महोदधिरष्टाध्यायात्मकः (३) कातन्त्रविस्तरः (४) क्रियागुप्तकम्।

वर्द्धमानसंग्रहः—कृष्णमिश्रः।

**वर्द्धमानोपाध्यायः** गणरत्नमहोदधिः।

वरुणव्याकरणम्—

वल्लभः—टीका शब्देन्दुशेखरे।

वसुः—धातुकारिका।

वाक्यकारः—वररुचिः कात्यायनः।

वाक्यकारः सिद्धसेनगणिदिवाकरः।

वाक्यपदीयम्—भर्तृहरिविरचितम्। सप्तमशतकं कालः।

वाक्यपदीयटीका प्रथम-द्वितीय-काण्डात्मके ग्रन्थे—पुण्यराजः। भर्तृहरिरेव प्रथमकाण्डे टीकाकर्त्ता इत्यपि केचित्।

वाक्यप्रकाशः—उदयधर्मसूरिः। सप्तदशशतकम्। गुजराटवासी।

वाक्यप्रदीपः—वाक्यप्रकाशटीका सम्भवतः)।

वाक्यार्थचन्द्रिका—हरिशास्त्रीभागवतः। टीका परिभाषेन्दुशेखरे।

वाग्भटः (प्रथमः)—वैयाकरणः।

वाचकरत्नहारः—हेमनन्दनगणिः।

वाचकवार्त्तिकम्—सुधाकरः।

वाजप्यायनः—प्राचीनः शाब्दिकः। महाभाष्यम्—"वाजप्यायन आचार्य्यः न्याय्यां मन्यते।" (१।२।६४)

वाजसनेयिप्रातिशाख्यम्—कात्यायनः।

वाडवः—प्राचीनो वैयाकरणः।

वाड़वीकरः—पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम्—तैः प्राः १४।१३।

वात्सप्रः—पाणिनिपूर्व्वो वैयाकरणः। तैः प्राः १० २३ मैः प्राः १०।२३

वादनक्षत्रमाला—अप्पय्यदीक्षितः। सप्तदशशतकम्। जगन्नाथसमकालः।

वाविमट्टसुन्दरः—जयन्तः। सारस्वते ग्रन्थः।

वाभटः—वैयाकरणः।

वामनः—(१) अष्टाध्यायीवृत्तिकर्त्ता। अन्त्यमध्यायत्रयं तेन निर्मितं काशिकायाः। सप्तमशतकं तस्य कालः।

वामनः (२) काश्मीरीयः। दशमशतकम्। ग्रन्थाः-(१) विश्रान्तविद्याधरः (२) उणादिसूत्रवृत्तिः (३) लिङ्गानुशासनम्।

वायुव्याकरणम्

वारणावतेशः—सप्तदशशतकम्। ग्रन्थः अमृतश्रुतिः (प्रक्रियाकौमुद्याम्)।

**वाररुचसंग्रहः**—

**वाररुचकारिका**—न यदि कात्यायनः कर्त्ता अन्यः कश्चित् तस्य समकालः।

**वाररुचम्**—वाररुचव्याकरणम् वररुचिकृतम्।

**वार्त्तिकम्**—कर्त्ता (१) कात्यायनः (२) कृष्णनाथः (३) रामनाथः (४) रामचन्द्रः (मुग्धबोधे) (५) व्याघ्रपाद् (६) सुधाकरः (वाचकवार्त्तिकम्)।

**वार्त्तिकपाठः**—कात्यायनकृतः।

**वार्त्तिकमाला**—रामचन्द्रः-मुग्धबोधे।

**वार्त्तिकसूत्रम्**—मुग्धबोधे। कृष्णनाथः।

**वार्षायणिः**—निरुक्तस्मृतो महाभाष्यधृतश्च कश्चित् प्राचीनो वैयाकरणः।

**वाल्मीकिः**—पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम्—ते प्राः ५।३६, १८।६। मैः प्राः ५।३८ २।६, २।३०, ९।४।

**वासुदेवदीक्षितः**—ताञ्जोरवासी। अष्टादशशतकम्। बालमनोरमा-सिद्धान्तकौमुद्याम्।

**वासुदेवशास्त्री (१८६९-१९४२)**—(१) गूढार्थप्रकाशः-लघुशब्देन्दुशेखरे। (२) तत्त्वादर्शः-परिभाषेन्दुशेखरे।

**विकृतवल्लीटीका**—गङ्गाधरः।

**विचारचिन्तामणिः**—वोपदेवः।

**विजयगणिः**—सप्तदशशतकम्। हैमलघुप्रक्रिया।

**विजया**—परिभाषाटिप्पणी। माणशर्म्मकृता।

**विजया**—टीका लघुशब्देन्दुशेखरे। शिवनारायणः।

**विजयानन्दः** (१) कातन्त्रोत्तरः (२) कातन्त्रधातुवृत्तिः (३) क्रियाकलापः

**विज्ज्वलभूपतिः**—प्रबोधचन्द्रिका।

**विठ्ठलाचार्य्यः**—रामचन्द्रस्य पौत्रः वल्लभाचार्य्यस्य पुत्रः। ग्रन्थः—प्रक्रियाप्रसादः।

**विद्यानन्दः**—विद्यानन्दव्याकरणम्।

**विद्यानन्दः**—टीका मुग्धबोधे।

**विद्याविनोदः**—प्रतिष्ठानवास्तव्यः प्राकृतवैयाकरणः।

विद्वत्प्रबोधिनी—टीका-सारस्वतप्रक्रियायाम् रामः ।
**विनयविजयगणिः**—हैमव्याकरणम् ।
**विनयसुन्दरः**—भोजव्याकरणकर्त्ता ।
**विनायकभट्टः**—मावासिंहप्रक्रिया ।
**विप्रराजेन्द्रः**—पाणिनिसूत्रविवरणम् ।
**विनीतकीर्त्तिः**—
विन्ध्याद्रिदाक्षायणव्याडि—
विभक्तितत्त्वार्थवादः—रामाकान्तचक्रवर्त्ती ।
विभक्त्यर्थनिर्णयः—गिरिधरशर्म्मा ।
विभक्त्यर्थप्रकाशः—कमलाकरभट्टः ।
विभूतिः—शिवदत्तः ।
**विमलकीर्त्तिः**—षोड़शशतकम् । पदव्यवस्था सूत्रकारिका ।
**विमलमतिः**—भागवृत्तिः ।
**विमलसरस्वती**—रूपमाला ।
**विलासः**—जयकृष्णः वरदराजीये मध्यकौमुदीग्रन्थे ।
**विवरणपञ्जिका**—(काशिकान्यास) जिनेन्द्रबुद्धिः ।
**विवरणी**—गोयीचन्द्रकृता ।
**विश्रान्तविद्याधरव्याकरणम्**—वामनः ।
**विश्रान्तवृत्तिः**—वामनः ।
विश्रान्तन्यासः—
**विश्वकर्मशास्त्री**—सत्प्रक्रियाव्याकृतिः (प्रक्रियाकौमुदीग्रन्थे) ।
**विश्वनाथ-दण्डि-भट्टः**—ऊनविंशशतकम् । टीका-शेखरे ।
**विश्वरूपः**—षोड़शशतमम । विश्वरूपनिबन्धः ।
**विश्वकर्मा**—प्रबोधचन्द्रिका ।
विश्वेश्वरटीका - सुषेणस्य पुत्रः-कालापकः ।
**विश्वेश्वरतीर्थः**—सिद्धान्तकौमुदीटीकाकारः ।
**विश्वेश्वरसूरिः**— अष्टाध्यायीवृत्तिकर्त्ता । ग्रन्थः-व्याकरणसिद्धान्तसुधानिधिः । पिता लक्ष्मीधरः । पर्व्वतीय इति विशेषणं नामपूर्व्वं दृश्यते । आयुः ३२-३४ वर्षाः । कालः षोड़शशतकम् । अपरे ग्रन्थाः—(१) तर्ककौतूहलः (२) अलङ्कारकौस्तुभः (३) लक्ष्मीपरिणयः (४) आर्य्यासप्तशती (५) कुलप्रदीपः ।

विषमी (१)—टीका परिभाषेन्दुशेखरे। चिद्रूपः।

विषमी (२)—टीका लघुमञ्जुषाग्रन्थे। राघवचन्द्रः।

विषमी (३)—टीका परिभाषाग्रन्थे पुरुषोत्तदेवीये।

विष्णुपण्डितः—परिभाषाप्रकाशः।

विष्णुभट्टः—चिच्चन्द्रिका (नागेशीये टीका)।

विष्णुभट्टी—नागेशीये टीका (चिच्चन्द्रिका)।

विष्णुमित्रः—महाभाष्यटीकाकर्त्ता। ग्रन्थः—क्षीरोदरः। दीक्षितपादैः कौस्तुभे समुल्लिखितः।

विष्णुमित्रः—टीका ऋक्प्रातिशाख्ये।

विष्णुमिश्रः—मकरन्दटीका सुपद्मे।

विस्तरवृत्तिः—कातन्त्रविस्तरवृत्तिः।

वृत्तिदीपिका—कृष्णभट्टमौनी।

वृत्तिचन्द्रिका—काशीनाथः। अपरस्तस्य ग्रन्थः—वर्णविवेकचन्द्रिका। वैयाकरणसर्व्वस्वः।

वृत्तित्रयवार्त्तिकम्—क्षुद्रो ग्रन्थः। अज्ञातः कर्त्ता।

वृत्तिदीपिका—कृष्णभट्टमौनी।

वेदमित्रः—पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम्—ऋः प्राः १।५१।

वैदिकीप्रक्रिया—सिद्धान्तकौमुदीस्थिता।

वैदिकीप्रक्रियाटीका—सुबोधिनी जयकृष्णमौनी।

वैद्यनाथपायगुण्डः—नागेशशिष्यः। अष्टादशशतकम्।
ग्रन्थाः (१) प्रभा-शब्दकौस्तुभे (२) चिदस्थिमाला-लघुशब्देन्दुशेखरे (४ काशिका (गदा)-परिभाषेन्दुशेखरे (५) र-प्रत्याहारखण्डनम्।

वैयाकरणजीवातुः—चाङ्गदासः।

वैयाकरणभूषणः—भट्टोजिदीक्षितः। ७२ श्लोकाः।

वैयाकरणभूषणसारः—कोण्डभट्टः।

वैयाकरणभूषणसारटीका—कोण्डभट्टः।

वैयाकरणभूषणसारवृत्तिः—महानन्दः (ऊनविंशशतकम्)।

वैयाकरणशब्दमाला—सोमयाजी (१८४८ खीः)।

वैयाकरणसर्व्वस्वः—काशीनाथः। अपरे ग्रन्थाः (१) वर्णविवेकचन्द्रिका
(२) वृत्तिचन्द्रिका (३) धातुमञ्जरी।

वैयाकरणसिद्धान्तकारिका—७२ श्लोकाः। भट्टोजिदीक्षितः।

वैयाकरणसिद्धान्तकौमुदी—भट्टोजिदीक्षितः।

वैयाकरणसिद्धान्तकौमुदीटीका—बहुषु केचित्—

(१) प्रौढ़मनोरमा—भट्टोजिदीक्षितः।

(२) तत्त्वबोधिनी—ज्ञानेन्द्रसरस्वती।

(३) सुबोधिनी—जयकृष्णभट्टमौनी।

(४) बालमनोरमा—वासुदेवदीक्षितः।

(५) लघुशब्देन्दुशेखरः—नागेशभट्टः।

वैयाकरणसिद्धान्तभूषणः—वैयाकरणभूषणः।

वैयाकरणसिद्धान्तमञ्जूषा—नागेशः।

वैयाकरणसिद्धान्तरत्नाकरः—सिः कौः व्याख्या-रामकृष्णः।

वैयाकरणसिद्धान्तरहस्यम्—सिः कौः व्याख्या-नीलकण्ठः।

वैयाघ्रपदीयव्याकरणम्—(दशाध्यायी)-व्याघ्रपाद्।

वैष्णवव्याकरणरणम्—हरिनामामृतव्याकरणम् रूपगोस्वामी।

व्यङ्कटसुब्बाशास्त्री—भाषामञ्जरीव्याकरणम्।

व्याकरणचन्द्रिका—कृष्णाचार्य्यः।

व्याकरणदर्शनम्—पाणिनिदर्शनं माधवीये सर्व्वदर्शनसंग्रहे।

व्याकरणः (दीपव्याकरणम्)—चिद्रूपाश्रमः।

व्याकरणदीपिका—ओरम्भट्टः वाराणसेयः।

व्याकरणप्रकाशः- न्यासे। महामिश्रः।

व्याकरणदीपप्रभा—

व्याकरणमहाभाष्यम्—पतञ्जलिः।

व्याकरणमहाभाष्यगूढ़ार्थदीपिका—कमलाकरस्य शिष्येण सदाशिवस्य पुत्रेण
कृता।

व्याकरणमहाभाष्यप्रदीपः—कैयटः काश्मीरीयः।

व्याः मः प्रदीप विवरणम्—ईश्वरानन्दः।

व्याः मः प्रदीप विवरणम्—नारायणः।

व्याः मः प्रदीपोद्योतः—नागेशभट्टः।

**व्याकरणरत्नावली**—विद्यारत्नगौरमोहनः।

**व्याकरणसंग्रहः**—मुग्धबोधे। गङ्गाधरः।

**व्याकरणसिद्धान्तसुधानिधिः**—विश्वेश्वरसूरिपर्व्वतीयः।

**व्याख्याप्रदीपः**—

**व्याख्यामृतः**—श्रीकरः।

**व्याख्यासुधा**—

**व्याघ्रपाद्**—प्रातिशाख्ये महाभाष्ये च स्मृतो वैयाकरणः।

**व्याघ्रपाद्**—(द्वितीयः) दशाध्यायी।

**व्याघ्रभूतिः**—पतञ्जलेरर्व्वाचीनः। "व्याघ्रभूत्यादयस्तेन नेह पेटुरिति-स्थितम्" पाः ८।१।५ सूत्रव्याख्यायां सिद्धान्तकौमुदी।

**व्याघ्रभूतिः**—पाणिनिशिष्यः। ग्रन्थः श्लोकवार्त्तिकः।

**व्याडिः** (प्रथमः)—शौनकशिष्यः। ग्रन्थः—विकृतवल्ली। पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम्-ऋः प्राः ३।२३, ३।२८, ६।१३, १३।३१, १३।३७।

**व्याडिः** (द्वितीयः)—अष्टाध्यायीवृत्तिकर्त्ता। पाणिनेः भागिनेयः इति केचित्-"स्वभूतिव्याडिप्रभृतय" इति न्यासे (७।२।११) जिनेन्द्रबुद्धिः।

**व्याडीयलिङ्गानुशासनम्**—द्वितीयव्याडिविरचितम्।

**व्याडीयसंग्रहः**—प्रथमव्याडिप्रणीतः, द्वितीयव्याडि-प्रतिसंस्कृतः।

**व्युत्पत्तिवादः**—गदाधरभट्टाचार्य्यः नैयायिकः।

## श

**शङ्करभट्टः**—अष्टादशशतकम्। टीका परिभाषेन्दुशेखरे।

**शङ्करशास्त्री**—शाङ्करी (टीका) वैयाकरणभूषणसारे।

**शक्तिवादः**—गदाधरभट्टाचार्य्यकृतः।

**शवरस्वामी**—लिङ्गानुशासनम् (श्लोकबद्धम्) भिन्नो मीमांसाभाष्यकारात्।

**शर्व्ववर्माचार्य्यः**—कातन्त्रव्याकरणम्।

**शरणदेवः**—अष्टाध्यायीवृत्तिकर्त्ता। ग्रन्थः-दुर्घटवृत्तिः (रचना १०९५ शकाब्दः)।

**शब्दकौमुभः**—भट्टोजिदीक्षितः।

**शब्दकौस्तुभगुणः**—टीका शब्दकौस्तुभे। इन्द्रदत्तोपाध्यायः।

**शब्दकौस्तुभदर्पणम्**—भास्कररायदीक्षितः।

शब्दकौस्तुभप्रभा—टीका शब्दकौस्तुभे। वैद्यनाथः।

शब्दकौस्तुभव्याख्या (विषमपदव्याख्या)—कर्त्ता नागेश इति केचित्।

शब्दचन्द्रिकोद्धारः (सारस्वते)—कंसविजयः।

शब्ददीपिका—मुग्धबोधे गोविन्दरामः।

शब्दप्रभा—वाक्यपदीये।

शब्दबोधप्रक्रिया—रामकृष्णः।

शब्दभूषणा—पाणिनिसूत्रव्याख्या (संक्षिप्ता) नारायणपण्डितः।

शब्दभेदनिरूपनम्—रामचन्द्रदीक्षितः।

शब्दभेदप्रकाशः—महेश्वरवैद्यः।

शब्दमञ्जरी—नारायणपण्डितः।

शब्दमहार्णवः (बृहद्वृत्तिटीका) हेमचन्द्रकृता।

शब्दरत्नः—प्रौढ़मनोरमाटीका हरिदीक्षितः।

शब्दरत्नटीका (भावप्रकाशिका)—वैद्यनाथः।

शब्दरत्नदीपः (लघुशब्दरत्नटीका)—कल्याणः।

शब्दरत्नाकरः—काशीश्वरः।

शब्दरत्नावली—मथुरेशविद्यालङ्कारः।

शब्दरूपावलिः—शब्दरूपावलिरिति नाम्ना बहवो ग्रन्था दृश्यन्ते। ते प्राचीना। ग्रन्थकारा न ज्ञाताः।

शब्दलक्षलक्षणम् वुद्धिसागरकृतं व्याकरणम्।

शब्दविवरणम्—वर्णाकुवेरानन्दः।

शब्दव्युत्पत्तिकौमुदी—राजारामशास्त्री।

शब्दशक्तिप्रकाशिका—जगदीशतर्कालङ्कारः।

शब्दतत्त्वप्रकाशः—इन्द्रदत्तः।

शब्दसाध्यप्रयोगः—रमानाथशर्मा।

शब्दसिद्धिः—कातन्त्रे। महादेवकृता।

शब्दसुधा—अनन्तभट्टः।

शब्दानुशासनम्—अभिनवशाकटायनः (दिगम्बरीये)।

शब्दानुशासनम्—हेमचन्द्रकृतम् (श्वेताम्बीये)।

शब्दानुशासनम् (मुष्टिसूत्रम्)—विनयसिरिः (दिगम्बरीयें)।

शब्दार्णवः (हैमन्यासः)—रामचन्द्रकृतः।

शब्दार्णचन्द्रिका—जैनेन्द्रे-सोमदेवः ।

शब्दावली—रामभद्रः ।

शब्दाब्धितरी—रामगोविन्दचक्रवर्त्ती ।

शब्दामृतः—विप्रराजेन्द्रः ।

शब्दार्थरहस्यम्—रामनाथविद्यावाचस्पतिः ।

शर्व्ववर्मा—सातवाहनसभायां गुणाढ्य इति कविरासीत् । तस्य समकालः शर्व्ववर्मा कातन्त्रे सूत्रकर्त्ता । वैदिकीप्रक्रिया तु कातन्त्रे परित्यक्ता ।

शशिदेववृत्तिः—शशिदेवः ।

शब्देन्दुशेखरः—नागेशः (सिद्धान्तकौमुदीटीका) ।

शब्देन्दुशेखरखण्डणम्—कृष्णभट्टः ।

शाकटायनः—अभिनवः । राष्ट्रकूटनरपतेरमोघवर्षस्य सभायामासीत् । कालः खीः नवमशतकम् । ग्रन्थः-चतुरध्यायात्मकं व्याकरणं शब्दानुशासनम् ।

शाकटायनः—द्रष्टव्यम् ऋ: प्राः १।१६, १३।३९ वाः प्रा ३।९, ३।१२, ३।८८, ४।५, ४।१२९, ४।१९१ ।

शाकटायनः—पाणिनिपूर्व्वः । शिशिरशिष्यः । ग्रन्थः—ऋकतन्त्रप्रातिशाख्यम उणादिसूत्रम ।

शाकटायनः—पाणिनिस्मृतः .

शाकटायनः (२)—पाल्यकीर्त्तिः शाकटायनः । काल नवमशतकम् । राष्ट्रकूटनरपतेरमोघवर्षस्य सभायामासीत् । जैनः । शब्दानुशासनकर्त्ता ।

शाकटायनतरङ्गिणी—शब्दानुशासनटीका ।

शाकटायनन्यासः—अमोघवृत्तौ । प्रभाचन्द्रः कर्त्ता ।

शाकटायनप्रक्रिया—(जैनेन्द्रे) अभयचन्द्रसूरिः ।

शाकपूणिः—यास्केन स्मृतो नैरुक्तो वैयाकरणः ।

शाकलः—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्-ऋः प्राः १।६४, ११।१९ ११।६२ ।

शाकल्यः—पदपाठकर्त्ता वैदिकः ऋषिः स्मृतः पाणिनिना । द्रष्टव्यम्-ऋः प्राः ३।१३, ३।२२, ४।१३, १३।३१ वाजः प्राः ३।१० ।

**शाकल्य-पिता** – पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम्-ऋः प्राः ४।४।
**शाकल्यः**—शाकल्यव्याकरणम्।
**शाङ्गमित्रिः** पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम्-शौः चः ३।७४।
**शाङ्खायनः**—पाणिनि पूर्व्वो वैयाकरणः। द्रष्टव्यम्-तेः प्राः १५।७।
**शान्तनवः** स्वरे फिट्सूत्रकर्त्ता।
शाब्दबोधतरङ्गिणी ईश्वरानन्दः।
शाब्दबोधप्रकाशिका—रामकिशोरचक्रवर्त्ती।
**शालातुरीयः** – पाणिनिः।
**शिरोमणिभट्टाचार्य्यः**—तस्य ग्रन्थाः— (१) कारकविवेकः (२) तद्धित-कोशः (३) तिङन्तशिरोमणिः।
**शिवभट्टः** – नीलकण्ठदीक्षितस्य पौत्रः। ग्रन्थः—कुङ्कुमविकाशः (पदमञ्जरीटीका)।
**शिवरामचक्रवर्त्ती**— सिद्धान्तरत्नाकरः (कातन्त्रे)।
**शिवरामेन्द्रसरस्वती**— महाभाष्यरत्नाकरः (महाभाष्यटीका)। षोड़श-शतकादर्व्वाचीनः।
**शिवरामेन्द्रसरस्वती**—ग्रन्थाः (१) वृत्तिः-पाणिनिसूत्रे (२) सिद्धान्त-रत्नाकरः सिद्धान्तकौमुद्याम् (३) महाभाष्यप्रकाशः (महाभाष्ये)।
**शिवरामशर्मा** - कृन्मञ्जरी कलापे।
शिवसूत्रम्– प्रत्याहारसूत्रम्।
शिष्यहिता – उग्रभूतिः। अलवेरुणिकथितः।
शीघ्रबोधव्याकरणम् —
शुद्धाशुबोधपुत्रार्थव्याकरणम्—आशुबोधटीका कर्त्ता रामेश्वरः।
शुभाङ्कः (शुभाङ्गः)—उत्पलमालिनी (कोषः)।
**शूरवीरः**—पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम्-ऋः प्राः वर्गः १।३
**शूरवीरसुतः**– पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम्-ऋः प्राः वर्ग १।३।
**शूरसिंहः** –दीपिका सारस्वते।
**शेषकृष्णः**—नरसिंहपुत्रः शेषवंशीयः। प्रक्रियाकौमुदीवृत्तिकारः। अपरे ग्रन्थाः –(१) प्राकृतचन्द्रिका (२) पदचन्द्रिका (३) "उपपद-मतिङ्"-सूत्रव्याख्यानम्।
**शेषकृष्णपण्डितः**—पदचन्द्रिका।

**शेषचक्रपाणिः**—कारकतत्त्वम् ।

**शेषनारायणः**—महाभाष्ये टीका । सूक्तिरत्नाकरः । पिता वासुदेवः, पितामहः अनन्तः । कालः षोड़शशतकम् ।

**शेषविष्णुः**—पिता महादेवसूरिः, पितामहः कृष्णसूरिः, प्रपितामहः शेषनारायणः । कालः सप्तदशशतकम् । ग्रन्थः—महाभाष्य-टीका-महाभाष्यप्रकाशिका ।

**शेषशर्मा** सर्व्वमङ्गला परिभाषेन्दुशेखरे ।

**शेषशास्त्री**—टीका परिभाषेन्दुशेखरे ।

**शेषाद्रिः** सप्तदशशतकं कालः । ग्रन्थः-परिभाषाप्रकाशः । सीर-देवस्य परिभाषाग्रन्थस्तस्य आदर्शः ।

**शैत्यायनः**—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्-तैः प्राः ५।४०, १४।१, १७।८, मैः प्राः २।१।१, २।५।६, २।६।२, २।६।२, २।६।३ ।

**शौनकः**—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्-ऋः प्राः १।१, वाः प्राः ४।१२२ । अथर्व्वः प्राः १।२, शौचः १।८, २।२४ ।

**शौनकप्रातिशाख्यम्**—ऋक्प्रातिशाख्यम् ।

**श्रीकण्ठः**—अपशब्दखण्डनम् ।

**श्रीदत्तः**—जैनव्याकरणम् ।

**श्रीधरः**—टीका परिभाषेन्दुशेखरे ।

**श्रीनिवासः**—टीका परिभाषेन्दुशेखरे । (हरिभास्करकृते) ।

**श्रीपतिदत्तः**—कातन्त्रपरिशिष्टः ।

**श्रीभद्रः**—दीपकव्याकरणप्रणेता ।

**श्रीमणिकण्ठः**—कारकखण्डनमण्डनम् ।

**श्रीवल्लभाचार्य्यः** (श्रीवल्लभवाचनाचार्य्यः)—दुर्गपदप्रबोधः ।

**श्रीमानशर्मा**—प्राच्यः । विजया-परिभाषेन्दुशेखरे ।

**श्रुतपालः**—जैनधातुपाठवृत्तिः ।

**श्वेतवनवृत्तिः**—औणादिके । कर्त्ता श्वेतवनवासी ।

**श्लोकवार्त्तिकम्**—पाणिनेरर्व्वाचीनेन केनचिद् विरचितम् ।

**श्वोभूतिः**—अष्टाध्यायीवृत्तिकर्त्ता । शिष्यः पाणिनेरिति केचित् । न्यासे (७।२।११) जिनेन्द्रबुद्धिः—"केचित् श्वोभूतिव्याड़िप्रभृतयः" महाभाष्येऽपि (१।१।५६)—

"स्तोष्वाम्यहं पादिवामौदवाहि ततः श्वोभूते शातनीं पातनीञ्च ।
नेतारावागच्छन्तं धारणिं रावणिम् पश्चात् स्रंस्यते ध्वंस्यते ॥"
शिष्यश्चेत् पाणिनेस्तर्हि तत्समकाल एव ।

ष

षट्कारककारिका—दुर्गसिंहः (द्वितीयः)।
षट्-कारक-कारिका-टीका—रभसनन्दी ।
षट्-कारक-विचारः—श्लोकबद्धः । ग्रन्थकारस्तु न ज्ञातः ।
षट्कारकलक्षणः—अमरचन्द्रः । षोड़शशतकम् ।
षट्कारकबोधिनी—प्रभुदासः ।
षट्कारकनिरूपणम्—त्रिलोकनाथः ।
षट्कारक-खण्डनम्—श्रीमणिकण्ठः ।

स

संक्षिप्तसारः—क्रमदीश्वरः ।
संक्षिप्तसारटीका—गोयीचन्द्रः ।
संग्रहः—व्याड़िः ।
संग्रामसिंहः—बालशिक्षा ।
संस्कारमञ्जरी—रमाकान्तः ।
संस्कृतमञ्जरी—साधुसुन्दरः अष्टादशशतकम् (प्रारम्भे)।
सञ्जीवनी—सीतानाथसिद्धान्तवागीशः ।
सतीवृत्तिः—औणादिकव्याख्या ।
सद्वृत्तिः—काशिकावृत्तिः जिनेन्द्रबुद्धिः ।
सदाशिवपण्डितः—कालः सप्तदशशतकम् । ग्रन्थः गूढ़ार्थदीपिका ।
सदाशिव—अग्निहोत्री प्रातिशाख्यदीपिका ।
सदाशिवभट्टः—अष्टादशशतकम् (प्रारम्भः)। ग्रन्थः टीकापरिभाषेन्दु-
शेखरे ।
समन्तभद्रः—चिन्तामणि-टिप्पणीकारः । अपरो ग्रन्थाः—आप्तमीमांसा
गन्धहस्तिमहाभाष्यम् ।
समन्तभद्रव्याकरणम्—चन्द्रकीर्त्तिः ।
समासचक्रम्—बहुलप्रचारो ग्रन्थः । ग्रन्थकारस्तु न ज्ञातः ।
समासवादः—सार्व्वभौमः ।

समासवादः—गोविन्दभट्टः।

समाससंग्रहः—रूपनारायणः।

समासमञ्जरी—श्लोकबद्धः ग्रन्थः। ग्रन्थकारो न ज्ञातः।

सरस्वतीकण्ठाभरणम्—अष्टाध्यायात्मकम्। भोजराजकृतम्। एकादश-शतकम्। भोजराजस्तु न कर्त्ता इत्यपि केचित्।

सर्व्वधर-उपाध्यायः उपाध्यायसर्व्वस्वः।

सर्व्वमङ्गला—टीका परिभाषेन्दुशेखरे शेषशर्मा-ऊनविंशशतकम्।

सर्व्वलक्षणा—पृथिवीश्वरकृता।

सर्व्वेश्वरदीक्षितः—महाभाष्यटीकाकर्त्ता। ग्रन्थः-महाभाष्यस्फूर्त्तिः।

सहजकीर्त्ति-वामनाचार्य्यः-ग्रन्थः-(१) सारस्वतप्रक्रियावृत्तिः (२) ऋजु-प्राज्ञव्याकरणम्।

सांकृत्यः पाणिनिपूर्व्वो वैयाकरणः। द्रष्टव्यम्-तैः प्राः ८।२०, १०।२१, १५।१६। मैः प्राः ८।२०, १० २०, २।४।१७।

सामतन्त्रव्याकरणम्—प्राचीनो ग्रन्थः। प्रातिशाख्यरूपः।

सायनाचार्य्यः—विजयनगरवास्तव्यः। चतुर्द्दशशतकं तस्य कालः। धातुवृत्तिः सायनेन रचिता इति केचित्। भ्रातुर्माधवस्य नाम्ना चलित इति प्रचारः।

सारङ्गकविः—प्रयुक्ताख्यातसारमञ्जरीसंग्रहः।

सारनिर्णयः—औणादिको कातन्त्राणाम्। रमानाथः (प्रथमः)।

सारनिर्णयः—रमानाथः (द्वितीयः)।

सारप्रदीपिका—सारस्वते। जगन्नाथकृता।

सारमञ्जरी—जयकृष्णप्रणीता।

सारसत्वरी कविचन्द्रः।

सारसुन्दरी—मथुरेशकृता।

सारस्वतं व्याकरणम् अनुभूतिस्वरूपाचार्य्येण व्याख्यातम्। नरेन्द्रेण ७०० सूत्रैः रचितं व्याकरणम्।

सारस्वतवृत्तिः—अनुभूतिस्वरूपाचार्य्यः।

सारस्वतव्याकरणवृत्तिः—नरेन्द्राचार्य्यः।

सारस्वतढुण्ढिका—मेघरत्नकृता।

सारस्वतपरिभाषा—दयारत्नः।

सारस्वतभाष्यम्—काशीनाथः ।
सारस्वतसारः—हरिदेवः ।
सारस्वतसिद्धान्तचन्द्रिका—रामाश्रमः ।
**सिद्धनन्दी**—जैनव्याकरणकर्त्ता ।
सिद्धवाक्यानुशासनम्—हैमव्याकरणम् ।
**सिद्धानन्दः**—कातन्त्रोत्तरांशकर्त्ता ।
सिद्धान्तकौमुदी—भट्टोजिदीक्षितः ।
सि·कौ-गूढ़ फक्किकाप्रकाशः—इन्द्रदत्तोपाध्यायः ।
सिद्धान्तकौमुदीवृत्तिः—भट्टोजिदीक्षितः ।
सिद्धान्तचन्द्रिकावृत्तिः—सारस्वते ।
सिद्धान्तरत्नः—जिनचन्द्रः ।
सिद्धान्ताङ्कुरः—कातन्त्रे । शिवरामचक्रवर्त्ती ।
सिद्धान्तचन्द्रिका—सारस्वते । रामाश्रमः ।
**सीरदेवः**—परिभाषावृत्तिः । द्वादशशतकम् । प्राच्यः ।
**सुजनपण्डितः**—लिङ्गार्थचन्द्रिका ।
**सुधाकरः**—वाचकवार्त्तिकम् ।
**सुधाञ्जनः**—सिद्धान्तकौमुदीटीका । ग्रन्थकारः-न ज्ञातः ।
**सुनागः**—धातुपारायणिकः आचार्य्यः ।
सुपद्मव्याकरणम्—पद्मनाभदत्तकृतम् । मैथिलः । पञ्चदशशतकम् ।
सुपद्ममकरन्दः—विष्णुमिश्रः ।
सुपद्मसमाससंग्रहः—रूपनारायणः ।
सुपद्मसमाससंग्रहटीका—विष्णुमिश्रः ।
सुपद्मविवरणपञ्जिका—पद्मनाभः ।
सुबोधा—मुग्धबोधटीका । दुर्गादासकृता ।
सुबोधिनी—प्रबोधचन्द्रिकाटीका । गोपालगिरिः ।
सुमनोरमा—सिद्धान्तकौमुदीटीका । तिरुमल्लः ।
**सुषेणविद्याभूषणकविरत्नः**—कलापचन्द्रः ।
सूतीवृत्तिः—औणादिके ।
सुप्रकाशव्याकरणम्—अप्पय्य दीक्षितः ।
सूत्रसारप्रक्रिया—वर्द्धमानः ।

सूत्रसारव्याकरणम्—कुवेरपण्डितः ।

**सृष्टिधरचक्रवर्त्ती**—पञ्चदशशतकम् । भाषावृत्त्यर्थविवृतिः ।

**सेनकः**—वैयाकरणः ।

सेतुसंग्रहः—मुग्धबोधे-गङ्गाधरः ।

**सोमदेवसूरिः**—आर्जरिका (सोलापुर) निवासः । द्वादशशतम् ।
 ग्रन्थः—शब्दार्णवचन्द्रिका ।

सौपद्मवृत्तिः—पद्मनाभः ।

सौम्यव्याकरणम्—

**सौर्य्यभगवान्**—वैयाकरणः । महाभाष्ये (८।२।१०६ वा ३) स्मृतः ।

**स्कन्दस्वामी**—निरुक्तभाष्यकर्त्ता ।

**स्थविर-कौण्डिन्यः**—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्-तैः प्राः १७।४ ।

**स्थविरशाकल्यः**—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्-ऋः प्राः २।८१ ।

स्पर्शकारिका—भट्टोजिदीक्षितः ।

स्फोटचटकम्—कृष्णभट्टमौनी । वाराणसीवास्तव्यः । ऊनविंशतकम् (प्रारम्भः) ।

स्फोटचन्द्रिका—जयकृष्णमौनी ।

स्फोटतत्त्वनिरूपणम्—कृष्णशेषः ।

स्फोटनिरूपम् आपदेवः ।

स्फोटसिद्धिः—भरतमिश्रः ।

स्फोटसिद्धिः—मण्डनमिश्रः ।

स्फोटायनः—व्याकरणम् ।

सोपज्ञधातुपारायणम्—हैमधातुपाठः ।

स्वरविवृतिः—इन्द्रदत्तोपाध्यायः ।

## ह

**हरदत्तमिश्रः**—दक्षिणदेशीयः । कावेरीनदीतीरे ग्रामे वासः । द्रविड़ः ब्राह्मणः । ग्रन्थः—पदमञ्जरी काशिकावृत्तौ ।

हर्षवर्द्धनः—लिङ्गानुशासनम् ।

हरिकारिका—वाक्यपदीयम् । भर्तृहरिः ।

**हरिकृष्णः**— उपसर्गवादः ।

**हरिदीक्षितः**—भट्टोजिदीक्षितस्य पौत्रः । नागेशस्य गुरुः । सप्तदश- शतकस्य अन्तिमभागे स्थितिः । ग्रन्थः—(१) परिभाषोपस्कारः (२) लघुशब्दरत्नः (प्रौढ़मनोरमाटीका) (३) बृहच्छब्दरत्नः ।

**हरिनाथ द्विवेदी**— काल-उनविंशशतकम् । ग्रन्थः— अकाण्डताण्डवः (परिभाषेन्दुशेखरटीका) ।

**हरिनामामृतवृत्तिः**— श्रीजीवः नवद्वीपनिवासी ।

**हरिणामामृतव्याकरणम्**— श्रीजीवगोस्वामी ।

**हरिभास्करः**—नासिके वासः । सप्तदशशतकम् । ग्रन्थः— परिभाषा- भास्करः । सीरदेवीयां परिभाषावृत्तिमाश्रित्य कृतः ।

**हरियोगी**— शाब्दिकाभरणम् ।

**हरिरामः**—भैरवमिश्रस्य शिष्य इति प्रवादः । ख्री: १७६७ । ग्रन्थः— काशिका कौण्डभट्टीये वैयाकरणभूषणसारे ।

**हरिवल्लभः**—ग्रन्थः (१) दर्पना-भूषणसारे (२) लघुभूषणकान्ति- शब्दकौस्तुभे ।

**हरिशास्त्री**— वाक्यार्थचन्द्रिका परिभाषेन्दुशेखरे ।

**हरेकृष्ण आचार्य्यः**— बालबोधिनी हरिनामामृते ।

**हलायुधः**—कविरहस्यम् (श्लोकबद्धम्) ।

**हारीतः**—पाणिनिपूर्व्वो वैयाकरणः । द्रष्टव्यम्-तैः प्राः १४।१८ ।

**हृदयहारिणीवृत्तिः**— भोजराजः ।

**हृदयहारिणी**—टीका सरस्वतीकण्ठाभरने दण्डनाथकृता ।

**हेमन्तसूरिः**—जैनव्याकरणम् श्वेताम्बरीये । गुर्ज्जरदेशे धान्दुकावासी जैनः । आयुः-८४ वर्षाः । (१०८८-११७२) ख्रीः । राजा कुमा- रपालःपोष्ठा । ग्रन्थः— हैमशब्दानुशासनम् । सम्प्रदायकर्त्ता । सप्ताध्यायी । अष्टमोऽध्यायः प्राकृतविषयकः ।

**हेमनन्दनगणिः**— (वाचकरत्नमारः उपाधिः) सारस्वतप्रक्रियाव्याख्या ।

**हेमहंसगणिः**— न्यायसंग्रहः (परिभाषाग्रन्थः) कालः पञ्चदशशतकम् । न्यायसंग्रहस्य स्वकृताटीका न्यायार्थमञ्जुषा । न्यासोऽपरः ग्रन्थः ।

**हेलाराजः**—प्रकीर्णप्रकाशः वाक्यप्रदीये ।

हैमकौमुदी—जैनमेटविजयकृता। सप्तदशशतकं तस्य कालः। हैम-
कौमुदी सिद्धान्तकौमुदीवत् प्रमाणम्। हैमशब्दानुशासने विस्तृता-
टीका हैमकौमुदी।

हैमगणपाठः—प्रातिपदिकपाठः।

हैमधातुव्याख्या—जैनः पुण्यसुन्दरः। माधवीया धातुवृत्तिसदृशा।

हैमबृहत्प्रक्रिया—गिरिजाशङ्करशास्त्री। सिद्धान्तकौमुदीसदृशा।

हैमबृहद्वृत्तिः—हेमचन्द्रः। स्वव्याकरणे वृत्तिग्रन्थः।

हैमबृहन्न्यासः—हेमचन्द्रः।

हैमलघुप्रक्रियावृत्तिः—विनयविजयः जैनः। हैमशब्दानुशासनटीका।

हैमलघुवृत्तिः—हेमचन्द्रः।

हैमलिङ्गानुशासनविवरणम्—कल्याणसागरः सप्तदशशतकम्।

हैमलिङ्गानुशासनव्याख्या—जयानन्दः।

हैमव्याकरणम्—हेमचन्द्रः। श्वेताम्बरीयं।

हैमशब्दानुशासनलघुन्यासः—(अवचूरिः) नन्दसुन्दरः।

---

ग्रन्थानां ग्रन्थकाराणां दत्तं विवरणं मया।
यथा यथा मया प्राप्तं दत्तं मया तथा तथा॥ १

कदाचिद् लभ्यते नाम ग्रन्थस्यैव हि केवलम्।
ग्रन्थकृन्नाम तत्र च न लभ्यते कुतश्चन॥ २

कदाचिद् ग्रन्थकारस्य नाम वा लभ्यते यदि।
को वा तस्य स्थितो ग्रन्थो न हि तद् ज्ञायते पुनः॥ ३

यथा यथा मया लब्धं प्रदर्शितं तथा तथा।
स्थितस्य रक्षणं श्रेयस्ततो यत्नो मया कृतः॥ ४

कदाचिद् वा पुनः प्राप्ते न विस्तरः कृतो मया।
विस्तरस्तु न मे लक्ष्यः सारे लक्ष्यं स्थितं मम॥ ५

व्याकरणकारिकेति ग्रन्थो विरचितो मया।
इह किञ्चिन् मया प्रोक्तं प्रासङ्गिकं प्रसङ्गतः॥ ६

श्रीहरिपद दत्तः।

## ग्रन्था दृष्टाः (मुख्यतः)

आङ्गलभाषायाम्

A Dictionary of Sanskrit Grammar—
K. V. Abhyankar.

हिन्दीभाषायाम्

संस्कृत व्याकरणशास्त्रका इतिहास-युधिष्ठिर मीमांसक।

बङ्गभाषायाम्

व्याकरण दर्शनेर इतिहास—गुरुपद हालदार।

---

श्रीः

श्रीहरिपददत्तविरचिता

# व्याकरणकारिका

२२।१२।१९७४ (खीष्टाब्दाः)
६। ९।१८९६ (शकाब्दाः)
रामपुरहाटः
वीरभूमः (पश्चिमबङ्गः)

भुवनो जनको यस्य जननी च मृणालिनी ।
खुकी च भगिनी यस्य भगिनी च मनोरमा ॥ १
बाङ्लादेशे ढाकामध्ये हरिशायामभूत् च यः ।
रामपुरहाटे येन वसतिश्च कृता परे ॥ २
अध्यापना पुनर्येन वृत्तिरिह समाश्रिता ।
वय एकोनपञ्चाशत् पौषे यस्याधुना (१८९६ शकाब्दाः) पुनः ॥ ३
सोऽहं हरिपदो दत्तः करोमि कारिकामिह ।
पाणिनिसूत्रमाश्रित्य कारिका च वितन्यते ॥ ४
रामपुरहाटे स्थित्वा सर्व्वमिदं मया कृतम् ।
यस्मिन् काले कृतं यद् यत् तत्तत् पार्श्वे प्रदर्शितम् ॥ ५
व्याकरणकारिकेति नाम तस्याः प्रदीयते ।
सुखेन कारिका सा मे विचरतु महीतले ॥ ६
न चिरं जीवितं लोके कृतिर्व्वरं चिरायते ।
अन्ते मम कृतिः सा मे वहतु च स्मृतिं मम ॥ ७

## संज्ञाप्रकरणम्

### माहेश्वर-सूत्राणि

१। अ इ उण्।
२। ऋ लृक्।
३। ए ओङ्।
४। ऐ औच्।
५। ह य व रट्।
६। लण्।
७। ञ म ङ ण नम्।
८। झ भञ्।
९। घ ढ धष्।
१०। ज ब ग ड दश्।
११। ख फ छ ठ थ च ट तव्।
१२। क पय्।
१३। श ष सर्।
१४। हल्।

आगतानि महेश्वरात् तानि तत्र चतुर्दश।
अणादिकं पुनः संज्ञा तेभ्य एव प्रसिध्यति॥ १
अन्ते ये ये स्थिता वर्णा इतस्ते ते मता इह।
लणिति च स्थितं सूत्रम् अकार इद् भवेदिह॥ २
अपरेषु च सूत्रेषु अकारो दृश्यते पुनः।
उच्चारणे सहायः स्याद् अकारः स इति स्थितिः॥ ३

२५।१२।१९७३ (खीष्टाब्दाः)
९। ९।१८९५ (शकाब्दाः)
रामपुरहाटः, बीरभूमः (पश्चिमबङ्गः)

## १ (क) हलन्त्यम् १।३।३

अस्ति माहेश्वरं सूत्रं "हलि"ति च चतुर्द्दशम्।
अन्त्य इह लकारो यः स इद् भवेदिति स्थितिः॥ १
इत्वं यदा लकारस्य पुनरेवं प्रसिध्यति।
इद्गर्भं च तदा सूत्रम् "आदि"रिति प्रवर्त्तते॥ २

## १। आदिरन्त्येन सहेता १।१।७१

अन्ते य इद् भवेदत्र तेन सह धृतो यदा।
आदिः स्यान् मध्यगानाञ्च स्वस्य च ग्राहकस्तदा॥ ३
इह माहेश्वरं सूत्रं "हयवरट्" च पञ्चमम्।
"हलि"ति च पुनः सूत्रं माहेश्वरं चतुर्द्दशम्॥ ४
"हयवरट्" हकारो यः प्रथमतः स गृह्यते।
"हलि"ति यो लकारः स गृह्यते शेषतः पुनः॥ ५
"हलि"ति च तदा सिध्येत् प्रत्याहार इति स्थितिः।
व्यञ्जनानां च सर्व्वेषां स इह ग्राहको भवेत्॥ ६
"हलि"ति किं भवेद् तत्र ज्ञायते तत् च तत्त्वतः।
ये ये वर्णा धृतास्तत्र ते ते ज्ञाता भवन्ति च॥ ७
एवं यदा स्थितं तत्र "हलन्त्यं" च प्रवर्त्तते।
"हलि"ति यत् प्रतीतं तत् "हलन्त्यं" च प्रतीयते॥ ८

## २। हलन्त्यम् १।३।३

उपदेशे यदन्त्यं हल् तदित्संज्ञं भवेदिह।
हलिह व्यञ्जनं ग्राह्यं तदित् भवेदिति स्थितिः॥ ९

### पूर्व्वपक्षः

वारद्वयं धृतं सूत्रं "हलन्त्यं" कौमुदीकृता।
किमिह कारणं तावद् येन सूत्रं द्विधा धृतम्॥ १०

### उत्तरपक्षः

अष्टकस्य क्रमे व्याख्या अन्त्यं हल् इद् इति स्थितिः।
इह व्याख्या न सा योज्या दोषो भवेद् महान् यतः॥ ११

"हलन्त्यं" च स्थितं सूत्रं हलिह च न बुध्यते।
हलो ज्ञाने पुनः सूत्रं "आदि" भवेद् अपेक्षितम्॥ १२
"आदि"रिति स्थितं सूत्रम् इदिह च न बुध्यते।
इतो ज्ञाने पुनः सूत्रं "हलन्त्यं" स्यादपेक्षितम॥ १३
जायते तु महान् दोषः पुनरेवं व्यपेक्षया।
य इह च भवेद् दोष स इतरेतराश्रयः॥ १४
स दोषो न यथा दूष्येत् तथा तावद् विचेष्टितम्।
व्याख्यानमन्यथा कृत्वा दर्शिता कौमुदीकृता॥ १५
प्रथमतो धृतं सूत्रं न हल् ज्ञातं यदा पुनः।
अनाश्रित्य च हल्संज्ञां व्याख्यानं तु कृतं तदा॥ १६
धृत्वा माहेश्वरं सूत्रं "हलि"ति यद् इह स्थितम्।
एकपदं समासेन हलन्त्यमिति दर्शितम॥ १७
"हलि अन्त्यं" हलन्त्यं स्यात् तत्पुरुषो भवेदिह।
सहसुपा समासो वा पुनरिह भवेदपि॥ १८
इत्वं तथा लकारस्य निपुणेन विधाय च।
इद्गभं च पुनः सूत्रं पश्चात्तत्र प्रदर्शितम्॥ १९
इदिति च यदा ज्ञातं इद्गभं ज्ञायते तदा।
इद्गभं च पुनः सूत्रम् "आदिः" स्यात् सुगमस्तथा॥ २०
"आदि"रिति स्थितं सूत्रं प्रत्याहारे प्रवर्त्तते।
प्रत्याहारः पुनर्हल् च तेनैव लभ्यते खलु॥ २१
एवं हल् च यदा लब्धं पन्थास्तु सरलस्तदा।
व्यञ्जनं हलमाश्रित्य पुनर्व्याख्या प्रवर्त्तते॥ २२
"हलन्त्य"मिति यत् सूत्रं तद् द्विपदं धृतं भवेत्।
हलिति स्यात् पदं तावद् अन्त्यमिति पदं पुनः॥ २३
उपदेशे यदन्त्यं हल् तदित्संज्ञं भवेदिह।
अष्टकस्य क्रमे व्याख्या पुनरेवं प्रवर्त्तते॥ २४
एवं यदा कृतं तत्र दोषः कश्चिन्न विद्यते।
निर्व्विवादं भवेत् सर्व्वं सिद्धं भवेत् प्रयोजनम॥ २५
अणादिकं पुनः संज्ञा चानेनैव हि सिध्यति।
यदा संज्ञा तथा सिद्धा सूत्रं परं प्रवर्त्तते॥ २६

३ । उपदेशेऽजनुनासिक इत् । १।३।२

उपदेशे यदि स्यादच् स चानुनासिको यदि ।
स इत्संज्ञस्तदा ज्ञेयस्तथा संज्ञा भवेदिह ॥ २७
एतस्मिंश्च पुनः शास्त्रे चिह्नं किञ्चिन्न विद्यते ।
अनुनासिकता येन दृष्टिमात्रं प्रतीयते ॥ २८
परम्परा हि शिष्याणां प्रमाणमिह केवलम् ।
उच्चारणात् हि शिष्याणां सा प्रतीता भवेदिह ॥ २९
आश्रित्य नासिकां यस्य भवेदुच्चारणं यदा ।
अनुनासिकता तस्य तदा तत्र प्रतीयते ॥ ३०
लणिति च स्थितं सूत्रम् अकार इह च स्थितः ।
अनुनासिकता तस्य तथा स्थिता परम्परा ॥ ३१
अकार इद् भवेत्तस्मात् पुनरिह संगृह्यते ।
हयवरट् पुनः सूत्रं रकारो गृह्यते ततः ॥ ३२
अकारेण तथाऽन्त्येन "र" आदिः पठितो यदा ।
प्रत्याहारस्तदा "र" स्यात् र-लयो र्ग्राहको हि सः ॥ ३३
टकारस्तु स्थितो मध्ये पुनरिह न गृह्यते ।
प्रत्याहारो यदा कार्य्यं इतां न ग्रहणं भवेत् ॥ ३४
"अनुनासिक" इत्येवं पठति सर्व्वदा मुनिः ।
तेनैव ज्ञायते तावद् इतां न ग्रहणं भवेत् ॥ ३५
ग्रहणं चेदितामिष्टं "अनुनासृकं" तदा पठेत् ।
अचि कः स्यात् इको यण् स्यात् अचि पदं तथा भवेत् ॥ ३६
"अनुनासिक" इत्येव अच्कार्य्यं च न युज्यते ।
एतेनैव भवेत् सिद्धम् इतां न ग्रहणं मतम् ॥ ३७

४ । ऊकालोऽज् ह्रस्व-दीर्घ-प्लुतः । १।२।२७

उ इति च स्थितो वर्णो भवेदुच्चारितो यदा ।
कालो यावान् गतस्तेन परस्याचः स एव चेत् ॥ ३८
अचस्तदा परस्येह ह्रस्वता स्यादिति स्थितिः ।
एकमात्रो भवेद् ह्रस्व इत्यपि परिमीयते ॥ ३९
ऊ इति च स्थितो वर्णो भवेदुच्चारितो यदा ।
कालो यावान् गतस्तेन परस्याचः स एव चेत् ॥ ४०

अचस्तथा परस्येह दीर्घता स्यादिति स्थितिः।
द्विमात्रस्तु भवेद्दीर्घ इत्यपि परिमीयते॥ ४१
उ३ इति च स्थितो वर्णो भवेदुच्चारितो यदा।
कालो यावान् गतस्तेन परस्याचः स एव चेत्॥ ४२
अचस्तदा परस्येह प्लुतता स्यादिति स्थितिः।
त्रिमात्रस्तु प्लुतो ज्ञेय इत्यपि परिमीयते॥ ४३
ह्रस्वो दीर्घः प्लुतस्तावदुकारेण प्रदर्शितः।
उकारस्य च तस्यापि ह्रस्वतादिर्भवेदिह॥ ४४
कुक्कुटादेरुतं श्रुत्वा ह्रस्वादेर्नियमः कृतः।
कुक्कुटानां रुते प्रात र्ह्रस्वादिकं त्रयं स्थितम्॥ ४५
उदात्तश्चानुदात्तश्च स्वरितश्च तथा पुनः।
प्रत्येकन्तु त्रिधा तत्र तथा नव समुच्चयात्॥ ४६

## ५। उच्चैरुदात्तः। १।१।२९

उच्चैर्य उपलब्धः स्यात् स उदात्तो भवेदिह।
उच्चता स्थानतो ग्राह्या न श्रुतित इति स्थितिः॥ ४७
स्थानं ताल्वादिकं तावत् ततो वर्णः प्रजायते।
उच्चभागे प्रजातश्चेत् स उदात्तो भवेदिह॥ ४८
गात्राणाञ्च तदायामः अङ्गानां निग्रहस्तदा।
अस्निग्धता स्वरस्य स्यात् रुक्षता च तदा स्वरे॥ ४९
यः कण्ठविवरस्तस्य संवृतता तदा भवेत्।
उदात्तश्च यदा शब्दो देहे क्षोभो महांस्तदा॥ ५०
उदात्तौ च मतौ "ये" "के" "उदात्त"स्ते" पुनर्भवेत्।
"आद्युदात्त" उदात्तस्य प्रदेशः स्यादिति स्थितिः॥ ५१

## ६। नीचैरनुदात्तः। १।१।३०

नीचैर्य उपलब्धः स्यात् अनुदात्तो भवेच्च सः।
नीचभागे यदा जात अनुदात्तस्तदोच्यते॥ ५२
गात्राणामन्ववसर्गः मार्दवं च तदा तनोः।
स्वरस्य मृदुता काले स्निग्धता च तदा पुनः॥ ५३

यः कण्ठविवरस्तस्य महत्ता जायते तदा ।
अनुदात्तो यदा शब्दः शिथिलता तदा तनौ ॥ ५४
सम सिम तथा नेम भवेदिह निदर्शनम् ।
अनुदात्तप्रदेशः स्यात् "अनुदात्तो" विधिः पुनः ॥ ५५

२५।१२।७३-५५ श्लोकाः
२६।१२।७३

७ । समाहारः स्वरितः । १।२।३१

उदात्तश्चानुदात्तश्च यस्मिन् समाहृतो भवेत् ।
अच् स्वरितः स विज्ञेयः शिक्यं कन्या निदर्शनम् ॥ ५६

८ । तस्यादित उदात्तमर्द्धह्रस्वम् । १।२।३२

स्वरितः स्यात् समाहार इति पूर्व्वं प्रदर्शितम् ।
न ज्ञायते पुनस्तत्र विशेषस्तु तयोर्द्वयोः ॥ ५७
कस्मिन्नंशे उदात्तः स्यात् न ज्ञायते पुनश्च तत् ।
अनुदात्तः पुनः कस्मिन् इत्यपि च न गम्यते ॥ ५८
उदात्तो वा कियांस्तत्र अनुदात्तः कियान् पुनः ।
इत्यपि च प्रविज्ञातुं न शक्यते इति स्थितिः ॥ ५९
एवं यदा स्थितं तत्र करोति वचनं मुनिः ।
उदात्तमनुदात्तञ्च ज्ञापयति विशेषतः ॥ ६०
अर्द्धह्रस्वं यदादौ स्यात् तदुदात्तमिहोच्यते ।
अनुदात्तः परार्द्धं स्यात् इति स्थितिर्भवेदिह ॥ ६१
अर्द्धमात्रा भवेद् ग्राह्या अर्द्धह्रस्वं यदोच्यते ।
प्रविभागे पुनस्तत्र निदर्शनं प्रदीयते ॥ ६२
शिक्यमिति पदं स्याच्चेत् त्रिभागः स्याद् यथा परम् ।
आदितश्चार्द्धमात्रा स्यात् उदात्तश्च ततः पुनः ॥ ६३
परतश्चार्द्धमात्रा स्यात् अनुदात्त इति स्थितिः ।
एकश्रुतिर्भवेद् वापि प्रविभागः प्रदर्शितः ॥ ६४
उदात्त एकमात्रा स्याद् यदा दीर्घः पुनः स्वरः ।
एकमात्रा पुनश्चार्द्धमुदात्तः स्यात् स्मृतो यदा ॥ ६५
उदात्तश्चेत् परे तत्र स्वरितो वा परे यदि ।
अनुदात्तस्तदा शिष्टः स्पष्टं श्रुतौ प्रतीयते ॥ ६६

अनुदात्तः परे यत्र उदात्तः श्रूयते तदा ।
व्याख्यातं प्रातिशाख्ये च पुनरिदं विशेषतः ॥ ६७
स्वरितश्च भवेदाद्य उदात्तश्च परो भवेत् ।
अनुदात्तः श्रुतश्च स्यात् "क वोऽश्वा" स्यान्निदर्शनम् ॥ ६८
स्वरितश्च भवेदाद्य उदात्तश्च परो भवेत् ।
अनुदात्तः श्रुतश्च स्यात् "न येऽरा" स्यान्निदर्शनम् ॥ ६९
स्वरितश्च भवेदाद्यः स्वरितश्च परो भवेत् ।
अनुदातः श्रुतश्च स्यात् "योऽहृयः" भवेन्निदर्शनम् ॥ ७०
स्वरितश्च भवेदाद्य अनुदात्तः परो भवेत् ।
उदात्तः स्यात् श्रुतश्चात्र "अग्निमीले" निदर्शनम् ॥ ७१
उदात्तश्चानुदात्तश्च स्वरितश्च तथा भवेत् ।
ह्रस्वो भवेत् त्रिधा तत्र त्रयमिह च लभ्यते ॥ ७२
उदात्तश्चानुदात्तश्च स्वरितश्च तथा भवेत् ।
दीर्घो भवेत्त्रिधा तत्र त्रयमिह च लभ्यते ॥ ७३
उदात्तश्चानुदात्तश्च स्वरितश्च तथा भवेत् ।
प्लुतो भवेत् त्रिधा तत्र त्रयमिह च लभ्यते ॥ ७४
त्रयं त्रयं त्रयं तत्र योगतश्च मता नव ।
एवं ते नवसंख्यका गणिताः सर्व्वथा यदा ॥ ७५
प्रत्येकन्तु पुनस्तत्र द्विधा भवेदिति स्थितिः ।
अननुनासिकस्तत्र स्यादनुनासिकस्तथा ॥ ७६

**९ । मुखनासिकावचनोऽनुनासिकः । १।१।८**

"मुखसहिता नासिका" विग्रहश्च भवेदिह ।
द्वयोरिह समासः स्यात् स शाकपार्थिवादिवत् ॥ ७७
उच्चार्य्यते यदा वर्णो नासिकया मुखेन च ।
तदानुनासिको वर्णः स विज्ञेय इति स्थितिः ॥ ७८
न केवलं मुखेनैव नासिकया न केवलम् :
द्वयं यदा प्रलिप्तं स्यात् तदानुनासिको भवेत् ॥ ७९
पूर्व्वसूत्रे स्थिता व्याख्या संख्या नव यथा भवेत् ।
प्रत्येकन्तु पुनस्तत्र द्विधा स्यादिति दर्शितम् ॥ ८०

प्रत्येकन्तु द्विधा तत्र नव यदा द्विधा पुनः ।
अष्टादश भवेत् संख्या सर्व्वं यदा धृतं भवेत् ॥ ८१
गणितश्चेद् अकारः स्यादष्टादश तथा पुनः ।
गणितश्चेद् उकारः स्यादष्टादश तथैव च ॥ ८२
गणितश्चेद् ऋकारः स्यादष्टादश तथा पुनः ।
प्रत्येकं च स्थिता भेदा अष्टादश च संख्यया ॥ ८३
निपुणं गणितं यत्र तथा संख्या हि लभ्यते ।
ऌवर्णस्य न दीर्घः स्याद् द्वादश च तथा पुनः ॥ ८४
एचां पुन र्न दीर्घः स्यात् द्वादश हि तथैव च ।
यथा यथा भवेत् संख्या तथा तथा प्रदर्शिता ॥ ८५

१० । तुल्यास्यप्रयत्नं सवर्णम् । १।१।९

आभ्यन्तरप्रयत्नश्च स्थानं ताल्वादिकं पुनः ।
एतद् द्वयं ययोस्तुल्यं सावर्ण्यं स्यान् मिथस्तयोः ॥ ८६

स्थानम्

अकारश्च कवर्गश्च विसर्गश्च तथा पुनः ।
एषां स्थानं भवेत् कण्ठस्तस्मात् सर्व्वे भवन्ति ते ॥ ८७
इकारश्च चवर्गश्च शकारश्च तथा पुनः ।
एषां स्थानं भवेत्तालु तस्मात् सर्व्वे भवन्ति ते ॥ ८८
ऋकारश्च टवर्गश्च रकारश्च तथा च षः ।
एषां स्थानं भवेन् मूर्द्धा तस्मात् सर्व्वे भवन्ति ते ॥ ८९
ऌकारश्च तवर्गश्च लकारश्च तथा च सः ।
एषां स्थानं भवेद् दन्तस्तस्मात् सर्व्वे भवन्ति ते ॥ ९०
उकारश्च पवर्गश्च उपध्मानीय इत्यपि ।
एषां स्थानं भवेदोष्ठं तस्मात् सर्व्वे भवन्ति ते ॥ ९१
ञकारश्च मकारश्च ङकारश्च तथैव च ।
णकारश्च नकारश्च स्थानमेषां च नासिका ॥ ९२
एदैतोः कण्ठतालु च पुनः स्थानं प्रदर्शितम् ।
कण्ठोष्ठं च पुनः स्थानमोदौतो र्दर्शितं तथा ॥ ९३
जिह्वामूलं पुनर्जिह्वामूलीयस्य मतं भवेत् ।
अनुस्वारः पुनर्वर्णस्तस्य स्थानं च नासिका ॥ ९४

### यत्नः (आभ्यन्तरः)

आभ्यन्तरस्तथा वाह्यो यत्न इह द्विधा भवेत् ।
आभ्यन्तरश्चतुर्द्धा स्यात् स इह दीयते मया ॥ ९५

### यत्नस्य चातुर्विवध्यम्

स्पृष्टः स्यात् प्रथमस्तत्र ईषत्स्पृष्टो द्वितीयकः ।
विवृतः स्याद् तृतीयश्च चतुर्थः संवृतो भवेत् ॥ ९६

स्पृष्टं स्याद् यतनं तेषां स्पर्शवर्णा मता हि ये ।
अन्तःस्थानामीषत्स्पृष्टं यतनं स्यादिति स्थितिः ॥ ९७
ऊष्मणाञ्च स्वराणां स्याद् यतनं विवृतं मतम् ।
संवृतं स्यादकारस्य ह्रस्वस्येह प्रयोगतः ॥ ९८

अः प्रक्रियादशायान्तु विवृतः स्यादिति स्थितिः ।
ज्ञापितं सूत्रकारेण सूत्रं परं भवेद् यथा ॥ ९९
११। अ अ । ८।४।६८
प्रथमो विवृतश्चात्र द्वितीयः संवृतो मतः ।
अकारो विवृतः पूर्व्वं भवति संवृतः परे ॥ १००

अः प्रक्रियादशायाञ्च सर्व्वदा विवृतो भवेत् ।
विवृतो हि यदा चायं भवेत् सवर्णता तदा ॥ १०१
सवर्णता यदा सिद्धा सिध्येत् सन्ध्यादिकं तदा ।
प्रयोजनं च सन्ध्यादि विवृतः स्वीकृतस्ततः ॥ १०२
शश इति यदा शब्दः अङ्क इति यदा पुनः ।
अः विकृतस्तदा प्राह्यः प्रक्रिया हि प्रवर्त्तते ॥ १०३
प्रक्रिया च यदा शाम्येत् शाम्येद् विवृतता तदा ।
अः विवृतस्तदा याति संवृततामिति स्थितिः । १०४
शशाङ्कः स्यात् पदं तत्र तदा सन्धिः कृतः पुनः ।
प्रक्रिया तु तदा शान्ता अः संवृतो भवेत्तदा ॥ १०५
अः संवृतः स्वभावेन याति स्वभावतां पुनः ।
उच्चारणं यथा लोके स्थापयति तथा मुनिः ॥ १०६
तावता तु हतो धर्म्मः यावता प्रक्रिया स्थिता ।
प्रक्रियाऽपि समाप्ता स्यात् याति धर्मो हि धर्मिणो ॥ १०७

अष्टके तदिदं सूत्रमन्तिमे च स्थितं पुनः ।
तेन चैतदसिद्धं स्यात् सम्पूर्णमष्टकं प्रति ॥ १०८
पूर्व्वत्रासिद्धमित्येतत् शास्त्रमिह प्रवर्त्तते ।
तद्दृष्ट्या विवृतत्वं च स्थितमेव पुनर्यथा ॥ १०९

२९।१२।७३-श्लोकाः
३१।१२।७६

१२ । पूर्व्वत्रासिद्धम् । ८।२।१

सप्ताध्यायी सपादा या पूर्व्वमेव प्रदर्शिता ।
इदं पादत्रयं तस्यामसिद्धं स्यादिति स्थितिः ॥ ११०
पादत्रये पुनश्चास्मिन् योगः परो भवेच्च यः ।
योगं पूर्व्वं प्रति स स्यादसिद्धश्च तथैव च ॥ १११

पादत्रये स्थितं सूत्रं प्रयुक्तं चेत् स्थितं क्वचित् ।
सप्ताध्यायी सपादा या तस्याः सूत्रं न युज्यते ॥ ११२
पादत्रये पुनश्चास्मिन् समा खलु भवेद् गतिः ।
विधिः परो यदा युक्तो विधिः पूर्व्वो न युज्यते ॥ ११३
सूत्रेण चेत् परेण स्यात् कार्य्यं कृतं कथञ्चन ।
तदाश्रित्य पुनः कार्य्यं पूर्व्वेणेह भवेन्न च ॥ ११४
पूर्व्वाय न परः कुर्य्याद् एष नयो भवेदिह ।
उभयत्र नयश्चैवः सममेव प्रवर्त्तते ॥ ११५
निदर्शनं पुनर्वच्मि विषयः स्याद् यथा स्फुटः ।
अन्यथा दुर्ग्रहं सूत्रं गृहीतं न भवेदिह ॥ ११६

"असाव्" तावद् भवेदाद्यः "आदित्य"श्च परो भवेत् ।
संहिता च द्वयोः कार्य्या सूत्रमिदं प्रवर्त्तते ॥ ११७
"लोप" इति स्थितं सूत्रमष्टमे च तृतीयके ।
यवयोश्च पुनर्लोपः शाकल्यस्य भवेदिह ॥ ११८
तेन लुप्तो वकारः स्यादष्टमस्थं च युज्यते ।
"असा" तत्र तदा जातः "आदित्य"श्च परे पुनः: ॥ ११९
"अक" इति स्थितं सूत्रं षष्ठे तत् प्रथमे स्थितम् ।
सवर्णे च भवेद् दीर्घो योगश्चायमपेक्षितः ॥ १२०

अष्टमे यत् स्थितं सूत्रं तत्तु पूर्व्वं प्रयोजितम् ।
षष्ठे स्थितं पुनः सूत्रं तस्मादेव न युज्यते ॥ १२१
"असा" तिष्ठेत् पृथक् तस्मात् "आदित्य"श्च पृथक् पुनः ।
द्वयोः सन्धिनं तावत् स्यात् "पूर्व्वत्रे"ति विराजते ॥ १२२
षष्ठाय पूर्वाय तावत् न चाष्टमो परो भवेत् ।
अष्टमेन कृतं कार्य्यं षष्ठस्तस्मात् करोति न ॥ १२३

प्रकृतिश्च यदा "गच्छत्" प्रत्ययः "सु" यदा पुनः ।
"गच्छन् त्" पुन यंदा जातः सूत्रमिदं भवेत्तदा ॥ १२४
अध्याये चाष्टमे तत्र पादे पुनर्द्वितीयके ।
स्थितं सूत्रं त्रयोविंशं "संयोगान्तस्य" तद् भवेत् ॥ १२५
त्रयोविंशं यदा युक्तं तकारो लुप्यते तदा ।
"गच्छन्" तावत् स्थितं तस्मात् नकारान्तं स्थितं च तत् ॥ १२६
अध्याये चाष्टमे तत्र पादे पुनर्द्वितीयके ।
सप्तमन्तु स्थितं सूत्रं "न-लोपः" इति तत् पुनः ॥ १२७
नकारस्य भवेल्लोपो युज्यते तदिदं यदि ।
परं स्थितं प्रयुक्तं च पूर्व्वं तस्माद् न युज्यते ॥ १२८
पूर्व्वमिदं न योज्यं स्यात् नकारश्च स्थितस्ततः ।
"गच्छन्" पदं वरीवर्त्ति पदमिष्टं तदेव हि ॥ १२९

यत्नः—बाह्यः

विवारः प्रथमस्तत्र संवारश्च द्वितीयकः ।
श्वासस्तत्र तृतीयः स्यात् नादो भवेच्चतुर्थकः ॥ १३०
घोषश्च पञ्चमस्तत्र स्यादघोषश्च षष्ठकः ।
सप्तमश्चाल्पप्राणः स्यात् महाप्राणस्तथाष्टमः ॥ १३१
उदात्तो नवमस्तत्र यत्नो बाह्यो यदा मतः ।
दशमश्चानुदात्तः स्याद् यत्नो बाह्यो यदा धृतः ॥ १३२
एकादश तथैवात्र स्वरितः स्यादिति स्थितिः ।
स्यादेकादशधा यत्नो यथा मया प्रदर्शितः ॥ १३३
को वा यत्नो भवेत् कस्य निर्णयः क्रियते पुनः ।
प्राचीना कारिका चात्र यथादृष्टा प्रदीयते ॥ १३४

"खयां यमाः खयः ≍क≍पौ विसर्गः शर एव च।
एते श्वासानुप्रदाना अघोषाश्च विवृण्वते ॥
कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः।
अयुग्मा वर्णयमगा यणश्चाल्पासवः स्मृताः" ॥
पञ्चमे तु परे तत्र चतुर्णां जायते पुनः।
वर्णाः सदृशश्चान्यश्च यमश्च स इहोच्यते ॥ १३५
"पलिक्नी" तु यदा शब्दः कवर्णश्च परे स्थितः।
सदृशः कः पुनस्तत्र पलिक्क्नी स्यात् पदं तदा ॥ १३६
य इह कः पुनर्जातः स यमः स्यादिति स्थितिः।
"च ख् खनतु"श्च तथा "आग्ग्नि" "घ्घ्नन्ती"ति च निदर्शनम् ॥ १३

प्रथमश्च द्वितीयश्च झय्संज्ञको भवेदिह।
ते च ग्राह्याः पुनस्तेषां यमा अपि धृता इह ॥ १३८
विसर्गः शषसास्तत्र गृहीताश्च तथा पुनः।
स्थितो जिह्वामूलीयश्च उपध्मानीय इत्यपि ॥ १३९
सर्व्वेषां पुनरेतेषां त्रिधा यत्नः समर्थितः।
विवारः स्यात्तथा घोषः स्यादघोषस्तथैव च ॥ १४०
अन्येषां तु त्रिधा यत्नः पुनरिह प्रकीर्तितः।
संवारश्च तथा नादस्तथा घोषो भवेदिह ॥ १४१

प्रथमश्च तृतीयश्च पञ्चमश्च तथा पुनः।
प्रथमस्य यमस्तद्वत् तृतीयस्य यमस्तथा ॥ १४२
यरलवाः पुनः सर्व्वे चाल्पप्राणाः मता इह।
परे चान्ये महाप्राणाः पुनरिह प्रदर्शिताः ॥ १४३
असवर्णाः सवर्णा वा न तैरिह विविच्यते।
आन्तरतम्यता तैश्च परीक्ष्यते इति स्थितिः ॥ १४४
पदं यदा भवेद् "वाक्" च पदं "हरि" भवेद् यदा।
द्वयोः सन्धिर्यदा कार्य्यो यत्नो बाह्यो भवेत् तदा ॥ १४५

कादयो मावसानाश्च वर्णाः स्पर्शा मता इह।
अन्तःस्थाश्च भवन्तीह यरलवास्तथा पुनः ॥ १४६

उष्माणश्च पुनस्तत्र शषसहा इति स्थितिः ।
अचस्तावत् स्वराः प्रोक्ता वर्णानां निश्चयो यदा ॥ १४७
चिह्नमर्द्धविसर्गवत् ककारात् प्राग् भवेच्च यत् ।
तद्द जिह्वामूलीयं प्रोक्तं ⌒क इतिवच्च दृश्यते ॥ १४८
चिह्नमर्द्धविसर्गवत् पकारात् प्राग् भवेच्च यत् ।
तदुपध्मानीयं प्रोक्तं ⌒प इतिवच्च दृश्यते ॥ १४९
"अं" इतिवत् भवेत्तावदचः परः पुनश्च यः ।
अनुस्वारो भवेत्तावत् स कीर्त्तित इति स्थितिः ॥ १५०
"अः" इतिवत् भवेत्तावदचः परः पुनश्च यः ।
विसर्गः स भवेत्तावत् प्रकीर्त्तित इति स्थितिः ॥ १५१

ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम् (वा)

ऋकारश्च लृकारश्च तौ सवर्णौ मतौ पुनः ।
सावर्ण्यं स्यात् मिथस्तावत् तयोर्द्वयोश्च वार्त्तिकात् ॥ १५२

अकारश्च हकारश्च कण्ठं स्थानं द्वयोर्मतम् ।
विवृतश्च तयोर्यत्नः सावर्ण्यं स्यात् तयोर्द्वयोः ॥ १५३
इकारश्च शकारश्च तालु स्थानं द्वयोर्मतम् ।
विवृतश्च तयोर्यत्नः सावर्ण्यं स्यात् तयो र्द्वयोः ॥ १५४
ऋकारश्च षकारश्च मूर्द्धा स्थानं द्वयोर्मतम् ।
विवृतश्च तयोर्यत्नः सावर्ण्यं स्यात् तयोर्द्वयोः ॥ १५५
लृकारश्च सकारश्च दन्तः स्थानं तयो र्मतम् ।
विवृतश्च तयोर्यत्नः सावर्ण्यं स्यात् तयोर्द्वयोः ॥ १५६

१३ । नाऽज्झलौ । १।१।१०

स्वर-व्यञ्जनयोरेवं सिद्धा सवर्णता यदा ।
प्रतिषेधे तदा सूत्रं परं प्रवर्त्तते यथा ॥ १५७
आकारसहितस्तावदज् भवेद् आजिति स्थितिः ।
आजिति चेत् पुनर्हल् चेत् तौ सवर्णौ मतौ न च ॥ १५८
पदं "दधि" यदा तत्र "हरति" च पदं यदा ।
न सावर्ण्यं तयोस्तत्र न यण् तस्मात् प्रवर्त्तते ॥ १५९

अन्यथा हकारस्यापि भवेद् अच्त्वमिति स्थितिः।
तथात्वे च पुनः शास्त्रं प्रमाणं स्याद् यथा परम्॥ १६०

१४। अण्-उदित् च सवर्णस्य अप्रत्ययः। १।१।६९

सवर्णस्य भवेत् संज्ञा पुनरण् प्रत्ययो न चेत्।
उदिद् भवेत् सवर्णस्य पुनः संज्ञा तथैव च॥ १६१
परेण च नकारेण पुनरण् च धृतो भवेत्।
चतुर्द्दश गृहीताः स्युः स्वरास्तत्र हि संख्यया॥ १६२
उदित् "कु" स्यात् उदित् "चु" स्यात् उदित् "टु" स्यात् तथैव च।
उदित "तु" स्यात् उदित् "पु" स्यात् वर्गाः पञ्च धृता इह॥ १६३
अकारः स्याद् इकारः स्याद् उकारः स्यात् तथैव च।
अष्टादश भेदाः पूर्व्वं प्रत्येकन्तु प्रदर्शिताः॥ १६४
ऋकारस्य ऌकारस्य मिथः सवर्णता स्थिता।
ऋकारस्त्रिंशतः संज्ञा ऌकारस्त्रिंशतस्ततः॥ १६५
द्वादशानां पुनः संज्ञा तथा स्याद् एजिति स्थितिः।
पूर्व्वमपि मया तावत् संख्या सा च प्रदर्शिता॥ १६६
एदैतोरौदोतौश्चेह न सावर्ण्यं स्थितं पुनः।
"एओच्" तत्र स्थितं सूत्रं तेन तथा भवेन्न च॥ १६७
सावर्ण्यं न स्थितं यस्माद् योगस्तयोर्भवेन्न च।
ततश्च चतुर्विंशतेः संज्ञा न स्यात् स एच् पुनः॥ १६८
आकारस्य हकारेण सवर्णता न सिध्यति।
"नाऽज्झलौ" च स्थितं सूत्रम् आकार इह च स्थितः॥ १६९

अननुनासिकस्तत्र स्यादनुनासिकस्तथा।
यवलाश्च द्विधा तस्मात् संज्ञा द्वयो र्द्वयोस्तथा॥ १७०

१५। तपरस्तत्कालस्य। १।१।७०

तकारः स्यात् परे यस्य स तपरो भवेदिह।
परो भवेत्तकाराद् यः सोऽपि च तपरो मतः॥ १७१
पूर्व्वे वाऽपि परे वाऽपि तकारश्चेद् भवेदिह।
स्वस्य स्याद् वाचको वर्णः परस्य वाचको न च॥ १७२

"अद्" इयि चेद् भवेदुक्तं "अ" केवलं प्रतीयते।
आकारो न भवेदुक्तः "अ" केवलमिहोच्यते॥ १७३
"अदि"ति चेद् भवेदुक्तं षण्णां स वाचको भवेत्।
दीर्घस्तावत् प्लुतस्तावत् पुनरिह न गृह्यते॥ १७४
ऋकारस्य ऌकारस्य सवर्णता च वार्त्तिकात्।
ऋदिति चेत् भवेदुक्तं द्वादशानां ग्रहो भवेत्॥ १७५

२१ १२।७३-६६ श्लोकाः
१। १।७४

**१६। वृद्धिरादैच्। १।१।१**

"आदि"ति वृद्धिसंज्ञः स्यादैजिति च तथा भवेत्।
आदिति च भवेदेक ऐजिति द्वौ मतौ पुनः॥ १७६
आकारस्य तथा संज्ञा ऐकारस्य तथा पुनः।
उकारस्य तथा संज्ञा वृद्धिसंज्ञं भवेत् त्रयम्॥ १७७

**१७। अदेङ्-गुणः। १।१।२**

अदिति गुणसंज्ञः स्यात एङिति च तथा भवेत्।
अदिति च भवेदेक एङिति द्वौ मतौ पुनः॥ १७८
अकारस्य तथा संज्ञा एकारस्य तथा भवेत्।
उकारस्य तथा संज्ञा गुणसंज्ञं भवेत् त्रयम्॥ १७९

**१८। भूवादयो धातवः। १।३।१**

भ्वादयो धातुसंज्ञाः स्युः क्रियाया वचना यदा।
भू "भवति" भवेत्तावत् पुनरिह निदर्शनम्॥ १८०

**१९। प्रागीश्वरान्निपाताः। १।४।५६**

इतः परं भवेत् सूत्रं तद् "अधिरीश्वरे" पुनः।
ततः प्राग् यद् भवेदुक्तं तन्निपातो भवेदिह॥ १८१

**२०। चादयोऽसत्त्वे। १।४।५७**

चादयश्च निपाताः स्युर्न सत्त्वे चेद् भवन्ति ते।
निदर्शनं "च" "वा" "ह" स्यात् "नूनं" "पश्चात्" तथैव च॥ १८२

**२१। प्रादयः। १।४।५८**

प्रादयश्च निपाताः स्युः सत्त्वे न चेद् भवन्ति ते।
प्रादयो विंशतिर्द्वौ च परमिह प्रदर्शिताः॥ १८३

प्रादयः

प्र परा च भवेदप्र समनु च तथा भवेत् ।
निर् निस् दुर् दुष् तथा तावत् अपित प्रति तथा पुनः ॥ १८४
उप भवेद् भवेद् उत् च भवेद् अति भवेत्र सु ।
अधि भवेद् भवेद् आङ् च वि नि भवेद् तथैव च ॥ १८५
अप भवेत् तथैवात्र भवेद् अव तथा पुनः ।
परि भवेत् पुनस्तद्वत् अपि भवेत् तथैव च ॥ १८६

२२ । उपसर्गाः क्रियायोगे । १।४।५९

प्रादयः स्युरुपसर्गाः योगश्चेत् क्रियया भवेत् ।
विनयते पदं तत्र उपसर्गो भवेत्र "वि" ॥ १८७

मरुत्-शब्दस्योपसंख्यानम् (वा)

मरुत्-शब्दः पुनश्चात्र उपसर्ग इहोच्यते ।
मरुद्भिश्चेद् भवेद् दत्तः मरुत्तः स्यात् पदं तदा ॥ १८८

श्रद्-शब्दस्योपसंख्यानम् । (वा)

श्रदिति च पुनः शब्द उपसर्गो भवेदिह ।
"आत"श्चेति स्थितं सूत्रम् "अङि" श्रद्धा भवेदिह ॥ १८९

२३ । गतिश्च । १।४।६०

प्रादयो गतिसंज्ञाः स्युर्योगः स्यात् क्रियया यदि ।
"प्रकृत्य" स्यात् पदं तत्र गतौ पुनर्निदर्शनम् ॥ १९०

कारिकाशब्दस्योपसंख्यानम् । (वा)

क्रियया चेद् भवेद् योगः "कारिका" च भवेद् गतिः ।
पदं स्यात् "कारिकाकृत्य" पुनरिह निदर्शनम् ॥ १९१

२४ । न वेति विभाषा । १।१।४४

निषेधश्च विकल्पश्च द्वयमेव स्थितं यदा ।
तदा संज्ञा विभाषा स्यात् मिलितयोस्तयोर्द्वयोः ॥ १९२
उभयत्रविभाषार्थं सूत्रमिदं प्रयुज्यते ।
निदर्शनं "विभाषा श्वेः" पुनरिह प्रदर्शितम् ॥ १९३
"वचिस्वपियजादीनां" प्रसारणं स्थितं खलु ।
नित्यमेव तथा प्राप्तं पुनरपि विधीयते ॥ १९४

पित्सु तावत् न च प्राप्तं तेषु प्रसारणं न च ।
अप्राप्ते च पुनस्तत्र प्रसारणं विधीयते ॥ १९५
विधीयते यदा प्राप्तं "विभाषा श्वेः" प्रवर्त्तते ।
विधीयते न च प्राप्ते "विभाषा श्वेः" तथा भवेत् ॥ १९६
प्राप्तौ विधीयते तावद् अप्राप्तौ च विधीयते ।
उभयत्र विभाषा स्यात् "विभाषा श्वेः" तथा भवेत् ॥ १९७
प्रवर्त्तेत कथं सूत्रमिति प्रश्नो भवेदिह ।
विधिना वा प्रवर्त्तेत निषेधेनाथ वा पुनः ॥ १९८
विधिमुखी प्रवृत्तिश्चेत् पित्सु भवेत् न कित्सु च ।
प्रतिषेधमुखी सा चेत् कित्सु भवेत् न पित्सु च ॥ १९९
उभयथा प्रवृत्तिस्तु पुनरिह न युज्यते ।
वाक्यभेदस्तदा दोषो वैरूप्यं जायते तदा ॥ २००

किमिह वा भवेद् युक्तं करणीयं पुनश्च किम् ।
समाधानं यथा शास्त्रे तथा मया प्रदीयते ॥ २०१
इह सूत्रे "न"कारस्तु प्रथमं श्रूयते किल ।
"वा" शब्दस्तु ततः पश्चात् पुनरिह प्रवर्त्तते ॥ २०२
इह क्रमो भवेद् ग्राह्यः प्रथमः प्रथमो भवेत् ।
द्वितीयस्तु द्वितीयः स्यात् भवेत् क्रमः सुरक्षितः ॥ २०३
प्रतिषेधः पुनस्तस्मात् सर्व्वादौ युज्यते खलु ।
प्रतिषेधमुनेनैव प्रवृत्तिः प्रथमा भवेत् ॥ २०४
सर्व्वादौ च निषेधेन विषयः स्यात् समीकृतः ।
विधिमुखी प्रवृत्तिः स्यात् ततः पश्चादिति स्थितिः ॥ २०५
प्रसारणं निषिद्धं स्यात् सर्व्वत्रैव पुर्लिटि ।
ऐकरूप्यं तदा सिध्येत् कुत्रापि न प्रसारणम् ॥ २०६
एवं समीकृतस्तावत् विषयस्तु भवेद् यदा ।
तदा पश्चाद् विकल्पोऽपि प्रवर्त्तते यथायथम् ॥ २०७
"शिश्वाय" स्यात् पदं तत्र "शुशाव" स्यात् पदं तथा ।
सर्व्वत्रैव परेषु स्यात् लिटि पदं द्वयं द्वयम् ॥ २०८

२५ । स्वं रूपं शब्दस्याशब्दसंज्ञा । १।१।६८

शब्दस्य यत् स्वरूपं तद् भवेद् ग्राह्यं विशेषतः ।
अर्थं इह न च ग्राह्यः पर्य्यायोऽपि न गृह्यते ॥ २०९
"अग्नेर्ढक्" चेद् भवेत् सूत्रम् अग्नेरेव भवेन्न ढक् ।
महानसे स्थितं वस्तु तस्माद् ढक् न विधीयते ॥ २१०
"अग्नेर्ढक्" चेद् भवेत् सूत्रम् अग्नेरेव भवेन्न ढक् ।
दहनात् न भवेत् ढक् च न च ढक् पावकाद् भवेत् ॥ २११

अन्यथा चेद् भवेत् संज्ञा यथास्थितं भवेन्न चेत् ।
अर्थस्तदा भवेद् ग्राह्यः शब्दो ग्राह्यो भवेन्न च ॥ २१२
"मिदेर्गुणः" यदा शास्त्रं पुनरिह प्रवर्त्तते ।
न च शब्दो भवेद् योच्यः अदेव हि विधीयते ॥ २१३
गकारश्च उकारश्च णकारश्च न युज्यते ।
अद् गुणेन भवेद् लक्ष्यः स एव युज्यते तदा ॥ २१४
१।१।७४–३९ श्लोकाः

२।२।७४

२६ । येन विधिस्तदन्तस्य । १।१।७२

येन विधिर्भवेदत्र स तस्य ग्राहको भवेत् ।
ग्राहकः स तदन्तस्य पुनरपि भवेदिह ॥ २१५
इकारेण विधानं चेद् इकारो गृह्यते तदा ।
इकारः स्याद् यदन्ते च सोऽपि च गृह्यते पुनः ॥ २१६
"एरच्" इति भवेत् सूत्रम् इकारेण विधीयते ।
इकारोऽपि भवेद् ग्राह्यस्तदन्तोऽपि यथा च "चि" ॥ २१७
"इ" धातोरच् भवेदत्र पदम् अयस्तथा भवेत् ।
"चि" धातुः स्यादिकारान्तस्तस्मादप्यच् तथा "चयः" ॥ २१८

समास-प्रत्यय-विधौ प्रतिषेधः (वा)

समासे न विधिर्योज्यः न योज्यः प्रत्यये पुनः ।
न तदन्तविधिस्तावत् तयोर्द्वयोः प्रयुज्यते ॥ २१९
"कष्टं श्रितो" यदा वाक्यं समासो न निषिध्यते ।
"श्रितो" यदि भवेदन्ते निषिध्यते तदा च सः ॥ २२०

अन्ते यदा "श्रित" स्तत्र स्यात् "परमश्रितो" यदा ।
"कष्टम्" इति तदा शब्दो न तेन च समस्यते ॥ २२१
प्रत्ययेऽपि निषिद्धः स्यात् स तदन्तविधिः पुनः ।
निदर्शनं यथाशास्त्रं परं मया प्रदीयते ॥ २२२
"फक्" भवेच्च "नड़ादिभ्यः" प्रत्ययो न निषिध्यते ।
स "नड़"श्चेद् भवेदन्ते निषिध्यते तदा पुनः । २२३
"सूत्रनड़ः" यदा शब्दो "नड़"श्चान्ते प्रवर्त्तते ।
तदा "फक्" न भवेद् योज्यः न तदन्तविधिर्भवेत् ॥ २२४

( प्रतिषेधस्य प्रतिषेधः )

उगिद्-वर्ण-ग्रहण-वर्ज्जम् (वा)

उगित् चेत् प्रत्ययस्तत्र स्यात् तदन्तविधिस्तदा ।
वर्णे यदा विधिस्तत्र तदापि स्यादिति स्थितिः । २२५
"कृतवत्" च यदा शब्दः क्तवतुः स्यात् उगित् पुनः ।
भवेद्द यत् "कृतवत्"-शब्दात् तदन्तादपि तद्द भवेत् ।। २२६
"कृतवत्" च स्थितः शब्दस्तस्माद् ङीप् चेत् भवेत् स्त्रियाम् ।
स "कृतवत्" यदन्ते स्यात् तस्मादपि भवेच्च ङीप् ॥ २२७
"कृतवती" पदं तावत् यदि ङीपि प्रवर्त्तते ।
स्यात् "सुकृतवती" चापि तदन्तादपि ङीप् भवेत् ॥ २२८

२७ । विरामोऽवसानम् । १।४।११०

वर्णानां चेदभावः स्याद् अवसानं स कथ्यते ।
उच्चारितं यदा पूर्णं तदा संज्ञा प्रयुज्यते । २२९

२८ । परः सन्निकर्षः संहिता । १।४।१०९

सन्निकर्षः परो यत्र तत्रैव संहिता भवेत् ।
अतिशयः सन्निधिश्चेत् तदा संज्ञा प्रवर्त्तते । २३०
कालेन व्यवधानं चेदर्द्धमात्रा भवेदिह ।
संहिता च तदा संज्ञा तथैव काशिका पुनः ॥ २३१

२९ । सुप्तिङन्तं पदम् । १।४।१४

सुबन्तं स्यात् पदं तत्र तिङन्तं च पदं भवेत् ।
"रामः" पदं सुबन्तं स्यात् तिङन्तं स्यात् "विराजते" ॥ २३२

३०। हलोऽनन्तराः संयोगः। १।१।७

अचा चेदव्यवधानं हल् संयोगो भवेदिह।
अग्निश्चन्द्रस्तथा राष्ट्रो भवेदिह निदर्शनम्॥ २३३

३१। ह्रस्वं लघु। १।४।१०

अक्षरं यद् भवेद् ह्रस्वं तल्लघु स्यादिति स्थितिः।
"खुकी" यदा पदं तत्र स्यादुकारस्तदा लघुः॥ २३४

३२। संयोगे गुरु। १।४।११

संयोगे च परे तत्र ह्रस्वं गुरु भवेदिह।
यदा "हरिपदोदत्तः" "त"—पूर्वात् "द" भवेद् गुरुः॥ २३५

३३। दीर्घं च। १।४।१२

"दीर्घं च" गुरुसंज्ञं स्यात् यथा पदं "मनोरमा"।
आकारश्च भवेद् दीर्घः सः गुरुः स्यादिति स्थितिः॥ २३६

इति संज्ञाप्रकरणम्।

२।१।७४-२२ श्लोकाः

रचनाकालः— २५।१२।१९७३-५५ श्लोकाः
२६।१२।१९७३-५४ श्लोकाः
३१।१२।१९७३-६६ श्लोकाः
१।१।१९७४-३९ श्लोकाः
२।१।१९७४ २२ श्लोकाः

२३६ श्लोकाः

श्रीभुवनमोहनमृणालिनी-सुत
श्रीहरिपददत्तविरचितायां व्याकरणकारिकायां

संज्ञाप्रकरणं समाप्तम्।

## परिभाषाप्रकरणम्

आरम्भः
३।१।१९७४
सन्ध्या (निशामुखे)

### ३४। इको गुणवृद्धी। १।१।३

गुण इति यदा प्रोक्तं वृद्धिरिति यदा पुनः।
इक इति पदं तत्र षष्ठ्यन्तमुपतिष्ठते॥ १
"मिदेर्गुणः" भवेत् सूत्रं गुणशब्दः प्रयोजितः।
इको गुणो भवेत् तस्मात् मेद्यते स्यात् पदं तथा॥ २
"सिचो वृद्धि"र्भवेत् सूत्रं वृद्धिशब्दः प्रयोजितः।
इको वृद्धिर्भवेत्तस्माद् स्यादलावीत् पदं तथा॥ ३
विशिष्येह गुणो वृद्धिः सूत्रे न चेत् प्रयुज्यते।
परिभाषा तदा तावत् न सिध्यति कथञ्चन॥ ४
"पथिमथि"– भवेत् सूत्रं वृद्धिशब्दो न योजितः।
परिभाषा न योज्या स्यात् तदा "पन्थाः" पदं भवेत्॥ ५
इकः कार्य्यं तदा न स्यादिको वृद्धिर्भवेन्न च।
आकारो वृद्धिसंज्ञोऽपि नकारस्य प्रयुज्यते॥ ६

गुण इति यदा शब्दः सूत्रे क्वचित् प्रवर्त्तते।
कस्य गुणस्तदा प्रश्न इक इति तदोत्तरम्॥ ७
वृद्धिरिति यदा शब्दः सूत्रे क्वचित् प्रयुज्यते।
कस्य वृद्धिस्तदा प्रश्न इक इति तदोत्तरम॥ ८
इगिह च मतः स्थानी स्थानी तावन् नियम्यते।
अनियमः स्थितो यत्र तत्र स्यात् नियमः पुनः॥ ९

### ३५। अचश्च। १।२।२८

ह्रस्व इति यदा प्रोक्तं दीर्घ इति यदा पुनः।
प्लुत इति यदा प्रोक्तम् अच एव भवेद्धि सः॥ १०
"ह्रस्वो नपुंसके" सूत्रं ह्रस्वशब्दः प्रयुज्यते।
अच एव भवेत् ह्रस्वो नान्यस्य च तथा भवेत्॥ ११

"अकृदि" ति स्थितं सूत्रं दीर्घशब्दः प्रयुज्यते ।
अच एव भवेद् दीर्घः नान्यस्य च तथा भवेत् ॥ १२
"वाक्यस्य टेः" भवेत् सूत्रं प्लुतशब्दः प्रयुज्यते ।
अच एव प्लुतस्तत्र नान्यस्य च तथा भवेत् ॥ १३

ह्रस्व इति यदा शब्दः दीर्घं इति यदा पुनः ।
प्लुत इति यदा शब्दः विशिष्येह प्रयुज्यते ॥ १४
अच इति तदैव स्यात् न चान्यदा भवेत्तथा ।
इहापि पूर्व्ववत् तावदुच्चारणं प्रयोजनम् ॥ १५

**३६ । आद्यन्तौ टकितौ । १।१।४६**

टकार इद् भवेद् यस्य स आदौ च प्रयुज्यते ।
तकार इद् भवेद् यस्य प्रयुज्यते परं च सः ॥ १६

"भू" यदा च भवेद्धातुः "स्यति" च प्रत्ययो यदा ।
स्याद् "आर्द्धधातुकस्येट्" च सूत्रं तदा प्रयोजनम् ॥ १७
वलादेरिट् भवेदत्र सूत्रेण स विधीयते ।
पुनरिह भवेत् प्रश्नः कुत्र स इट् प्रयुज्यते ॥ १८
प्रयुज्यते स आदौ वा परं वा स प्रयुज्यते ।
"स्यति" पूर्व्वं परे स्यादिट् इट् पूर्व्वे वा परे "स्यति" ॥ १९
संशयः स्यात् यदा चेवं नियमः क्रियते तदा ।
टकार इद् भवेद् यस्य स आदौ च प्रयुज्यते ॥ २०
भूधातुः स्यात् ततः स्यादिट् ततः "स्यति" भवेदिह ।
इटे पूर्व्वे पदं तत्र "भविष्यति" च सिध्यति ॥ २१

भीधातुः स्यात् ततः ष्वुक् स्यात् हेतुभये पदं भवेत् ।
"भियो हेतुभये ष्वुक्" च पुनरिह प्रयुज्यते ॥ २२
इह तावद् भवेत् प्रश्नः कुत्र स ष्वुक् भवेदिह ।
भीधातोर्वा परे ष्वुक् स्यात् पूर्व्वं वा ष्वुक् भवेत् पुनः ॥ २३
एवं यदा स्थितं तत्र परिभाषा प्रवर्त्तते ।
ककार इद् भवेद् यस्य स युज्यते परं सदा ॥ २४

परे ष्वुकि पदं तावद् "भीषयते" भवेदिह ।
परिभाषां समाश्रित्य कार्य्यं भवेद् यथायथम् ॥ २५

३७ । मिदचोऽन्त्यात् परः । १।१।४७

यः परः स्यादचां मध्ये तस्मात् परो भवेन्न मित् ।
पुनः स मित् तथा युक्तस्तस्यैवावयवो भवेत् ॥ २६

पयसिति यदा शब्दः बहुत्वे जस् पुनर्यदा ।
सूत्रं "नपुंसकस्ये"ति तदा भवेत् प्रयोजनम् ॥ २७
पयस्शब्दात् नुमादेशस्तेनैव च विधीयते ।
तदा खलु भवेत् प्रश्नः कुत्र स नुम् प्रयुज्यते ॥ २८
एवं यदा स्थितं तत्र परिभाषा प्रवर्त्तते ।
मकार इद् भवेद् यस्य स्वरादन्त्याद् भवेद् हि सः ॥ २९
नुमितीह नकार इत् स्वरादन्त्यात् ततो भवेत् ।
अकारो यो द्वितीयः स्यात् स हि चान्त्यः ततश्च नुम् ॥ ३०
पयांसि च पदं तत्र तथा खलु प्रजायते ।
अन्यत्रापि तथा ज्ञेयं मकारेत् प्रत्ययो यदि ॥ ३१

३८ । षष्ठी स्थानेयोगा । १।१।४९

एकशतं हि षष्ठ्यर्था इति भाष्ये समर्थितम् ।
बह्वर्था हि भवेत् षष्ठी अस्माभिरपि दृश्यते ॥ ३२
स्व-स्वामिभावसम्बन्धे षष्ठी क्वचित् प्रवर्त्तते ।
अवयवे पुनः षष्ठी क्वचिदिह प्रयुज्यते ॥ ३३
आनन्तर्य्ये स्थिता षष्ठी सामीप्येऽपि स्थिता पुनः ।
स्थिता षष्ठी समूहेऽपि विकारेऽपि स्थिता खलु ॥ ३४
बह्वर्था च ततः षष्ठी बहुधा च प्रयुज्यते ।
एवं यदा स्थितं तत्र करोति नियमं मुनिः ॥ ३५
षष्ठ्यन्तं च पदं सूत्रे यदि क्वचिद् भवेदिह ।
तदर्थश्चेद् विशेषेण न पुनः स्यात् प्रदर्शितः ॥ ३६
स्थानार्थे तु तदा षष्ठी सर्व्वत्रैव मता भवेत् ।
स्थानमिति प्रसङ्गः स्यात् तदर्थे सा प्रवर्त्तते ॥ ३७

"अस्तेः" स्थाने भवेद् "भू" च ब्रुवः स्थाने भवेद् "वचि" ।
"अस्ते"र्यदा प्रसङ्गः स्यात् "भू" तदा च प्रयुज्यते ॥ ३८
"ब्रुवो" यदा प्रसङ्गः स्यात् "वचि" तदा भवेत् पुनः ।
"भविता" "भवितु" तत्र "वक्ता" "वक्तु" तथा भवेत् ॥ ३९
शब्दो नित्यो भवेत् शास्त्रे नाशस्तस्य न सम्मतः ।
एकस्य तु यदा प्राप्तिरन्यत् प्राप्तं भवेत्तदा ॥ ४०
स आगतः स नष्टश्च पुनः परः समागतः ।
एषा रीतिर्न शास्त्रे स्यात् न सा मान्या भवेत् सताम् ॥ ४१
दर्भानान्तु यदा प्राप्तिः शराः प्राप्तास्तदा पुनः ।
नाशः प्रोक्तो न दर्भाणां दर्भा दर्भाः शराः शराः ॥ ४२

३।१।१९७४-४२ श्लोकाः

४।१।१९७४

३९। स्थानेऽन्तरतमः। १।१।५०

स्थानमिह प्रसङ्गः स्यात् प्रसङ्गश्चेद् भवेदिह ।
सदृशतम आदेशस्तदा भवेदिति स्थितिः ॥ ४३
बहूनान्तु यदा प्राप्तिः स्यात् सदृशतमस्तदा ।
एकस्य तु यदा प्राप्तिः सदृशो हि भवेत्तदा ॥ ४४

बहूनान्तु पुनः प्राप्तौ "वाग्घसति" निदर्शनम् ।
सदृशतम आदेशः इह तावद् विधीयते ॥ ४५
"झयोहोऽन्यतरस्यां" स्यात् सूत्रमिह प्रयोजनम् ।
हकारस्य सवर्णाः स्यात् क ख ग घ पुनश्च ङ ॥ ४६
पञ्चानां स्यादिह प्राप्तिः सदृशतम इष्यते ।
"घ" सदृशतमस्तत्र स एव च प्रयुज्यते ॥ ४७
"वाग्घसति" पदं तत्र तथा भवेदिति स्थितिः ।
"वाग्घरिश्च" पदं तद्वत् पुनरिह भवेत् खलु ॥ ४८
एकस्य तु यदा प्राप्तिरादेशः सदृशस्तदा ।
एकप्राप्तौ पुनस्तावत् निदर्शनं यथा परम् ॥ ४९
"दण्डाग्रम्" च पदं ज्ञेयमेकप्राप्तौ निदर्शनम् ।
कण्ठ्य एव भवेद् दीर्घो द्वयोरकारयोस्तदा ॥ ५०

"बातण्ड्युवति"स्तत्र भवेन्निदर्शनं परम् ।
पुंवद्भावो भवेदत्र पुंशब्दश्चातिदिश्यते ॥ ५१
पाकस्त्यागस्तथा रागो भवेद् निदर्शनं तथा ।
ककारश्च गकारश्च सदृशो हि विधीयते ॥ ५२
अमुष्मै स्यादमूभ्यां स्यात् पुनरिह निदर्शनम् ।
ह्रस्वे ह्रस्वो भवेदत्र दीर्घं दीर्घो भवेत् पुनः ॥ ५३
आन्तर्य्यं स्थानतः स्याद् यत् तत् प्रथमं प्रदर्शितम् ।
आन्तर्य्यमर्थतः स्याद् यत् तत् दर्शितं द्वितीयतः ॥ ५४
आन्तर्य्यं गुणतश्चापि दर्शितञ्च तृतीयतः ।
चतुर्थं दर्शितं तावदान्तर्य्यं च प्रमाणतः ॥ ५५
आन्तर्य्यं स्याच्चतुर्द्धा च तथा शास्त्रे व्यवस्थितम् ।
दर्शितं चतुर्द्धा तावन् मयापि च यथायथम् ॥ ५६

यत्रानेकविधमान्तर्य्यं

तत्र स्थानत आन्तर्य्यं बलीयः (प)

आन्तर्य्यं बहुधा तावत् यदि क्वचिद् भवेदिह ।
आन्तर्य्यं स्थानतस्तत्र बलीयः स्यादिति स्थितिः ॥ ५७
निदर्शनं भवेत् "चेता" "स्तोता" भवेन्निदर्शनम् ।
गृहीतं स्थानतश्च तद् न गृहीतं प्रमाणतः ॥ ५८

**४० । तस्मिन्निति निर्दिष्टे पूर्व्वस्य । १।१।६६**

सप्तम्यन्तं पदं सूत्रे यदि क्वचित् प्रयुज्यते ।
पूर्व्वस्यैव भवेत् कार्य्यं परस्य न भवेत्तदा ॥ ५९
"इको यणचि" सूत्रं स्याद् अचीति सप्तमी स्थिता ।
पूर्व्वस्यैव भवेत् कार्य्यमिकः कार्य्यं भवेत्तदा ॥ ६०
इकः कार्य्यं यदा तत्र दध्युदकं पदं भवेत् ।
सान्निध्यं च पदं तद्वद् इकः कार्य्यं यदा पुनः ॥ ६१
"निर्दिष्ट" च पदं सूत्रे व्यवधाने भवेन्न च ।
"अग्निचिदत्र" तावत् स्याद् व्यवधानं ततश्च न ॥ ६२

**४१ । तस्मादित्युत्तरस्य । १।१।६७**

पञ्चम्यन्तं पदं सूत्रे यदि क्वचित् प्रयुज्यते ।
परस्यैव भवेत् कार्यं पूर्व्वस्य न भवेत्तदा ॥ ६३

"ईदास"श्च भवेत् सूत्रम् "आस" इति च पञ्चमी ।
परस्यैव भवेत् कार्य्यम् "आसीनः" स्यात् तथा पुनः ॥ ६४
व्यवधाने न कार्य्यं स्यात् पदं तथा भवेन्न च ।
स आस्ते यजमानश्चेत् व्यवधानं ततो हि न ॥ ६५

४२ । अलोऽन्त्यस्य । १।१।५२

षष्ठ्यन्तं च पदं सूत्रे यदा क्वचित् प्रयुज्यते ।
अलिह यो भवेदन्त्यस्तस्यैव स्यात् तदा विधिः ॥ ६६
"रुहः प"श्च भवेत् सूत्रं षष्ठ्यन्तं च पदं स्थितम् ।
अलन्त्यश्च हकारः स्यात् तस्यैवेह भवेच्च पः ॥ ६७
हकारस्य पकारे स्यात् रोपयति पदं तथा ।
विधिरिह न सर्व्वस्य खण्डस्य च विधिर्भवेत् ॥ ६८

४३ । ङिच्च । १।१।५३

ङकार इत् पुनर्यस्य स चानेकाल् भवेदपि ।
अलिह यो भवेदन्त्यस्तस्यैव हि विधिर्भवेत् ॥ ६९
"आनङ् ऋतो" भवेत् सूत्रम् ङकार इत् स्थितः पुनः ।
अनेकाल् स यदापि स्यात् अन्तस्यैव विधिर्भवेत् ॥ ७०
माता च पिता च यत्र द्वन्द्वो यत्र प्रवर्त्तते ।
ऋकारस्य विधिः प्राप्तः सर्व्वस्य न विधिः पुनः ॥ ७१
स्यात् मातापितरौ तावद् पदमिह तथा सति ।
केवलस्य ऋकारस्य स्यादादेश इति स्थितिः ॥ ७२

४४ । आदेः परस्य । १।१।५४

पदस्येह परस्य चेत् कार्य्यं क्वचिद् विधीयते ।
परं पदं यदत्र स्यात् तस्यादेश्च विधिर्भवेत् ॥ ७३
द्विशब्दश्चेद् भवेत् तत्र अप्शब्दश्चेद् भवेत् पुनः ।
समासश्चेत् भवेत् कार्य्यः परिभाषा प्रयोजनम् ॥ ७४
"द्व्यन्तर्" इति स्थितं सूत्रमपः ईप् स्यात् तथा खलु ।
इह तावद् भवेत् प्रश्नः कुत्र स ईप् प्रयुज्यते ॥ ७५
पकारो यः स्थितश्चात्र ईप् तस्या वा भवेदिह ।
अकारः यः स्थितश्चात्र ईप् तस्य वा भवेत् पुनः ॥ ७६

एवं यदा स्थितं तत्र परिभाषा प्रवर्त्तते।
परं पदं यदत्र स्यात् तस्यादेश्च विधिर्भवेत्॥ ७७
परं पदमिह स्याद् "अप्" अकार आदितः पुनः।
अकारस्य भवेदीप् च पदं द्वीपं तथा भवेत्॥ ७८

**४५। अनेकाल्शित् सर्व्वस्य। १।१।५५**

अनेकाल् य इहादेशः शिदपि स्यात् पुनश्च यः।
षष्ठ्या युक्तः पुनश्चेत् स सर्व्वस्यैव तदा भवेत्॥ ७९
"अस्तेर्भूः"श्च भवेत् सूत्रं षष्ठ्या पदं प्रदर्शितम्।
"अस्ति"चेति सर्व्वस्यैव स्थाने "भू" स्यादिति स्थितिः॥ ८०

४।१।१९७४-३८ श्लोकाः
५।१।१९७४

**४६। स्वरितेनाधिकारः। १।३।११**

स्वरितेन यदा सूत्रम् इह शास्त्रे प्रवर्त्तते।
अधिकारस्तदा ज्ञेयः स्वरितेन स लक्ष्यते॥ ८१

पर-नित्य-अन्तरङ्ग-अपवादानाम्
उत्तरोत्तरं बलीयः।

**(१) परान्नित्यम्** (तुदति)

सूत्रं परं यदा प्राप्तं सूत्रं नित्यं यदा पुनः।
एकस्मिंश्चेद् द्वयोः प्राप्तिः सूत्रं नित्यं प्रयुज्यते॥ ८२
"तुद्" इति चेद् भवेद् धातुः प्रत्ययः "तिप्" भवेद् यदि।
द्वयं तदा भवेत् प्राप्तं द्वयोर्द्वन्द्वो भवेदिह॥ ८३
"पुगन्ते"ति परं सूत्रं गुणस्तेन विधीयते।
"तुदादिभ्यः" स्थितं सूत्रं नित्यं "शः" स्यात् पुनस्तथा॥ ८४
द्वयोस्तावद् विरोधः स्यात् "नित्य"मेव प्रवर्त्तते।
"तुदादिभ्यः" भवेद् योज्यं "तुदति" च पदं भवेत्॥ ८५

**(२) परादन्तरङ्गम्।** (उभये देवमनुष्याः)

सूत्रं परं यदा प्राप्तमन्तरङ्गं यदा पुनः।
एकस्मिंश्चेद् द्वयोः प्राप्तिरन्तरङ्गं प्रयुज्यते॥ ८६
उभये देवमनुष्या "उभये" स्यात् निदर्शनम्।
द्वयोर्यदा विरोधः स्यादन्तरङ्गं प्रयुज्यते॥ ८७

"प्रथमे"ति स्थितं सूत्रं सूत्रं परं भवेच्च तत् ।
जसि परे विभाषा स्यात् सर्व्वनाम तथा पुनः ॥ ८८
"सर्व्वादीनि" पुनः सूत्रमन्तरङ्गं भवेच्च तत् ।
सर्व्वनाम पुनः संज्ञा नित्यं तेन भवेदिह ॥ ८९
उभयेति स्थितः शब्दस्तमाश्रित्य विगृह्यते ।
नित्यमिह भवेत् संज्ञा विभाषा वा भवेदिह ॥ ९०
एवं यदा विरोधः स्यादन्तरङ्गं प्रवर्त्तते ।
"सर्व्वादीनि" भवेद् योज्यं नित्यं स्यात् सर्व्वनामता ॥ ९१

### (३) परादपवादः (दध्ने)

सूत्रमिह परे स्याद् यत् तत् प्रयोज्यं भवेद् यदि ।
अपवादे स्थितं सूत्रं प्रयोज्यं चेत् भवेत् पुनः ॥ ९२
तदा तयोर्द्वयोर्मध्ये अपवादे स्थितं च यत् ।
तदेव हि भवेद् योज्यं बलीयस्तदिति स्थितिः ॥ ९३
"दधि" यदा स्थितः शब्दः "ङे" प्रत्ययो यदा पुनः ।
"अनेकाल्" च तथा "ङिच्च" द्वयं तावत् प्रवर्त्तते ॥ ९४
"अनेकाल्" च परं सूत्रं सर्व्वादेशो विधीयते ।
अपवादे भवेद् "ङिच्च" अन्तादेशस्तथा भवेत् ॥ ९५
द्वयोरिह भवेद् द्वन्द्वः, आदेशः स्यात् कथं पुनः ।
सर्व्वादेशो भवेद् ग्राह्यः अन्तादेशोऽथवा भवेत् ॥ ९६
द्वयोश्च स्थितयोस्तावदपवादे स्थितं च यत् ।
तदेव हि बलीयः स्यात् तदेव च प्रयुज्यते ॥ ९७
अपवादे स्थितं "ङिच्च" तदेव च भवेदिह ।
सर्व्वादेशं तु बाधित्वा अन्तादेशः प्रवर्त्तते ॥ ९८
अन्तादेशो भवेद् ग्राह्यः दध्ने पदं तथा भवेत् ।
दध्ना स्याच्च पदं तद्वत् अन्तादेश इहापि च ॥ ९९

### (४) नित्यादन्तरङ्गम् (ग्रामणिनी कुले)

सूत्रं नित्यं यदा प्राप्तम् अन्तरङ्गं यदा पुनः ।
एकस्मिंश्चेद् द्वयोः प्राप्तिरन्तरङ्गं तदा भवेत् ॥ १००
ग्रामणिनी कुले तावद् भवेदिह निदर्शनम ।
ग्रामणिनी पदं यत्र तत्र विधिः प्रयुज्यते ॥ १०१

"ग्रामणी" स्याद् यदा शब्दः प्रत्यय "इ" यदा पुनः ।
"इकोऽचि" च पुन "ह्रस्वः" द्वयं तावत् प्रवर्त्तते ॥ १०२
"इकोऽचि" वहिरङ्गं स्यात् नुमिह च भवेत्तथा ।
"ह्रस्व" स्यादन्तरङ्गं च ह्रस्वस्तेन विधीयते ॥ १०३
एवं यदा द्वयोर्द्वन्द्वः अन्तरङ्गं प्रवर्त्तते ।
"ह्रस्व" इति भवेदादौ "ग्रामणि" स्यात् पदं तथा ॥ १०४
"इकोऽचि" वहिरङ्गं च पश्चात् ततः प्रवर्त्तते ।
ग्रामणिनी पदं तेन पश्चादेव भवेदिह ॥ १०५

(५) नित्यादपवादः (अङ्गुलित्रम्)

सूत्रमिह पुर्नित्यं प्राप्तं यदि भवेत् क्वचित् ।
अपवादे स्थितं सूत्रं पुनः प्राप्तं भवेद् यदि ॥ १०६
तदा तयो द्वंयोर्मध्ये अपवादे स्थितं च यत् ।
तदेव च भवेद् योज्यं वलीयस्तदिति स्थितिः ॥ १०७
"अङ्गुलित्रं" पदं तावद् भवेदिह निदर्शनम् ।
"कर्मण्यण्" च पुन"रातो" द्वयमिह प्रवर्त्तते ॥ १०८
"कर्मण्यण्" च भवेन्नित्यं कर्मण्यण् च भवेदिह ।
"आत" इति पुनः कः स्यादपवादे विधिभंवेत् ॥ १०९
द्वयो र्यदा विरोधः स्याद् अपवादे स्थितं च यत् ।
प्रवर्त्तते तदेवेह कः प्रत्ययस्तथा भवेत् ॥ ११०

(६) अन्तरङ्गादपवादः (दैत्यारिः)

अन्तरङ्गं यदा प्राप्तं प्रक्रियायामिह क्वचित् ।
अपवादे पुनः सूत्रं यदा प्राप्तं प्रवर्त्तते ॥ १११
तदा तयो र्द्वयो र्मध्ये अपवादे स्थितं च यत् ।
तदेव च भवेद् योज्यं वलीयस्तदिति स्थितिः ॥ ११२
दैत्यारिः स्यात् पदं तावत् पुनरिह निदर्शनम् ।
"आद्गुणः" स्यात् "इको यण्" स्यात् पुन "रको" भवेदिह ॥ ११३
आद्यं द्वयं भवेत्तावदन्तरङ्गमिति स्थितिः ।
"अक" इति पुनः सूत्रमपवादे मतं भवेत् ॥ ११४
अपवादे स्थितं तावद् "अक" इह प्रवर्त्तते ।
दैत्यारिः स्यात् पदं तत्र सवर्णे स्याच्च दीर्घता ॥ ११५

असिद्धं बहिरङ्गमन्तरङ्गे ।

अन्तरङ्गं यदा प्राप्तं बहिरङ्गं यदा पुनः ।
एकस्मिंश्चेद् द्वयोः प्राप्तिः बहिरङ्गं न सिध्यति ॥ ११६
पचावेदं यदा सन्धिरेकारः स्यात् तदा पुनः ।
"एत ते" बहिरङ्गं स्यात् तस्माद् "ऐ" न भवेदिह ॥ ११७
प्रकृतिघटितं कार्य्यमन्तरङ्गं प्रकीर्त्तितम ।
प्रत्ययघटितं कार्य्यं बहिरङ्गं भवेदिह ॥ ११८

अकृतव्यूहाः पाणिनीयाः ।

नश्येत् पश्चात् निमित्तं तदित्येवं चेत् प्रतीयते ।
निमित्तं तद् समाश्रित्य कार्य्यं पूर्व्वं भवेन्न च ॥ ११९
सेदुषः स्यात् पदं तावदिह खलु निदर्शनम् ।
वकारः स परे याति पूर्व्वमिट् न भवेत्ततः ॥ १२०
"सदि"ति चेद् भवेद् धातु"र्वंसि"ति प्रत्ययो यदि ।
इट् "आर्द्धधातुकस्य" स्यात् वलादिश्च भवेदयम् ॥ १२१
बहुत्वे चेत् पुनः शस् स्यात् "वसोः" प्रसारणं भवेत् ।
वकारः स परे याति पूर्व्वमिट् न प्रयुज्यते ॥ १२२

समाप्तिः—५।१।१९७४ (निशामुखे) ५।१।१९७४-४२ श्लोकाः
समाप्तं परिभाषा प्रकरणम् । तत्र श्लोकाः १२२

---

मृणालिनी मम माता भुवनमोहनः पिता ।
तारिणीचरणः सुधीः पितामहो महामतिः ॥ १
मृत्युञ्जयः सदाशयो धार्म्मिकः प्रपितामहः ।
वृद्धश्च प्रपितामहो रामधनः सदा सुखी ॥ २
प्रवृद्धप्रपितामहः शोभारामो महाशयः ।
तदन्वये जनिर्मम दत्तवंशे महाकुले ॥ ३
कृष्णात्रेयश्च गोत्रेण कायस्थोऽहं च जन्मना ।
नाम हरिपदो मम दत्तश्च पदवी मम ॥ ४
खुकी च भगिनी मम भगिनी मे मनोरमा ।
खुकी लोकान्तरं गता मनोरमा प्रजीवति ॥ ५
अविभक्तेषु बङ्गेषु भागः पूर्व्वः स्थितश्च यः ।
तस्मिन भागे स्थिता भूमि टाका सा कथिता जनैः ॥ ६

तन्मध्ये माणिकगञ्ज इति च मण्डलं स्थितम् ।
तत्र खलु स्थितो ग्रामो नामतो हरिशा पुनः ॥ ७
तस्मिन् ग्रामे मम जन्म बाल्यं तत्र गतं मम ।
कैशोरमपि तत्र च ग्रामे मम गतं पुनः ॥ ८
आसीत् तु भारतभुमे यदा (१९४७ खीष्टाब्दाः) तत्र विभाजनम् ।
स पूर्व्वो भागो बङ्गानां पाकिस्ताने गतस्तदा ॥
सम्प्रति पाकिस्तानस्य छेद आसीत् द्विधा पुनः ।
इदानीं बाङ्लादेशश्च स पूर्व्वो भाग उच्यते ॥ १०
जन्मभूमिर्यदा सा मे पाकिस्ताने गता पुनः ।
देशत्यागे तदा तावत् सङ्कल्पश्च कृतो मया ॥ ११
बङ्गानां पश्चिमो भाग स्थितश्च भारते खलु ।
इह च पश्चिमे भागे तदा (१९४७ खीष्टाब्दाः) मया समागतम् ॥ १२
अध्ययनादिकं तावद् इह मया समापितम् ।
इहैव पश्चिमे भागे वसतिश्च कृता परे ॥ १३
बङ्गेषु पश्चिमे भागे बीरभूम इति स्थितम् ।
रामपुरहाटस्तत्र स्थितो जनपदः पुनः ॥ १४
महाविद्यालये तत्र वृत्तिरध्यापना धृता ।
रामपुरहाटे पश्चाद् गृहमपि विनिर्म्मितम् ॥ १५
इह रामपुरहाटे इदानीं वसतिर्मम ।
इहैव रचितो ग्रन्थो य इह पुरतस्तव ॥ १६
आसीच्च विनोददत्तः पितुर्मम सहोदरः ।
आसामप्रदेशे तेन वृत्त्यर्थं यौवने गतम् ॥ १७
"तेजपुरः" स्थितस्तत्र तत्र च वसतिः कृता ।
खुल्लतातो दिवं गतः जीवति तस्य सन्ततिः ॥ १८
वैमात्रेयः पुनर्भ्राता माधवश्च पितुर्मम ।
आसामप्रदेशे पुनस्तेनापि यौवने गतम् ॥ १९
"ढेकियाजुलि"श्चेति च तत्र स्थानं स्थितं खलु ।
तेन तत्र कृतो वासः लोकान्तरं गतोऽपि सः ॥ २०
वैमात्रेयः पुनर्भ्राता नरेन्द्रश्च पितुर्मम ।
बङ्गेषु चोत्तरभागे तेन च वसतिः कृता ॥ २१
आलिपुरदुयारे च "सोनापुर" इति स्थितम् ।
तेन तत्र कृतो वासः वृद्धस्तत्र स जीवति ॥ २२

## सन्धिप्रकरणम्

### अच्सन्धिः

आरम्भः

८।१।१६७४

"सुधी" स्याच्चेत् पदं पूर्व्वम् "उपास्य"श्चेत् पदं परम्।
संहिता चेद् द्वयोः कार्य्या सूत्रं परं प्रयोजनम्॥ १

**४७। इको यणचि। ६।१।७७**

अचि परे इको यण् स्यात् संहिता विषयो यदि।
इकारस्य यकारः स्याद् आन्तर्य्यं स्थानतः स्थितम्॥ २
"सुध्य्" च तदा स्थितं तावद् "उपास्य"श्च परे तदा।
एवं पुनः स्थिते यत्र सूत्रं परं प्रवर्त्तते॥ ३

**४८। अनचि च। ८।४।४७**

अचः परे यदा यर् स्यात् द्वित्वं वा स्याद् यरस्तदा।
अचि यदि परे तत्र तदा द्वित्वं भवेन्न च॥ ४
धकारस्य भवेद् द्वित्वं "सुध् ध् य्" च तदा स्थितं भवेत्।
"उपास्य"श्च पुनः शब्दो यथापूर्व्वं परे स्थितः॥ ५

पूर्व्वपक्षः

"अनची"ति यदा द्वित्वं पुनरेवं विधीयते।
आशङ्का स्यात् तदा तत्र यतः सूत्रं परं स्थितम्॥ ६

**४९। स्थानिवदादेशोऽनल्विधौ। १।१।५६**

आदेशः स्थानिवज् ज्ञेयः अल्विधिश्चेत् तदा तु न।
यथा यथा भवेत् स्थानी आदेशः स्यात् तथा तथा॥ ७
"ई" स्थानी च भवेदत्र आदेशो "य" भवेत् पुनः।
ई भवेद् अच् पुनश्चात्र ईकारवानजेव "यः"॥ ८
यकारश्च यदा स्यादच् अजिह स्यात् परे तदा।
"अनची"ति तदा सूत्रं नेह तावत् प्रयुज्यते॥ ९
धकारस्य ततो द्वित्वं न प्राप्नोति कुतश्चन।
दर्शितं यत् पुनर्द्वित्वं तन्न न्याय्यं भवेदिह॥ १०

उत्तरपक्षः

आशङ्का न भवेन् न्याय्या प्रक्रिया न विहन्यते।
अत्रैव मुनिना प्रोक्तम् "अनल्विधौ" च शेषतः॥ ११

अल्विधिः स्यात् पुनश्चायं स्थानिवत्वं न सिध्यति ।
धकारस्य भवेद् द्वित्वं प्रतिषेधो न वर्त्तते ॥ १२

पूर्व्वपक्षः

माभिवदं यद् भवेदुक्तं स्थानिवत्वं न सिध्यति ।
अपरं च स्थितं सूत्रं स्थानिवत्त्वं यथा भवेत् ॥ १३

**५० । अचः परस्मिन् पूर्व्वविधौ । १।१।५७**

पूर्व्वनिमित्तकस्तावदजादेशो भवेद् यदि ।
पूर्व्वविधौ तु कर्त्तव्ये स स्थानिवद् भवेदिह ॥ १४
उकारं परमाश्रित्य यकारश्च प्रवर्त्तते ।
अचः पूर्व्वं धकारः स्यात् तस्य कार्य्यं भवेत् पुनः ॥ १५
यकारः स्थानिवत् तस्मात् भवेदिह च शास्त्रतः ।
स्थानिवत्वे यकारस्य संशयश्च न विद्यते ॥ १६

उत्तरपक्षः

एवं यदा स्थितं चात्र तदा पुनरिहोच्यते ।
स्थानिवन्न यकारः स्यात् सूत्रं स्थितं परं पुनः ॥ १७

**५१ । न पदान्त-द्विर्वचन-वरे-य-लोप-स्वर-सवर्ण-अनुस्वार-दीर्घ-जश्-चर्-विधिषु । १।१।५८**

परनिमित्तकस्तावदजादेशो भवेद् यदि ।
पदान्ते द्विर्वचनादौ स स्थानिवद् भवेन्न च ॥ १८
द्विवचनं धकारस्य कर्त्तव्यं च भवेदिह ।
स्थानिवत्वं धकारस्य ततः पुनर्न सिध्यति ॥ १९
धकारस्य ततो द्वित्वं भवेदिह न संशयः ।
"सु ध् ध् य्" च तावत् तथा सिद्धं सूत्रं परं ततो भवेत् ॥ २०

८।१।१९७४-२० श्लोकाः

**५२ । झलां जश् झशि । ८।४।५३**

झशि परे झलां जश् स्यात् धकारस्य तथा च दः ।
"सु ध् ध् य्" च तावत् स्थितं तत्र "उपास्य"श्च परे पुनः ॥ २१

एवं यदा स्थितं तत्र परं सूत्रं प्रवर्त्तते ।
लोपस्येह प्रसङ्गः स्यात् लोपे सूत्रं तथा पुनः ॥ २२

५३ । अदर्शनं लोपः । १।१।६०

प्रसक्तं यत् न चेत् तत् स्यात् अदर्शनं तदा भवेत् ।
अदर्शनं भवेल्लोपः तथा संज्ञा भवेदिह ॥ २३

५४ । संयोगान्तस्य लोपः । ८।२।२३

अन्तस्य तु भवेल्लोपः संयोगान्तं पदं यदि ।
अन्त्यस्येह यकारस्य तथा लोपो हि लभ्यते ॥ २४
एवं यदा स्थितं तत्र वार्त्तिकं च प्रवर्त्तते ।
लोपे प्राप्ते न लोपः स्यात् वार्त्तिकेन निषिध्यते ॥ २५

यणः प्रतिषेधो वाच्यः (वा)

प्रसक्तेऽपि पुनर्लोपे यणो लोपो भवेन्न च ।
यकारस्य तथा लोपः पुनरिह निषिध्यते ॥ २६
एवं यदा स्थितं तत्र वार्त्तिकं च परं भवेत् ।
वार्त्तिकेन भवेत् कार्य्यं यथेप्सितं यथायथम् ॥ २७

यणो मयो द्वे वाच्ये (वा)

मयः परे यदा यण स्यात् यणो द्वित्वं भवेत्तदा ।
पदचतुष्टयं तत्र द्वित्वविकल्पनात् भवेत् ॥ २८
एकधमेकयं तावत् सुध्युपास्यः पदं तथा ।
द्विधं द्वियं पदं तत्र सु ध्ध्य्युपास्यस्तथा पुनः ॥ २९
स्याद् द्विधमेकयं तद्वत् सु ध्ध्युपास्यः पदं भवेत् ।
स्यादेकधं द्वियं तत्र सुध्य्युपास्यः पदं पुनः ॥ ३०

५५ । नादिन्याक्रोशे पुत्रस्य । ८।४।४८

"आदिनी" चेत् परे शब्दः आक्रोशश्चेत् प्रतीयते ।
पुत्रस्य न तकारस्य भवेद् द्वित्वमिति स्थितिः ॥ ३१
"पुत्रादिनी त्वमसि रे" भवेदिह निदर्शनम् ।
एक एव तकारश्च आक्रोशश्च प्रतीयते ॥ ३२
आक्रोशश्चेन् न वाच्यः स्यात् द्विर्वचनं भवेत् खलु ।
पुत्रादिनी सा सर्पिणी स्यात् तत्त्वकथनं पुनः ॥ ३३

तत्परे चेति वक्तव्यम् (वा)

पुत्रादिनी परे यत्र पुत्रशब्दात् भवेत् पुनः ।
न द्वित्वं च तदापि स्यात् पुत्रपुत्रादिनी यथा ॥ ३४

वा हतजग्धपर इति वक्तव्यम् (वा)

"हत"शब्दः परे यत्र "जग्ध"शब्दः परे यदा ।
विभाषा च भवेद् द्वित्वं यथा परं निदर्शनम् ॥ ३५
पुत्त्रहती भवेदत्र पुत्रहती तथा पुनः ।
पुत्त्रजग्धी भवेत्तद्वत् पुत्रजग्धी भवेत् तथा ॥ ३६

चयो द्वितीयाः शरि पौष्करसादेः (वा)

शरि परे चयस्तत्र द्वितीयाश्च भवन्ति ह ।
आचार्य्यः पौष्करसादिः तस्य मतमिदं पुनः ॥ ३७
तकारस्य थकारः स्यात् "वथ्स" इति निदर्शनम् ।
ककारस्य खकारः स्यात् "अख्षरं" स्यात् तथा पुनः ॥ ३८

**५६ । त्रिप्रभृतिषु शाकटायनस्य । ८।४।५०**

त्र्यादीनाञ्च यदा योगः द्वित्वं तदा भवेन्न च ।
एतत् शाकटायनस्य मतं भवेदिति स्थितिः ॥ ३९
इन्द्रश्चन्द्रस्त्रियोगः स्यात् उष्ट्री राष्ट्रस्तथा पुनः ।
भ्राष्ट्रमपि भवेत्तद्वत् द्वित्वं नास्ति त्रियोगतः ॥ ४०

**५७ । सर्व्वत्र शाकल्यस्य । ८।४।५१**

न कुत्रापि भवेद् द्वित्वं शाकल्यस्य मतेन ह्न ।
अर्को मर्कस्तथा ब्रह्मा भवेदिह निदर्शनम् ॥ ४१

**५८ । दीर्घादाचार्य्याणाम् । ८।४।५२**

दीर्घात् परं यदा वर्णास्तदा द्वित्वं भवेन्न च ।
मतमेतदाचार्य्याणां दात्रं पात्रं यथा पुनः ॥ ४२

**५९ । अचो रहाभ्यां द्वे । ८।४।४६**

अचः परो यदा रः स्यादचः परो यदा च हः ।
प्राप्नोति च तदा द्वित्वम् अर्क्कः मर्क्को निदर्शनम् ॥ ४३

**६० । हलो यमां यमि लोपः । ८।४।६४**

यमि यदि परे तत्र लुप्यति यम् हलः परः ।
एष लोपो विभाषा स्यात् शय्या शय्य्या निदर्शनम् ॥ ४४

लोपो यदि भवेदत्र द्वित्वाभावोऽथवा पुनः ।
एकमेव भवेद्रूपं सूत्रं कथं प्रयुज्यते ॥ ४५
आदित्यं हविरित्यादौ सूत्रं भवेत् प्रयोजनम् ।
द्वित्वमिह यकारस्य न चान्यथा विलुप्यति ॥ ४६

यमः परः यदा यम् स्यात् पूर्व्वे नव परे नवे ।
यथासंख्यं भवेद् ग्राह्यं माहात्म्यं न भवेदिह ॥ ४७

६१ । एचोऽयवायावः । ६।१।७८

ए ऐ ओ औ यदा तत्र अय् आय् अव् आव् तदा भवेत् ।
चयनं चायकस्तत्र लवणं लावको यथा ॥ ४८

६२ । तस्य लोपः । १।३।९

इत्संज्ञो यो भवेदत्र तस्य लोपो भवेदिह ।
इतौ न च यरौ तावत् लुप्येते न तथा च तौ ॥ ४९

६३ । वान्तो यि प्रत्यये । ६।१।७९

प्रत्ययस्तु यकारादिः परे यदा प्रवर्त्तते ।
वान्तादेशस्तदापि स्यादयाविति यथायथम् ॥ ५०
नाव्यं भवेत् पदं तावत् गव्यं भवेत् पदं तथा ।
अन्यत्रापि भवेदेवमूहनीयं यथायथम् ॥ ५१

गोर्यूतौ छन्दसि (वा)

यूतिशब्दः परे यत्र गोशब्दात् स्यात् च छन्दसि ।
"गव्यूतिः" स्यात् पदं तत्र "गोयूतिः" स्यात् तदन्यथा ॥ ५२

अध्वपरिमाणे च (वा)

यूतिशब्दः परे यत्र गोशब्दात् स्यात् तथैव च ।
अध्वनः परिमाणं चेत् यथा परं निदर्शनम् ॥ ५३
गव्यूतिमात्रमध्वानं गतो रामो भवेदिति ।
वान्तादेशः प्रयुक्तश्च तथा पदं तथा भवेत् ॥ ५४

६४ । धातोस्तन्निमित्तस्यैव । ६।१।८०

प्रत्ययश्चेद् यकारादिः परमिह प्रवर्त्तते ।
प्रत्ययेन पुनस्तेन धातोरेच् जनितो यदि ॥ ५५

एवः स्थाने यदैव स्याद् वान्तादेश इति स्थितिः।
अन्येन जनितश्चेदेच् वान्तादेशस्तदा तु न ॥ ५६

धातुः स्यात् "लू", यकारादिः "यत्" प्रत्ययः परे स्थितः।
प्रत्ययेन "यता" तेन गुणेन जनितश्च "लो" ॥ ५७

एच् चायं "लो" पुनस्तस्य वान्तादेशो भवेदिह।
लव्यमिति पदं तावत् वान्तादेशे भवेत् पुनः ॥ ५८

औपनेति यदैच् स्यात् तत् सन्धिना जनितोऽन्यथा।
वान्तादेशस्ततो न स्यात् इति तत्त्वं भवेदिह ॥ ५९

६।१।७४-३९ श्लोकाः

६५। क्षय्यजय्यौ शक्यार्थे। ६।१।८१

क्षेतुं शक्यं भवेत् क्षय्यं यान्तादेशो निपात्यते।
जेतुं शक्यं भवेद् जय्यं यान्तादेशो निपात्यते ॥ ६०

शक्यार्थश्चेत् प्रतीतः स्यात् यान्तादेशस्तदैव च।
अन्यार्थश्चेत् प्रतीतः स्यात् तदा न स्यादिति स्थितिः ॥ ६१

क्षेतुं योग्यं भवेत् क्षेयं पापं क्षेयं भवेदिह।
जेतुं योग्यं भवेत् जेयं योग्यार्थं तु द्वयं मतम् ॥ ६२

६६। क्रय्यस्तदर्थे। ६।१।८२

क्रेतारः क्रीणीयुरिति यदापणे प्रसारितम्।
तदिह च भवेत् क्रय्यं क्रेयमन्यत् भवेत् पुनः ॥ ६३

६७। लोपः शाकल्यस्य। ८।३।१९

अकारश्चेत् स्थितः पूर्व्वं अशिह चेत् परे स्थितः।
यवयोश्च तदा लोपः शाकल्यस्य विभाषया ॥ ६४

"हरएहि" भवेदत्र "हरयेहि" तथा पुनः।
"विष्ण इह" भवेत्तद्वत् "विष्णविह" तथा भवेत् ॥ ६५

लोपे कृते पुनः सन्धिर्नेह तावत् प्रवर्त्तते।
पूर्व्वात्र न परं शास्त्रं संज्ञायां कथितं मया ॥ ६६

"कानि सन्ति" पुन "कौ स्तः" इत्यादिकं भवेद् यदा।
न तदा स्थानिवद्भावः अकारस्य धृतो भवेत् ॥ ६७

"न पदान्त" स्थितं सूत्रं पदान्ते न तथा भवेत्।
पश्चादकारमादाय यणिह न प्रवर्त्तते ॥ ६८

६८। एकः पूर्व्वपरयोः। ६।१।८४

पूर्व्वमिह स्थितं यच्च परमिह स्थितं च यत्।
मिलितयोस्तयोस्तावदेकादेशो गुणो भवेत्॥ ६९
अधिकारे स्थितं सूत्रमधिकारो विधीयते।
"ख्यात्यादि"ति परे सूत्रं तत्पर्य्यन्तं स्थितश्च सः॥ ७०

६९। आद् गुणः। ६।१।८७

अवर्णश्चेत् स्थितः पूर्व्वे अजिह चेत् परे स्थितः।
एकादेशस्तयो र्ज्ञेयः संहिता विषयो यदि॥ ७१
"उपेन्द्रः" स्यात् पदं तत्र "रमेशः" स्यात् पदं तथा।
"गङ्गोदकं" पदं स्याच्च तद्वदन्यद् भवेदपि॥ ७२

७०। उरण् रपरः। १।१।५१

ऋकारस्त्रिंशतः संज्ञा पूर्व्वमेव प्रदर्शिता।
इह संज्ञाधिकारे च विशेषो दर्शितो मया॥ ७३
अणिह स्यादकारस्य पुनरण् यो भवेदिह।
स रपरः सन्नेव हि पुनरत्र प्रयुज्यते॥ ७४
"कृष्ण" यदा पदं तत्र "ऋद्धिः" यदा पदं पुनः।
"कृष्णर्द्धिः" स्यात् तदा तत्र अरन्तरतमो भवेत्॥ ७५
"तव" यदि पदं तत्र "लृकार"श्चेत् पदं पुनः।
"तवल्कारः" पदं तत्र अलन्तरतमो भवेत्॥ ७६
"अच" इति स्थितं सूत्रं पक्षे द्वित्वं भवेदपि।
"कृष्णर्द्धिः" स्यात पदं तत्र "कृष्णर्द्ध्ध्भिश्च" तथा भवेत्।

७१। झरो झरि सवर्णे। ८।४।६५

हलः परो यदा झर् स्यात् सवर्णे झर् परे पुनः।
तदा झरश्च पूर्व्वस्य भवेल्लोपो विभाषया॥ ७८
न चेद् द्वित्वं पुनर्लोप एकधं स्यात् पदं तदा।
"कृष्णर्धिः" स्यात् पदं तत्र धकार एक एव हि॥ ७९
न चेद् द्वित्वं न लोपश्चेत् द्विधं पदं तदा भवेत्।
"कृष्णर्ध्धिः" स्यात् पदं तत्र "कृष्णर्द्धिश्च" "झलां जशि"॥ ८०
यदा द्वित्वं पुनर्लोपः द्विधं पदं तदापि च।
"कृष्णर्ध्भिः" स्यात् पदं तत्र "कृष्णर्द्धिः" स्यात् "झलां जशि"॥ ८१

यदा द्वित्वं न लोपश्च त्रिधं पदं तदा भवेत् ।
"कृष्णार्द्ध्ध्धिः" स्यात् पदं तत्र
कृष्णार्द्द्धिः" स्याद् "झलां जशि" ॥ ८२

द्वित्वाभावः पुनर्लोपः पक्षस्तु प्रथमो भवेत् ।
द्वित्वाभावो न लोपश्च पक्षो भवेद् द्वितीयकः ॥ ८३
पुनर्द्वित्वं पुनर्लोपः पक्षो भवेत् तृतीयकः ।
द्वित्वं पुन र्न लोपश्च पक्षो भवेच् चतुर्थकः ॥ ८४
द्वितीये यद् भवेद् रूपं तृतीये स्यात् तदेव हि ।
न दृश्यते फले भेदः पदत्रयं ततो धृतम् ॥ ८५

तवल्कारः पदं यत्र तत्र द्वित्वं कथं भवेत् ।
इत्यपि वै भवेत् प्रश्नः समाधानं यथा परम् ॥ ८६
वार्त्तिकं च स्थितं तत्र "यणो मयो" भवेच्च तत् ।
मय इति भवेत् षष्ठी यण इति च पञ्चमी ॥ ८७
एवमिह भवेत् षष्ठी एवमिह च पञ्चमी ।
एवं कृत्वा पुनर्व्याख्या कैश्चिदपि प्रदर्शिता ॥ ८८
यणः पश्चाद् यदा मय् स्यात् मयो द्वित्वं भवेत्तदा ।
एषा व्याख्या भवेदत्र पक्षश्चायं यदा मतम् ॥ ८९

ककारस्य भवेद् द्वित्वमेषा व्याख्या यदा धृता ।
"तवल्क्कारः" पदं तत्र तदा भवेदिति स्थितिः ॥ ९०
"अनचि च" पुनः सूत्रमिहापि च प्रयुज्यते ।
लकारस्य पुनर्द्वित्वं प्राप्नोति च तथा पुनः ॥ ९१
"तवल्ल्कारः" पदं तत्र तदा भवेदिति स्थितिः ।
कद्वित्वे च लद्वित्वे च पदद्वयं तथा भवेत् ॥ ९२
एक एव यदा कः स्यात् एक एव यदा च लः ।
"तवल्कारः" पदं तत्र तदा भवेदिति स्थितिः ॥ ९३
ककारस्य लकारस्य द्वयो द्वित्वं भवेद् यदा ।
"तवल्ल्क्कारः" पदं तत्र तदा भवेदिति स्थितिः ॥ ९४
पदचतुष्टयं तावदेवं भवेद् व्यवस्थितम् ।
कद्वयं लद्वयं तावदेकमेकं द्वयं द्वयम् ॥ ९५

प्राचीना कारिका काचिदिह तावन्न दृश्यते।
तामपि भवतां तृप्त्यै दर्शयामि परं पुनः॥ ९६
"द्वित्वं लस्यैव कस्यैव नोभयोरुभयोरपि।
तवल्कारादिषु बुधैर्बोध्यं पदचतुष्टयम॥"
द्वित्वं लस्यैव नान्यस्य तवल्ल्कारस्तदा भवेत्।
द्वित्वं कस्यैव नान्यस्य तवल्क्कारस्तदा भवेत्॥ ९७
एतस्य तस्य न द्वित्वं तवल्कारस्तदा भवेत्।
एतस्य तस्य च द्वित्वं तवल्ल्क्कारस्तदा भवेत्॥ ९८

७२। वृद्धिरेचि। ६।१।८८

अवर्णश्चेद् भवेत् पूर्व्वं एजिह चेत परे भवेत्।
एकादेशो भवेद् वृद्धिर्गुणो नेह प्रवर्त्तते॥ ९९
कृष्णैकत्वं पदं स्याच्च गङ्गौघः स्यात पदं तथा।
देवैश्वर्य्यं पदं तद्वत् कृष्णौत्कण्ठ्यं तथा भवेत्॥ १००

७३। एत्येधत्यूठ्सु। ६।१।८८

एति यदि परे तत्र एधति चेत् परे पुनः।
ऊठ् वा यदि परे तत्र अवर्णः पूर्व्वतो यदि॥ १०१
एकादेशस्तयोर्वृद्धिस्तदा भवेदिति स्थितिः।
उपैति स्यात् उपैधते प्रष्ठौहः स्यात निदर्शनम॥ १०२
"एङि पररूपं" न स्यादपवादः प्रवर्त्तते।
"आद्गुणश्च" तथा न स्यात् अपोद्यते पुनश्च तत्॥ १०३
एजिति चेत् परे तत्र तदा सूत्रं प्रयुज्यते।
"उपेतः" स्यात् न तावच्चेत् "इत" इति ततश्च न॥ १०४
"मा भवान् प्रेदिधत्" स्याच्चेत् "प्र इदिधत्" तदा भवेत्।
न तावद् एच् न वृद्धिश्च ततो भवेदिति स्थितिः॥ १०५
"आ" यदि स्यात् पदं तत्र "इहि" यदि पदं पुनः।
द्वयोरिह भवेत् सन्धिः पदम "एहि" तदा भवेत्॥ १०६
"अव" यदि पदं तत्र "एहि" यदि पदं पुनः।
द्वयोरिह भवेत् सन्धिः स इह विषयो मतः॥ १०७
एकारो यो भवेदत्र स इणो हि प्रजायते।
"अन्तादिवत्" स्थितं सूत्रम एकार आदिवद् भवेत्॥ १०८

यदा सन्धि भवेत् कार्य्यं "एत्येधति" प्रवर्त्तते।
वृद्धिरिह भवेत् प्राप्ता पक्ष एको भवेदयम्॥ १०९
एकारो यो भवेदत्र "आ" तस्मिंस्तु स्थितः पुनः।
"अन्तादिवत्" स्थितं सूत्रम् एकारश्चान्तवद् भवेत्॥ ११०
एकारः स्यात् परे तस्मात् आङपि च परे भवेत्।
"ओमाङोश्च" तदा सूत्रं यथायथं प्रवर्त्तते॥ १११

एवं यदा द्वयं योज्यं कतरद्वा तयोर्भवेत्।
इति प्रश्नो भवेदत्र समाधानं यथा परम्॥ ११२
अपवादो यदाग्रे स्यात् उत्सर्गश्च परे यदा।
उत्सर्गं प्रथमं यत् स्यात् तद् बाध्यते परं तु न॥ ११३
"एती"ति यद् भवेत् सूत्रमपवादे स्थितं हि तत्।
उत्सर्गे च भवेद् "एङि" "ओमाङोश्च" द्वयं पुनः॥ ११४
सूत्रम् "एङि" भवेदादौ तदेव बाधितं भवेत्।
"ओमाङोश्च" परे सूत्रं न बाधितं भवेन्न तत्॥ ११५
"ओमाङोश्च" भवेद् योज्यम् अवेहि च पदं भवेत्।
अवेहीति पदं वृद्धौ न साधु स्यादिति स्थितिः॥ ११६

न तावदपवादस्य विषयस्तु भवेदग्रम्।
स्पष्टमेतत् स्थितं प्रोक्तं दृश्या बालमनोरमा॥ ११७
पूर्व्वात् परं बलीयः स्यादिति विधिर्हि युज्यते।
"एती"ति न भवेत् पूर्व्वम् "ओमाङो"श्च परं भवेत्॥ ११८

अक्षादूहिन्यामुपसंख्यानम् (वा)

अक्षशब्दो यदा पूर्व्वं ईर ईरिणा परे यदा।
एकादेशो भवेद् वृद्धिरक्षौहिणी भवेत्तदा॥ ११९

स्वादीरेरिणोः (वा)

स्वशब्दस्तु यदा पूर्व्वं ईर ईरिण् परे यदा।
एकादेशो भवेद् वृद्धिः स्वैरो स्यात् स्वैरिणी तथा॥ १२०

प्राद् ऊह-ऊढ-ऊढि-एष-एष्येषु (वा)

प्रशब्दश्चेत् भवेत् पूर्व्वं एषां कश्चित् परे यदि।
ऐकादेशो भवेद् वृद्धि र्यथा परं निदर्शनम्॥ १२१

प्रौहः प्रौढो भवेदत्र प्रौढिः प्रैषो भवेत्तथा ।
प्रैष्यश्चापि भवेत्तत्र सर्व्वं मया प्रदर्शितम् ॥ १२२
ऊढ इति यदा शब्दस्तदा वृद्धि र्भवेद् यदि ।
ऊढवान् स्याद् यदा शब्दो वृद्धिर्भवेत् तदापि च ॥ १२३
ऊढवान् स्याद् यदा शब्द ऊढशब्दः स्थितस्तदा ।
वार्त्तिकं यत् धृतं वृद्धौ तदिहापि प्रयुज्यते ॥ १२४

न तावत् स्यान् तथा वृद्धिः परिभाषा स्थिता पुनः ।
अर्थवान् गृह्यते शास्त्रे न गृह्यते निरर्थकः ॥ १२५

ऊढ इति यदा शब्दः क्तो भवेत् भावकर्मणोः ।
अर्थवान् स भवेत्तावद् अर्थवानेव गृह्यते ॥ १२६
ऊढवान् स्यात् यदा शब्दः क्तवत्वन्तः स गृह्यते ।
समग्रतो भवेदर्थो न चांशतो भवेत् पुनः ॥ १२७
ऊढ इति तदंशः स्याद् एकशः स निरर्थकः ।
निरर्थकं तमाश्रित्य वृद्धिकार्य्यं न युज्यते ॥ १२८
नेह तावद् भवेद्द वृद्धि र्वार्त्तिकं च न युज्यते ।
गुणो भवेद् यथाप्राप्तं प्रोढवान् स्यात् पदं गुणे ॥ १२९
अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम् ।
"ब्रश्च"-इति स्थितं सूत्रं तदिह ज्ञापकं मतम् ।
अर्थवान् गृह्यते शास्त्रे न गृह्यते निरर्थकः ॥ १३०
अर्थवान् च भवेद् "भ्राजिः" स गृह्यते पृथक् पुनः ।
"राजि"स्तस्मिन् स्थितश्चापि निरर्थक उपेक्ष्यते ॥ १३१
"राजि" ना न भवेद् "भ्राजिः" "भ्राजेः" पाठः पृथक् ततः ।
"ऊढे"न "ऊढवान्" न स्यान् पृथक् पाठः प्रयोजनम् ॥ १३२

इच्छायामिष् तुदादौ स्याद् गतौ स्यादिष् दिवादिके ।
इषाभीक्ष्ण्ये स्थितः क्र्यादौ एष एष्यश्च घञ्ण्यतोः ॥ १३३
प्रशब्दश्चेत् भवेत् पूर्व्वं एष एष्यः परो यदि ।
अनेन तु भवेद् वृद्धिः प्रैषः प्रैष्यस्तथा भवेत् ॥ १३४

परम्पं पुनः प्राप्तम् इह तत्र निषिध्यते ।
वार्त्तिकेन भवेद् वृद्धिः वृद्धौ रूपं प्रदर्शितम् ॥ १३५
प्रैषः प्रैषः पुनः शब्दो न चासिद्धौ हि सर्व्वथा ।
ईशिति च स्थितो भ्वादौ ईष ईष्यो घञि ण्यति ॥ १३६
प्रशब्दश्चेत् भवेत् पूर्व्वं ईषं ईष्यः परो यदि ।
"आद्गुणो" स्यात् पदं तत्र प्रैषः प्रैष्यो यथाक्रमम् ॥ १३७

ऋते च तृतीयासमासे (वा)

अवर्णश्चेत् भवेत् पूर्व्वं ऋतो यदि परे भवेत् ।
स्यात् तृतीयासमासश्चेत् वृद्धिस्तदा प्रवर्त्तते ॥ १३८
सुखेन ऋतस्तत्र चेत् सुखार्तः स्यात् पदं तदा ।
न तृतीयासमासश्चेत् न स्याद् वृद्धिर्गुणो भवेत् ॥ १३९
परम स्यात् ऋतः स्याच्चेत् स्थितश्चेत् कर्मधारयः ।
परमर्त्तस्तदा सन्धौ गुण इह प्रवर्त्तते ॥ १४०

प्र वत्सतर-कम्बल-वसन-दशानामानृणे (वा)

प्रशब्दश्चेत् स्थितः पूर्व्वं वत्सतरः स्थितो यदि ।
कम्बलश्चेत् स्थितं पूर्व्वं वसनश्चेत् स्थितं पुनः ॥ १४१
दशशब्दो यदा पूर्व्वं ऋणं पूर्व्वं यदा पुनः ।
ऋणे परे भवेद् वृद्धिः प्रार्णं भवेन्निदर्शनम् ॥ १४२

७४। उपसर्गादृति धातौ। ६।१।९१

अवर्णान्त उपसर्गं यदा पूर्व्वं स्थितो भवेत् ।
ऋकारादिः पुनर्धातुः परे यदि भवेदिह ॥ १४३
एकादेशो भवेद् वृद्धिः उपार्च्छति निदर्शनम् ।
प्रार्च्छति च पदं तद्वत् निदर्शनं भवेदिह ॥ १४४

१३ । १९७४-८१ श्लोकाः
१४।१।१९७४

पूर्व्वपक्षः

उपार्च्छति पदं तावदेवं यदा प्रसिध्यति ।
रकारश्च पदान्तः स्यान् विसर्गश्च ततः परम् ॥ १४५
भवेदिह विसर्गश्चेत् उपार्च्छति न सिध्यति ।
सिद्धान्तो न भवेन् न्यासः आशङ्का च प्रजायते ॥ १४६

न निर्मूला पुनः शङ्का मूलं तत्र स्थितं खलु ।
मूलं यथा स्थितं तत्र तथा परे प्रदर्शितम् ॥ १४७
उपार्च्छति पदं तत्र आरिति च स्थितः खलु ।
आरिह च पदान्तः स्यात् सूत्रमिह यथा परम् ॥ १४८

७५ । अन्तादिवच्च । ६।१।८५

एकादेशः श्रुतस्तावत् वर्णितः स यथापरम् ।
अन्तवत् स च पूर्व्वस्य स आदिवत् परस्य च ॥ १४९
उप इति पदं पूर्व्वम् आदेश आर् भवेदिह ।
आर् अन्तवदिह ग्राह्यः पदान्त आर् भवेदतः ॥ १५०
आरिति चेत् पदान्तः स्यात् पदान्तो "र" भवेत्तदा ।
पदान्तता यदा सिद्धा सूत्रं परं तदा पुनः ॥ १५१

७६ । खरवसानयो विसर्ज्जनीयः । ८।३।१५

खरिह चेत् परे भवेद् अवसानं परे यदि ।
पदान्तस्य रकारस्य विसर्गः स्यात् इति स्थितिः ॥ १५२
रकारस्य विसर्गः स्यात् उपार्च्छति न सिध्यति ।
उपार्च्छति पदं तावद् नेह सिद्धं कथञ्चन ॥ १५३

उत्तरपक्षः

अन्तवद्भावमाश्रित्य पदान्तता यदा भवेत् ।
न च तदा रकारस्य विसर्गः स्यात् मुनेरिह ॥ १५४
द्रष्टव्यम् "उभयथर्क्षु" विसर्गो न प्रयोजितः ।
"कर्त्तरि चर्षि" द्रष्टव्यं न विसर्गः स्थितः पुनः ॥ १५५
स्वयं मुनि यदा सूत्रे विसर्गं नेह वाञ्छति ।
विसर्गो न भवेत्तावत् ज्ञातमिदं भवेदिह ॥ १५६
उपार्च्छति पदं यत् स्यात् सुस्थितं तत् भवेत् खलु ।
प्रार्च्छितं च पदं तद्वत् सुस्थितः स्यादिति स्थितिः ॥ १५७

पूर्व्वपक्षः

नापि वा भवतु सन्धिः सन्धेर्नास्ति प्रयोजनम् ।
प्रकृतिभावमाश्रित्य तिष्टतां ते पदे पुनः ॥ १५८

उत्तरपक्षः

न च प्रकृतिभावोऽपि पुनरिह मतो भवेत् ।
सूत्रे "आतो" पदं तत्र वृद्धिरेव मता ततः ॥ १५९

"उपसर्ग:" पदं सूत्रे तेन धातुः प्रतीयते।
तथापि च पदं "धातुः" पुनः सूत्रे प्रयोजितम् ॥ १६०
इह योग-विभागेन सूत्रद्वयं भवेदपि।
"उपसर्गादृती"त्येकं "धातौ" स्याच्च द्वितीयकम् ॥ १६१
"उपसर्गादृति" स्याच्चेत् उपार्च्छति पदं भवेत्।
"धातौ" यदा भवेत् सूत्रं वृद्धिस्तदा भवेत् पुनः ॥ १६२
"उपसर्गादृती"त्यत्र पूर्व्वादेवानुवर्त्तते।
पूर्व्वादेव पुन "वृद्धि" रनुवृत्ता स्थिता खलु ॥ १६३
पूर्व्वं हि विहिता वृद्धिः पुनरपि विधीयते।
वृद्धिरेव वरीयस्ति प्रकृतिवद् भवेन्न च ॥ १६४
इह प्रकृतिभावश्च पाक्षिकोपि न सिध्यति।
"ऋत्यक"श्च स्थितं सूत्रं तदपि च न युज्यते ॥ १६५

७७। वा सुप्यापिशलेः। ६।१।९२

अवर्णान्त उपसर्गो यदा पूर्व्वो भवेदिह।
ऋकारान्तो यदा धातुः सुबाश्रितः परः पुनः ॥ १६६
विभाषा स्यात् द्वयो र्वृद्धिरापिशलेरिदं मतम्।
प्रार्षभीयति सन्धिश्चेत् प्रर्षभीयति वा पदम् ॥ १६७
ऋकारस्य सवर्णश्च ऌवर्णः स्यादिति स्थितिः।
ऋकारादौ यथा स्याच्च ऌकारादौ तथा पुनः ॥ १६८
प्राल्कारीयति सन्धौ स्यात् यदा वृद्धिर्मता भवेत्।
प्रल्कारीयति सन्धौ स्यात् वृद्धिर्मता यदा च न ॥ १६९
दीर्घे परे न वृद्धिः स्याद् गुण एव भवेत्तदा।
भवेत् प्रकृतिभावश्च यथापरं निदर्शनम् ॥ १७०
स्यादुप ऋकारीयति प्रकृत्या च पदे स्थिते।
भवेदुपर्कारीयति यदा गुणो विधीयते ॥ १७१

७८। एङि पररूपम्। ६।१।९४

अवर्णान्त उपसर्गो यदा पूर्व्वं भवेदिह।
एङादिश्च पुनर्धातु र्यदा परे प्रवर्त्तते ॥ १७२
आदेशः पररूपं स्यात् एङेव हि तदा भवेत्।
प्रेजते स्यात् पदं सन्धौ उपोषति पदं तथा ॥ १७३

"वा सुपि" तु स्थितं पूर्वे अनुवर्त्यं पुनश्च तत्।
एङादौ च पुनर्धातौ भवेद् वृद्धिरिहापि च॥ १७४
भवेदुपेङ्कीयति पररूपं यदा भवेत्।
भवेदुपेङ्कीयति यदा वृद्धि र्मता पुनः॥ १७५

एवे चानियोगे (वा)

"एव" यदि परे तिष्ठेद् अवर्णः पूर्वतो यदि।
आदेशः पररूपं स्यात् अनिश्चयो यदा मतः॥ १७६
क्वेव गता "खुकी" भग्नी मरणेन हृता बलात्।
तिष्ठेत् सा मृता क्वेव को वा वदेत् सुनिश्चयम्॥ १७७
अनिश्चयो यदा तत्र तदैव हि तथा भवेत्।
निश्चयश्चेद् भवेदत्र भवेद् वृद्धि र्यथायथम्॥ १७८
ममैव हि हृतं भाग्यं गता माता गतः पिता।
भग्नी खुकी गता शेषे पृच्छतीति न मे जनः॥ १७९

७९। अचोऽन्त्यादि टि। १।१।६४

अन्त्यो यः स्यादचां मध्ये स यस्यादिस्तदेव टि।
"राजन्" भवेद् यदा शब्दः अन् भवेत् टि मतं तदा॥ १८०

शकन्ध्वादिषु पररूपं वाच्यम् (वा)

शक इति पदं स्याच्चेत् अन्ध इति पदं यदा।
पररूपं भवेद् वाच्यं पररूपं भवेन्न टेः॥ १८१
शकन्धुः स्यात् पदं तत्र कर्कन्धुः स्यात् पदं तथा।
कुलटा स्यात् पदं तद्वत् सीमन्तः स्यात् तथैव च॥ १८२
मनीषा स्यात् हलीषा स्यात् लाङ्गलीषा तथा भवेत्।
पतञ्जलि र्भवेत्तद्वत् सारङ्गश्च तथा मतः॥ १८३
स्यादाकृतिगणश्चायम् यथादृष्टं हि गृह्यते।
मार्त्तण्डश्च पुनः शब्दो दृश्यते गृह्यते ततः॥ १८४

ओत्वोष्ठयोः समासे वा (वा)

पररूपं भवेद् वापि वृद्धिर्वापि भवेदिह।
स्थूलोतुः स्यात् पदं तत्र स्थूलौतु र्वा पदं भवेत्॥ १८५

८०। ओमाङोश्च। ६।१।९५

आदेशः पररूपं स्याद् ओम् आम् आतः परे यदि।
शिवाय ओम् शिवायों स्यात् शिव एहि शिवेहि च॥ १८६

**৮১। অব্যক্তানুকরণস্যাত ইতৌ। ৬।১।৯৮**

অবন্তং চেৎ পদং পূর্ব্বমনুকারে প্রবর্ত্ততে।
ইতিশব্দো যদা তত্র পুনঃ পরে স্থিতো ভবেৎ॥ ১৮৭
আদেশঃ পররূপং স্যাৎ যথা পরং নিদর্শনম্।
"ইতি" পরে "পটৎ" পূর্ব্বে পটিতি স্যাৎ চ যোগতঃ॥ ১৮৮

একাচো ন (বা)

অনুকারে স্থিতং যৎ তদেকাচ্ যদি ভবেদিহ।
পররূপং তদা ন স্যাৎ শ্রদিতি চ নিদর্শনম্॥ ১৮৯

১৪।১।১৬৭৪-৭৫ শ্লোকাঃ

১৫।১।১৬৭৪

**৮২। নাম্রেডিতস্য অন্ত্যস্য তু বা। ৬।১।৯৯**

ন প্রাগুক্তং ভবেৎ কার্য্যমাম্রেডিতং স্থিতং যদি।
তকারমাত্রমন্তে চেৎ তদা ভবেদ্ বিভাষয়া॥ ১৯০
দ্বিত্বং ডাচং বিনাপি স্যাদ্ "পটৎপটৎ" তথা ভবেৎ।
এবং দ্বিত্বং যদা লব্ধং তদা সূত্রং প্রযুজ্যতে॥ ১৯১

ডাচি বহুলং দ্বে ভবতঃ (বা)

বহুলগ্রহণাৎ তত্র বিজ্ঞাতব্যং ভবেদিদম্।
অন্যত্রাপি বিনা ডাচং ভবেদ্ দ্বিত্বং ক্বচিৎ ক্বচিৎ॥ ১৯২
আম্রেড়িতং পদং সূত্রে ব্যাখ্যা তস্য প্রয়োজনম্।
ব্যাখ্যায়াশ্চ পুনঃ সূত্রং প্রবর্ত্ততে যথা পরম্॥ ১৯৩

**৮৩। তস্য পরমাম্রেড়িতম্। ৮।১।২**

দ্বিত্বং যদা স্থিতং তত্র পরং চ যৎ স্থিতং ভবেৎ।
আম্রেডিতং পরং তৎ স্যাৎ পটৎ পটৎ নিদর্শনম্॥ ১৯৪
দ্বিতীয়ং যৎ "পটৎ" তত্র আম্রেড়িতং ভবেচ্চ তৎ।
দ্বিতীয়স্য ভবেৎ সংজ্ঞা অন্যত্রাপি তথা ভবেৎ॥ ১৯৫

**৮৪। ঝলাং জশোঽন্তে। ৮।২।৩৯**

ঝলিহ চেৎ ভবেদন্তে তস্য জশ্ স্যাদিতি স্থিতিঃ।
দ্বিতীয়ে যঃ পটৎশব্দঃ তত্র "ত"স্য "দ" কারতা॥ ১৯৬
পটৎপটদিতি জ্ঞেয়ং পদং সন্ধৌ নিদর্শনম্।
তকারস্য দকারঃ স্যাৎ ঝলাং জশ্ স্যাৎ পদং তথা॥ ১৯৭

८५। अकः सवर्णे दीर्घः। ६।१।१०१

अक् इह चेत् भवेत् पूर्व्वं अच् सवर्णः परे यदि।
एकादेशस्तदा दीर्घो दैत्यारिः स्यान्निदर्शनम्॥ १९८

(पूर्व्वपक्षः)

अकः परे सवर्णश्चेद् दीर्घ इह विधीयते।
कुमारी शेते इत्यत्र दीर्घस्तावत् प्रसज्यते॥ १९९
ईकारश्च शकारश्च सवर्णता स्थिता तयोः।
सवर्णे च भवेद् दीर्घः "कुमार्य्येते" पदं भवेत्॥ २००

(उत्तरपक्षः)

"कुमार्य्येते" न तावत् स्यात् अजिहाप्यनुवर्त्तते।
अचि परे भवेद् दीर्घः शकारस्तु न भवेद् अच्॥ २०१

(पूर्व्वपक्षः)

"नाज्झलौ" च स्थितं सूत्रं सवर्णता निषिध्यते।
अच इहानुवृत्तौ तु नास्ति किञ्चिन् प्रयोजनम्॥ २०२

(उत्तरपक्षः)

प्रत्याहार इह स्यादच् ह्रस्व "इ"श्च धृतो भवेत्।
"ई" दीर्घा तु भवेदत्र सावर्ण्यं च न सिध्यति॥ २०३

(पूर्व्वपक्षः)

"अनुदित्" च स्थितं सूत्रम् "ई"दीर्घापि धृता भवेत्।
"नाज्झलौ" च स्थितं सूत्रं सावर्ण्यं च निषिध्यते॥ २०४

(उत्तरपक्षः)

"अनुदित्" स्यात् परे सूत्रं परे तत्र प्रवर्त्तते।
न पूर्व्वं तद् भवेत् प्राप्तं कार्य्यमापतितं यदा॥ २०५
तेन चेन स्यात् कुमार्य्येते अनिष्टं तु महत् भवेत्।
तदनिष्टं यथा न स्यात् अनुवृत्तिरचस्तथा॥ २०६

ऋति सवर्णे ऋ वा (वा)

अक् इह चेद् भवेत् पूर्व्वं ऋत् सवर्णः परे यदि।
एकादेश ऋकारो वा होतृकारः पदं यथा॥ २०७
होतॄकारः पदं वापि पुनरिह भवेत् खलु।
एतेनैव च सूत्रेण दीर्घत्वेह विधीयते॥ २०८

लृति सवर्णे लृ वा (वा)

अक् इह चेत् भवेत् पूर्व्वं लृत् सवर्णः परे यदि ।
एकादेशी लृकारः स्यात् होतॣकारो निदर्शनम् ॥ २०९
होतृ्कारः पदं वापि पुनरिह भवेत् खलु ।
एतेनैव च सूत्रेण दीर्घतेह विधीयते ॥ २१०
ऋति ऋ वा भवेद् यत्र ऋ द्विमात्रो भवेत्तदा ।
"लृति लृ वा" भवेद् यत्र लृ द्विमात्रो तदापि च ॥ २११
"ऋत्यकः"श्च परे सूत्रं तदपि च प्रयुज्यते ।
भवेत् प्रकृतिभावश्च पदत्रयं तथा भवेत् ॥ २१२

१५।१।१९७४-२३ श्लोकाः
१६।१।१९७४

८६। एङः पदान्तादति। ६।१।१०९

एङिह चेत् पदान्ते स्यात् अदिह चेत् परे भवेत् ।
आदेशः पूर्व्वरूपं स्यात् विष्णोऽव स्यात् हरेऽव च ॥ २१३

८७। सर्व्वत्र विभाषा गोः। ६।१।१२२

गोशब्दश्चेत् पदान्ते स्यात् अदिह चेत् परे भवेत् ।
भवेत् प्रकृतिभावो वा लोके वेदे समं खलु ॥ २१४
गोअग्रं स्यात् प्रकृत्या चेत् गोऽग्रम् "एङि" भवेत् पुनः ।
एङन्तस्य न चान्यस्य चित्रग्वग्रम् इको यणि ॥ २१५

८८। अवङ् स्फोटायनस्य। ६।१।१२३

गोशब्दश्चेद् पदान्ते स्याद् अजिह चेत् परे भवेत् ।
विकल्पात् स्फोटायनस्य भवेदवङ् इति स्थितिः ॥ २१६
निदर्शनं गवाग्रं स्यात् यथापूर्व्वं द्वयं भवेत् ।
पदान्ते चेत् तथा स्याच्च अन्यत्र न तथा गतिः ॥ २१७
व्यवस्थितविभाषा च पुनरिह भवेत् खलु ।
गवाक्षः स्यात् पदं तत्र व्यवस्थितविभाषया ॥ २१८

८९। इन्द्रे च। ६।१।१२४

इन्द्रशब्दः परे यदा भवेदवङ् तदा खलु ।
गवेन्द्रः स्यात् पदं तत्र "गव" "इन्द्र" यदा पुनः ॥ २१९

१६।१।१९७४-७ श्लोकाः

———

आरम्भः १६।१।१९७४
बुधवारः मध्याह्नः

## अच्सन्धौ प्रकृतिभावः

### ९०। प्लुतप्रगृह्या अचि नित्यम्। ६।१।१२५

अचि नित्यं प्रकृत्या स्युः प्रगृह्या ये प्लुताश्च ये।
एहि कृष्ण अत्र ते गौ भवेदिह निदर्शनम्॥ १
हरी एते यथेह स्यात् सूत्रे "नित्यं" पदं तथा।
अन्यथा तु भवेद् ह्रस्वे "इकः" सूत्रं स्थितं यतः॥ २

### ९१। इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च। ६।१।१२७

इगिह चेत् पदान्ते स्तात् प्रकृत्या स्यादिति स्थितिः।
ह्रस्वो भवेद् विभाषा च शाकल्यस्य मते पुनः॥ ३
इह व्यर्थश्चकारः स्यात् इति भाष्ये स्थितः खलु।
सिद्धेन प्रकृतिभावश्च ह्रस्वविधि यदा स्थितः॥ ४
चक्री अत्र प्रकृत्या स्यात् चक्र्यत्र स्याद् इको यणि।
चक्रि अत्र भवेत् ह्रस्वे पदत्रयं हि सम्मतम्॥ ५
न स्यादत्र पदान्तश्चेत् प्रकृत्या न तदा भवेत्।
गौरी यदा यदा "औ" च गौर्यौ भवेत्तदा खलु॥ ६

न समासे (वा) सिति न (वा)

सित् प्रत्ययः परे स्यात् चेत् प्रकृत्या न तदा भवेत्।
"वापी" "अश्वः" यदा तत्र वाप्यश्वः स्यात् पदं तदा॥ ७

### ९२। ऋत्यकः। ६।१।१२८

ऋति परे अकस्तावत् प्रकृत्या च भवेत् स्थितिः।
ब्रह्मा ऋषिः इत्येव स्यात् प्रकृत्या च स्थिति भवेत्॥ ८
विभाषा च भवेद् ह्रस्वः यथापूर्वमिहापि च।
ब्रह्म ऋषि भवेत् ह्रस्वे प्रकृतिवद् भवेत् पुनः॥ ९
पदान्तश्चेत् भवेत्तत्र तदेव स्यात् तथा खलु।
अपदान्ते भवेत् सन्धिः भवेद् आर्च्छत् यथायथम्॥ १०
भवेत् प्रकृतिभावश्च समासेऽपि यथायथम्।
भवेत् सप्तऋषीणाञ्च वाक्यमिह निदर्शनम्॥ ११

९३ । वाक्यस्य टेः प्लुत उदात्तः । ८।२।८२

वाक्यस्य टिरुदात्तः स्यात् प्लुतश्चेति भवेच्च सः ।
अधिकारे भवेत् सूत्रं आपादान्तं स्थितो हि सः ॥ १२

९४ । प्रत्यभिवादेऽशूद्रे । ८।२।८७

वाक्यं प्रत्यभिवादे चेद् अशूद्रो विषयो यदि ।
तस्य टिः स्यात् प्लुतश्चात्र स उदात्तो भवेत् पुनः ॥ १३
अभिवादये शिवोऽहं भवेदिह निदर्शनम् ।
अकारः शिवशब्दे स्याद् उदात्तश्च तथा प्लुतः ॥ १४

स्त्रियां न (व)

वाक्यं प्रत्यभिवादे चेत् स्त्रियामिह प्रवर्त्तते ।
प्लुतो न स्यात् न चोदात्तः स्याद् गार्गी अभिवादये ॥ १५
नाम गोत्रं यदा च स्यात् तदा प्लुतो भवेदिह ।
न तथा चेत् न तथा स्याद् आयुष्मान् एधि मे सखे ॥ १६

भो राजन्यविशाञ्चेति वक्तव्यम् (वा)

भोम् शब्दश्चेत् स्थितस्तत्र प्लुतो न स्यादिति स्थितिः ।
आयुष्मानेधि भोः स्याच्च पुनरिह निदर्शनम् ॥ १७
राजन्यो विषयो यत्र वैश्यश्च विषयो यदा ।
प्लुतस्तदा विभाषा स्यात् यथापरं निदर्शनम् ॥ १८
इन्द्रवर्मन् आयुष्मान् त्वमेधि भवेत् निदर्शनम् ।
आयुष्मान् एधि त्वं सखे हरिहर३ तथा पुनः ॥ १९

९५ । दूराद् हूते च । ८।२।८४

सम्बोधनं यदा दूराद् वाक्यस्य टिर्भवेत् प्लुतः ।
सक्तून् पिब देवदत्त३ भवेदिह निदर्शनम् ॥ २०

९६ । हैहेप्रयोगे हैहयोः । ८।२।८५

सम्बोधने यदा दूरात् भवेत् च है भवेच्च हे ।
प्लुतो भवेत् टिभागस्य उदात्तता भवेत् पुनः ॥ २१
है राम स्यात पुनश्चात्र हे राम स्यात् तथैव च ।
नापि भवेत् पदान्ते वा तथापि च तथा भवेत् ॥ २२

**९७ । गुरोरनृतोऽनन्तस्यापि एकैकस्य प्राचाम् । ८।२।८६**

दूराद् दूते यदा वाक्यम् ऋकारो न भवेद् यदा ।
अनन्तस्यापि गुरोर्वा तदा प्लुतो भवेदिह ॥ २३
"देवदत्त" यदा तत्र प्रथमो "द"स्तथा भवेत् ।
प्लुतो भवेत् द्वितीयो "द" "त्त"श्चापि च भवेत्तथा ॥ २४
गुरोरेव तथा ज्ञेयो ह्रस्वस्य न तथा भवेत् ।
वपरः स्यादकारो यः स न प्लुतो मतः पुनः ॥ २५
ऋकारश्चेत् परे तत्र तदापि न तथा भवेत् ।
कृष्ण इति ऋकार स्यात् न प्लुतः स भवेदिह ॥ २६
"एकैकं" च पदं सूत्रे एकैकं च तथा भवेत् ।
पर्य्यायेन यथा स्याच्च तथा तावत् पदं धृतम् ॥ २७

"प्राचा"मिति पदं तत्र योगोऽपि च विभज्यते ।
सर्व्वत्रैव विभाषा स्यात् प्लुत इति तथा पुनः ॥ २८

**९८ । अप्लुतवद् उपस्थिते । ६।१।१२९**

"अनार्ष" इति शब्दश्चेत् परमिह प्रवर्त्तते ।
प्लुतो भवेदप्लुतवत् यणादिकं भवेत्तदा ॥ २९
"सुश्लोक" स्यात् यदा तत्र "इति" शब्दो यदा पुनः ।
"सुश्लोके"ति पदं तत्र प्रवर्त्तते यणादिके ॥ ३०
"अप्लुत" श्चेत् भवेत् शब्दः प्लुतता च विनश्यते ।
वत्प्रत्ययस्ततस्तावत् प्लुतशब्दात् प्रयोजितः ॥ ३१
न चेत् प्लुतो द्विमात्रः स्यात् अग्नी इति तदा भवेत् ।
अग्नी३ इति त्रिमात्रन्तु भवेदिष्टमिति स्थितिः ॥ ३२

**९९ । इ३ चाक्रवर्मणस्य । ६।१।१३०**

अप्लुतवदिकारः स्यादचि परे प्लुतेऽपि च ।
स्याच्चाक्रवर्मणस्यैतत् पुनर्मतमिति स्थितिः ॥ ३३
"चिनु हि३ इति" तत्र स्यात् "चिनु हीति" तथा भवेत् ।
"चिनु हि३ इदं" तावत् स्यात् चिनु हीदं तथा पुनः ॥ ३४
नित्ये प्राप्ते विभाषा स्यादप्राप्ते च तथा भवेत् ।
उभयत्रविभाषा स्यात् प्राप्ताप्राप्ते विधीयते ॥ ३५

**१०० । ईदूदेद्द्विवचनं प्रगृह्यम् । १।१।११**

द्विवचनं प्रगृह्यं स्यादीदन्तं चेत् पदं भवेत् ।
ऊदन्तं चेत् पदं तत् स्याद् एदन्तं तत् पदं यदि ॥ ३६
"हरी एतौ" भवेदत्र "विष्णू इमौ" भवेत् पुनः ।
"गङ्गे अमू" भवेत्तद्वत् सर्व्वत्रैव प्रगृह्यता ॥ ३७

यदा स्यात् "मणीवोष्ट्रस्य" वकारो वा भवेत्तदा ।
अथवा "वा" भवेत्तत्र समाधानं तथा भवेत् ॥ ३८

**१०१ । अदसो मात् । १।१।१२**

अदसो मात् ईकारश्चेत् ऊकारश्चेद् भवेदिह ।
तौ द्वौ मतौ प्रगृह्यौ च यथा परं निदर्शनम् ॥ ३९
"अमी ईशा" यदा तत्र न सन्धिश्च भवेत्तदा ।
"अमू आसाते" यदा स्यात् न सन्धिः स्यात् तदापि च ॥ ४०
मकारो न भवेत् यत्र तत्र सन्धि र्भवेत् पुनः ।
"अमुकेऽत्र" भवेत् सन्धौ एकारः स्यान्न पुन"र्मः" ॥ ४१
मकारश्च धृतः सूत्रे अस्ति चान्यत् प्रयोजनम् ।
एत इह निवृत्तिः स्यात् सन्धिस्तथा भवेदिह ॥ ४२

**१०२ । शे । १।१।१३**

छन्दसि "शे" सुपः स्थाने यदा खलु प्रयुज्यते ।
"शे" तदा च प्रगृह्यः स्यात् "अस्मे इन्द्रा बृहस्पतिः" ॥ ४३

**१०३ । निपात एकाजनाङ् । १।१।१४**

आङ्वर्जो यो निपातः स्यात् एकाज् यदि भवेच्च सः ।
तदा भवेद् प्रगृह्यः स "इ इन्द्रः" स्यान्निदर्शनम् ॥ ४४
ङकारो न यदा लुप्त आ प्रगृह्यो भवेत्तदा ।
"आ एवं किल तत् स्याच्च" पुनरिह निदर्शनम् ॥ ४५
न प्रगृह्यः पुनः स्यात् ङित् ओष्णमिति तदा भवेत् ।
वाक्ये ङित् स्मरणे ङित् स्यादन्यत्र न भवेच्च ङित् ॥ ४६

**१०४ । ओत् । १।१।१५**

ओदन्तश्चेत् निपातः स्यात् प्रगृह्यः स्यात् तदा पुनः ।
"अहो ईशा" प्रगृह्यः स्यात् न सन्धिश्च भवेदिह ॥ ४३

**१३५ । सम्बुद्धौ शाकल्य इतौ अनार्षे । १।१।१६**

भाषायाम् "इति" चेत् पश्चात् "ओकारश्च" सम्बोधने ।
ओकारो वा प्रगृह्यः स्यात् शाकल्यस्य मतेन ह ॥ ४८
"विष्णो इति" प्रकृत्या स्यात् "विष्णविति" च योगतः ।
"विष्ण इति" वकारस्य लोपे तथा पदं पुनः ॥ ४९
न च प्रकृतिभावः स्यात् छन्दसि चेत् प्रयुज्यते ।
"ब्रह्मबन्धवित्यब्रवीत्" भवेदिह निदर्शनम् ॥ ५०

**१०६ । उञः । १।१।१७**

उञी भवेद् "इतौ" परे तथाभावो विभाषया ।
"ऊँ इति" स्यात् प्रकृत्या चेत् "उविति" स्यात् च योगतः ॥ ५१

**१०७ । ऊँ । १।१।१८**

उञ इतौ भवेद् दीर्घः प्रगृह्यश्चानुनासिकः ।
"ऊँ इति" स्यात् "विति" स्याच्च विभाषा च भवेदिह ॥ ५२

**१०८ । मय उञो वो वा । ८।३।३३**

मयः पश्चाद् यदा स्याद् "उ" पुनरच् चेत् परे स्थितः ।
उकारस्य विभाषा स्यात् तदा च "व" इति स्थितिः ॥ ५३
"किमु उक्तं" प्रकृत्या स्यात् "किम्वुक्तं" स्यात् यदा च वः ।
अनुस्वारो न तावत् स्यात् असिद्धो "व" इति स्थितिः ॥ ५४

**१०९ । ईदूतौ च सप्तम्यर्थे । १।१।१९**

ईदूदन्तं पदं यत्र सप्तम्यर्थे स्थितं भवेत् ।
ईदूदन्तं प्रगृह्यं स्यात् यथा परं निदर्शनम् ॥ ५५
"सोमो गौरी अधि श्रितः" भवेदिह निदर्शनम् ।
भवेच्च "मामकी तनू" इत्यापि च तथैव हि ॥ ५६
"सुपां सुलुक्" भवेत् सूत्रं सप्तम्या लुक् तथा भवेत् ।
अर्थान्तरे समासे न "वाप्यश्वः" स्यान्निदर्शनम् ॥ ५७

**११० । अणोऽप्रगृह्यस्यानुनासिकः । ८।४।५७**

अण् प्रगृह्यो यदा न स्यात् अवसाने परे तदा ।
स्यादनुनासिकस्तत्र विभाषया यथा दधिँ ॥ ५८

अथीह चेत् प्रगृह्यः स्यात् न चानुनासिकस्तदा ।
"अग्नी" तत्र भवेदेवं न चानुनासिकस्ततः ॥ ५९

१६।१।१९७४ (प्रातः) ७ श्लोकाः

इति—

**अच्सन्धौ प्रकृतिभावः**

रचनाकालः अच्सन्धिः— ८।१।१९७४-२० श्लोकाः
९।१।१९७४-५९ श्लोकाः
१३।१।१९७४-६५ श्लोकाः
१४।१।१९७४-४५ श्लोकाः
१५।१।१९७४-२३ श्लोकाः
१६।१।१९७४ (प्रातः)-७ श्लोकाः

२१९ श्लोकाः

अच्सन्धौ प्रकृतिभावः—
१६।१।१९७४-५९ श्लोकाः

आरम्भः—मध्याह्नः (१-३० घटिका)
समाप्तिः—अपराह्नः (४-३० घटिका)

२७८ श्लोकाः

श्रीभुवनमोहनमृणालिनी सुतं
श्रीहरिपददत्तविरचितायां व्याकरणकारिकायाम
अच् सन्धिप्रकरणम्

## हल्सन्धिप्रकरणम्

आरम्भः
६।१।७४
रात्रिः १० घटिका

### १११। स्तोः श्चुना श्चुः। ८।४।४०

शकारेण शकारस्य शकारः स्यादिति स्थितिः।
"हरिः" "शेते" यदा तत्र "हरिश् शेते" तदा भवेत्॥ १
सकारेण चवर्गस्य शकारः स्यात् तथैव च।
यदा "पूर्णः" यदा "चन्द्रः" "पूर्णश्चन्द्र" स्तदा भवेत्॥ २
तवर्गस्य शकारेण चवर्गः स्यात् तथा पुनः।
"तद्" इति चेत् "शरीरं" चेत् "तच्छरीरं" तदा भवेत्॥ ३
तवर्गस्य चवर्गेण चवर्गः स्यादिति स्थितिः।
यदा "शरत्" यदा "चन्द्र." "शरच्चन्द्र" स्तदा भवेत्॥ ४

### ११२। शात्। ८।४।४४

शात् परस्य तवर्गस्य श्चुत्वं न स्यादिति स्थितिः।
विश्नो भवेत् भवेत् प्रश्नः श्चुत्वमिह भवेन्न च॥ ५

### ११३। ष्टुना ष्टुः। ८।४।४१

षकारेण षकारस्य षकारः स्यादिति स्थितिः।
"रामः" यदा यदा "षष्ठः" "रामष्षष्ठ"स्तदा भवेत्॥ ६
सकारेण टवर्गस्य षकारः स्यादिति स्थितिः।
स्याद् "वृक्षष्टीकते" तत्र स्यात् "सक्षष्टीकते" तथा॥ ७
तवर्गस्य षकारेण टवर्गः स्यादिति स्थितिः।
पेष्टा पेष्टुं पदं तत्र टवर्गश्च भवेदिह॥ ८
तवर्गस्य टवर्गेण टवर्गः स्यादिति स्थितिः।
"तद्" यदा स्यात् यदा "टीका" "तट्टीका" स्यात् पदं तदा॥ ९

### ११४। न पदान्ताट्टोरनाम्। ८।४।४२

टवर्गश्चेत् पदान्ते स्यात् परे सः तः यदा स्थितः।
न सः भवेत् षकारस्य तकारस्य भवेन्न टः॥ १०
नाम् इह चेत् परे तत्र तदा भवेदिति स्थितिः।
"षट् सन्त" स्यात् तथा "षट् ते" न "षः" न "टः" भवेदिह॥ ११

न टकारः पदान्ते चेत् तदा भवेदिति स्थितिः
"इट्टे" भवेत् पदं तत्र तकारस्य टकारता ॥ १२
टवर्गो न पदान्ते चेत् तदा भवेदिति स्थितिः ।
"सर्पिष्टमम्" पदं तत्र तकारस्य टकारता ॥ १३
नाम् इह चेत् परे दृष्ट स्तदा भवेदिति स्थितिः ।
"षट्" यदा स्यात् यदा "नाम्" च पदं "षण्णाम्" तदा भवेत् ॥ १४

अनाम्-नवति-नगरीणामिति वाच्यम् (वा)

"नवति" चेत् परे तत्र "नगरी" चेत् परे पुनः ।
"नाम्" इति चेत् परे तत्र टकारः स्यात् तदा खलु ॥ १५
"षण्णा"मिति पदं तत्र "षन्नवतिः" पदं तथा ।
षण्णगर्य्यः पदं तत्र त्रयमेव प्रदर्शितम् ॥ १६

१६।१।७४-१६ श्लोकाः
(रात्रिः १०-३० घटिकाः)
१७ १ ७८ प्रातः

**११५ । तोः षि । ८।४।६३**

ष्टुत्वं न स्यात् तवर्गस्य षकारः स्यात् परे यदा ।
"मन् षष्ठः" स्यात् पदं तत्र णकारो न भवेदिह ॥ १७

(क) झलां जशोऽन्ते

"वाक्" स्यात् यदा पदं पूर्व्वे "ईशः" स्याच्चेत् पदं परे ।
झलां जशि गकारः स्यात् "वागीशः" स्यात् पदं तदा ॥ १८

**११६ । यरोऽनुनासिके अनुनासिको वा । ८।४।६५**

यरिह चेत् पदान्ते स्याद् स्यादनुनासिकः परे ।
स्यादनुनासिकस्तत्र यरस्तदा विभाषया ॥ १९
पदम् "एतन्मुरारिः" स्यात् यदा स्यादनुनासिकः ।
भवेत् "एतद्मुरारि"श्च पुनः पदं विभाषया ॥ २०
स्पर्शे विधिर्भवेदत्र स्थानतश्च प्रयत्नतः ।
न युज्यते विधिः रेफे चतुर्म्मुखस्तथा च न ॥ २१

प्रत्यये भाषायां नित्यम् (वा)

भाषायान्तु भवेन्नित्यं प्रत्यये सानुनासिके ।
"चिन्मयं" स्यात् पदं तत्र "तन्मात्रं" स्यात् पदं तथा ॥ २२

मदोदग्राः ककुबन्तः दकारः स्यात् यवादिके ।
तेन न स्याद् नकारत्वमिति स्थितिर्भवेदिह ॥ २३

१९७ । तोर्लि: । ८।४।६०

तोः स्यात् परे सवर्णश्च लकारश्चेत् परे स्थितः ।
तल्लयः स्यात् पदं तत्र दकारस्य लकारता ॥ २४
विद्वाँल्लिखति तद्वत् स्यात् पुनरिह निदर्शनम् ।
भवेदिह नकारस्य लकारश्चानुनासिकः ॥ २५

११८ । उदः स्था-स्तम्भोः पूर्व्वस्य । ८।४।६१

"स्था" परे चेत् परे "स्तम्भ्" चेत् उत् पूर्व्वं चेद् भवेदिह ।
भवेत् पूर्व्वसवर्णश्च सकारस्य विधिर्भवेत् ॥ २६
उत्थानं स्यात् पदं तत्र उत्तम्भनं तथा भवेत् ।
अघोषः मः महाप्राणः थकारोपि तथैव च ॥ २७
"झरो झरि" भवेत् सूत्रं पक्षे लोपो विधीयते ।
न चेत् लोपः थकारः स्यात् थकारः श्रूयते तदा ॥ २८
"उद" इति यदा युक्तं "खरि" न च प्रयुज्यते ।
पूर्व्वं प्रति परं शास्त्रमसिद्धं स्यादिति स्थितिः ॥ २९

११९ । झयो होऽन्यतरस्याम् । ८।४।६२

झय् इह चेत् भवेत् पूर्व्वे हकारश्चेत् परे भवेत् ।
भवेत् पूर्व्वसवर्णश्च हकारस्य विभाषया ॥ ३०
पूर्व्वे यदा स्थितो "वाक्" च परे "हरिः" स्थितोयदा ।
हकारस्य घकारः स्यात् सदृशातमो युज्यते ॥ ३१
घोषवान् नादवान् "हः" स्यात् महाप्राणश्च संवृतः ।
चतुर्थश्च घकारः स्यात् तद्वान् तद्वानिति स्थितिः ॥ ३२
वाग्घरिः स्यात् पदं तत्र सवर्णश्च विधीयते ।
वाकहरिश्च पदं तत्र भवेदपि विभाषया ॥ ३३

१२० । शश्छोऽटि । ८।४।६३

झय् इह चेत् पदान्ते स्यात् स इह चेत् परे भवेत् ।
शकारः स्यात् छकारश्च यदि स्यादट् परे पुनः ॥ ३४

"तत्" स्याद् यदा पदं तत्र पदं "शिवः" यदा पुनः ।
"तज्शिवः" स्यात् पदं तत्र सूत्रं "स्तोश्चु" प्रयुज्यते ॥ ३५
"तछ्शिवः" स्यात् पदं यत्र सूत्रं परं भवेत्तदा ।
सूत्रं परं समाश्रित्य ततः कार्य्यं भवेत् पुनः ॥ ३६

**१२१ । खरि च । ८।४।५५**

खरि झलां चयः स्युश्च जकारस्य चकारता ।
"तछ्शिवः" स्यात् पदं तत्र 'तच्शिवश्च" तथा पुनः ॥ ३७

छत्वम्-अमीति वाच्यम् (वा)

अमपि चेत् परे तत्र छत्वं भवेत्तथापि च ।
"तच्लोकेन" भवेत्तावत् "तछ्श्लोकेन" तथैव च ॥ ३८
"अम्" इह चेत् परे तत्र तदेव स्यान् न चान्यथा ।
वाक् श्चोतति न तावत् "शः" न तावदम् परे स्थितम् ॥ ३९

**१२२ । मोऽनुस्वारः । ८।३।२३**

हलि परे च मान्तस्य अनुस्वारो भवेदिह ।
"अलोऽन्त्यस्य" "हरिं वन्दे" भवेदिह निदर्शनम् ॥ ४०

**१२३ । नश्चापदान्तस्य झलि । ८।३।२४**

नकारश्च मकारश्च पदान्ते न भवेद् यदि ।
अनुस्वारो भवेत्तस्य झलि परे इति स्थितिः ॥ ४१
पयांसि स्यात् यशांसि स्यात् सर्पींषि स्यान्निदर्शनम् ।
आक्रंस्यते भवेत्तद्वत् भवेद् अधिजिगांसते ॥ ४२
पदान्ते चेत् न तदा स्यात् राजन् भुङ्क्ष्व निदर्शनम् ।
न झल् यत्र न तत्र स्यात् रम्यते स्यात् न झल् न च ॥ ४३

**१२४ । अनुस्वारस्य ययि परसवर्णः । ८।४।५८**

अनुस्वारो भवेद् यश्च तस्य परसवर्णता ।
यय् इह चेत् परे तत्र शङ्कितः स्यान्निदर्शनम् ॥ ४४

कुर्व्वन्तीति पदं यत्र तत्र नास्ति णकारता ।
णकारता कथं न स्यात् कथयामि परं च तत् ॥ ४५
"अट्कुप्वां" स्यात् परे सूत्रं तदिह न प्रयुज्यते ।
"नश्च" पूर्व्वं भवेद् योज्यम् अनुस्वारो भवेत्तदा ॥ ४६

अनुस्वारो यदा जातः सूत्रमिदं प्रयुज्यते ।
नकारश्चानुस्वारस्य पुनरित्थं प्रजायते ॥ ४७
'अनुस्वारः—' परं शास्त्रं तदसिद्धं भवेदिह ।
"र-षाभ्या"श्च भवेत् पूर्व्वं तस्मादिह न युज्यते ॥ ४८
परेण च कृतं कार्य्यं पूर्व्वं तस्मिन् करोति न ।
यत् नत्वं तत् स्थितं नत्वं पुन र्णत्वं भवेन्न च ॥ ४९

**१२५ । वा पदान्तस्य । ८।४।५९**

अनुस्वारः पदान्ते चेत् यय् इह चेत परे पुनः ।
भवेत् परसवर्णो वा यथा परं निदर्शनम् ॥ ५०
त्वङ्करोषि पदं तत्र यदा परसवर्णता ।
त्वं करोषि भवेच्चापि सवर्णता यदा च न ॥ ५१
"सय्यन्ता" "सव्वत्सरश्च" "यल्लोकश्च" तथा भवेत् ।
अनुस्वारस्य पक्षे स्युर्यवलाश्चानुनासिकाः ॥ ५२

**१२६ । मो राजि समः क्वौ । ८।३।२५**

परे राजतौ क्विवन्ते समो मस्य म एव च ।
पदं सम्राट् भवेत्तस्मात् नानुस्वारो भवेदिह ॥ ५३

**१२७ । हे मपरे वा । ८।३।२६**

हकारश्चेत् परे तत्र मकारश्चेत् ततः परे ।
म एव स्यात् तदा मस्य विभाषा च विधि र्भवेत् ॥ ५४
यदा स्यात् 'किम्' पदं पूर्व्वं 'ह्मलयति' पदं परे ।
"किम्ह्मलयति" तत्र स्यात् "किं ह्मलयति" वापि च ॥ ५५

यवलपरे यवला वेति वाच्यम् (वा)

यवलाश्चेत् परे तत्र हकारः पूर्व्वतो यदि ।
आदेशो यवलास्तत्र भवति च विभाषया ॥ ५६
यकारो वा भवेत् कुत्र वकारः कुत्र वा भवेत् ।
लकारो वा भवेत् कुत्र परं च तत् प्रदर्शितम् ॥ ५७

**१२८ । यथासंख्यमनुदेशः समानाम् । १।३।१०**

समाः पूर्व्वं समाः पश्चात् संख्यया चेत् स्थिताः क्वचित् ।
यथाक्रमं तदा ग्राह्याः क्रमे विधिर्भवेदयम् ॥ ५८

अयं पूर्व्वं अयं पश्चात् इत्येवं चेत् प्रवर्त्तते ।
प्रथमे प्रथमो ग्राह्यो द्वितीये तु द्वितीयकः ॥ ५९
तृतीये तृतीयो ग्राह्योः क्रमो भवेत् सुरक्षितः ।
प्रकृते यवलाः पूर्व्वे यवलाश्च परे पुनः ॥ ६०
"यं" प्रति "य" भवेत्तस्मात "वं"प्रति "व" भवेत्तदा ।
"लं" प्रति "ल"भवेत्तद्वत् यथाक्रमं भवेदिह ॥ ६१
एषः क्रम इह ग्राह्यो यदा सन्धिः प्रवर्त्तते ।
'कियॅह्यः' भवेत् पदं तत्र "यं प्रति यो भवेदिह ॥ ६२
किव् ह्वलयति तावत् स्यात् वं प्रति वः प्रवर्त्तते ।
किलॅह्लादयति तद्वत् स्यात् लं प्रति लो भवेदिह । ६३

**१२९ । नपरे नः । ८।३।२७**

हकारश्चेत् परे तत्र नकारश्चेत् ततः परम् ।
मकारस्य तु पूर्व्वस्य तदा "न" स्याद् विभाषया ॥ ६४
"किन् ह्नुते" स्यात् पदं दत्र "किं ह्नुते" स्यात् तथा पुनः ।
नकारस्तु भवेत् पूर्व्वे अनुस्वारः परे भवेत् ॥ ६५

**१३० । ङ्णोः कुक्टुक् शरि । ८।३।२८**

ङकारस्य भवेत् कुक् च णकारस्य भवेच्च टुक् ।
शरिह चेत् परे तत्र आदेशः स्याद् विभाषया ॥ ६६
प्राङ्क्षष्ठः स्यात् पदं तत्र कुगागमो भवेद् यदा ।
सुगण्ट्षष्ठो भवेत्तद्वत टुगागमस्तदा भवेत् ॥ ५७

**चयो द्वितीयाः शरि पौष्करसादेः (वा)**

प्रथमस्य द्वितीयः स्यात् शरिह चेत् परे स्थितः ।
स्यादेतद् पौष्करसादेः निदर्शनं यथा परम् ॥ ५८
"प्राङ्ख्षष्ठः" स्यात् पदं तत्र द्वितीयः खः प्रवर्त्तते ।
सुगण्ठ्षष्ठः पदं तद्वत् द्वितीयः "ठः" भवेद् यदा ॥ ६९
पदत्रयं तथा प्राप्तं द्वयं तावत् प्रदर्शितम् ।
प्राङ्षष्ठः स्यात् तृतीयश्च "सुगण्षष्ठ"स्तथा भवेत ॥ ७०

**१३१ । डः सि धुट् । ८।३।२९**

पदान्ते चेद् डकारः स्यात् सकारश्चेत् परे भवेत् ।
सकारस्य तदा धुट् स्यात् आगमश्च विभाषया ॥ ७१

"षड् सप्त" चेत् तदा धुट् स्यात् षड्धसप्त तदा भवेत्।
षड्त्सप्त स्यात् "खरि" पश्चात् षट्त्थ्सप्त च ततः परम् ॥ ७२

**१३२। नश्च। ८।३।३०**

पदान्ते चेत् नकारः स्यात् सकारश्चेत् भवेत् परे।
सस्य धुट् स्याद् विभाषा च "स न् त् सः" "सन्सः" तदा भवेत् ॥ ७३

**१३३। शि तुक्। ८।३।३१**

पदान्ते चेन् नकारः स्यात् शकारश्चेत् भवेत् परे।
नकारस्य तदा तुक् स्यात् स आदेशो विभाषया ॥ ७४
"शश्छोऽटि च स्थितं सूत्रं छत्वं भवेद् विकल्पतः।
"झरो झरि" चकारस्य पक्षे लोपो भवेदपि ॥ ७५
"सञ्छंभुः" स्यात् पदं तत्र "सञ्च्छंभुः स्यात् पदं तथा॥
"सञ्च्शंभुः" स्यात् पदं तद्वत् सञ्शंभुः स्यात् तथा परम् ॥ ७६

"अछौ अच्छा अचशा अशाविति चतुष्टयम्।
रूपाणामिह तुक् छत्व-चलोपानां विकल्पनात् ॥" ७७

**१३४। ङमो ह्रस्वादचि ङमुन् नित्य। ८।३।३२**

ह्रस्वात् परं यदा ङम् स्यात् ङमन्तं च पदं यदा।
तत् परमच् स्थितः स्याच्चेत् तस्य नित्यं भवेत् ङमुट् ॥
प्रत्यङ्ङात्मा सुगण्णीशः सन्नच्युतो निदर्शनम्।
ङकारश्च णकारश्च नकारश्च यथाक्रमम् ॥ ७८

**१३५। समः सुटि। ८।३।५**

सुटि परे समो रुः स्यात् संहिता विषयो यदि।
"अलोऽन्त्यस्य" स्थितं सूत्रं मकारस्य विधिर्भवेत् ॥ ७९

**१३६। अत्रानुनासिकः पूर्व्वस्य तु वा। ८।३।२**

यस्य स्थाने रुरादिष्टस्तस्य पूर्व्वं भवेच्च यः।
तस्यानुनासिको वा स्यादिति विधिर्भवेदिह ॥ ८०

**१३७। अनुनासिकात् परोऽनुस्वारः। ८।३।४**

अनुनासिकता चेत् न रु, परे चेत् भवेदिह।
रोः पूर्व्वं यः स्थितस्तस्माद् अनुस्वारो भवेत् परे ॥ ८१

"खरवसानयोः" सूत्रं यदा पुनः प्रवर्त्तते ।
रकारस्य विसर्गः स्यादिति स्थितिर्भवेदिह ॥ ८२

१७।१।७४-९६ श्लोकाः
१८।१।७४

**१३८ । विसर्ज्जनीयस्य सः । ८।३।३४**

विसर्गश्चेत् स्थितः पूर्व्वे खरिह चेत् स्थितः परे ।
भवेद् विसर्ज्जनीयस्य तदा च "स" इति स्थितिः ॥ ८३
"वा शरि" च स्थितं सूत्रं विसर्गः पाक्षिको भवेत् ।
वार्त्तिकं स्यात् "संपुंकानां" तेन नित्यं भवेच्च "सः" ॥ ८४

यदा "सम्" स्यात् यदा "कर्त्ता" संहिता विषयो यदा ।
अष्टोत्तरं शतं तावत् रूपाणि स्युरिति स्थितिः ॥ ८५

यदा "सम्" स्यात् यदा "कर्त्ता" "समः सुटि" प्रयुज्यते ।
मकारस्य भवेद् "रु"श्च स/र्/स्/ कर्त्ता च तदा भवेत ॥ ८६
"अत्रानुनासिकः" सूत्रं पुनर्यदा प्रयुज्यते ।
अः स्यात् सानुनासिकश्च सँ/र्/स्/ **कर्त्ता** च तदा भवेत ॥ ८७
"अनुनासिकः" सूत्रं चेत् इतरथा प्रयुज्यते ।
अनुस्वारो भवेत्तत्र **सं/र्/स् कर्त्ता** च तदा भवेत् ॥ ८८
"खर् –" सूत्रं तु तदा तत्र युज्यते सानुनासिके ।
रकारस्य विसर्गः स्यात् **सँ/ः/स्/ कर्त्ता** च तदा भवेत् ॥ ८९
"खर—" सूत्रं चेत् पुनस्तत्र सानुस्वारे प्रयुज्यते ।
रकारस्य विसर्गः स्यात् सं/ः/स्/ **कर्त्ता** च तदा भवेत् ॥ ९०
ततो "विसर्ज्जनीयस्य" युज्यते सानुनासिके ।
सकारः स्यात् तदा तत्र **सँ/स्/स्/ कर्त्ता** च तदा भवेत् ॥ ९१
पुन"र्विसर्ज्जनीयस्य" सानुस्वारे प्रयुज्यते ।
सकारः स्यात् तदा तत्र **सं/स्/स्/ कर्त्ता** च तदा भवेत् ॥ ९२

एकमेव भवेद् रूपमेवञ्च सानुनासिके ।
द्विसकारं भवेत्तत् च **सँ/स्/स्/कर्त्ता** च पदं भवेत् । ९३

एकमेव भवेद् रूपं सानुस्वारे तथैव च ।
द्विसकारं भवेत्तत्र **सं/स्/स्/ कर्त्ता** च पदं भवेत् ॥ ९४

सम इह मकारो यो लुप्यते स विभाषया ।
इत्यपि च मतं दृष्टमिति भाष्ये पतञ्जलिः ॥ ९५
एकस्य चेद् भवेल्लोप एक एव हि शिष्यते ।
एकसकारकं रूपं प्रातिस्विकं तदा भवेत् ॥ ९६
स एकः सानुनासिके **सँ/स्/स्/कर्त्ता** च भवेत्तथा ।
सानुस्वारे स एकः स्यात् **सं/स्/स्/ कर्त्ता** च तथा पुनः ॥ ९७

एतावता भवेत् यत् यत् तत्तत् पुनरिहोच्यते ।
पक्षे सानुनासिके च रूपद्वयं भवेदिह ॥ ९८
एकसं स्यात् पदं तत्र **सँ/स्/स्/ कर्त्ता** च तथा भवेत् ।
द्विसं भवेत् पदं तत्र **सँ/स्/स्/ कर्त्ता** च तथा पुनः ॥ ९९
सानुस्वारः पुनः पक्ष इह यश्च प्रदर्शितः ।
तस्मिन्नपि पुनः पक्षे रूपद्वयं हि लभ्यते ॥ १००
एकसं स्यात् पदं तत्र **सं/स्/स् कर्त्ता** च तथा भवेत् ।
द्विसं भवेत् पदं तत्र **सँ/स्/स्/ कर्त्ता** च तथा पुनः ॥ १०१

पक्षे सानुनासिके च द्विसं पदं स्थितं खलु ।
**सँ/स्/स्/ कर्त्ता** च पदं तत् स्यात् इति पूर्व्वं प्रदर्शितम् ॥ १०२
"अनचि" चेद भवेद् युक्तं त्रिसं पदं तदा भवेत् ।
**सँ/स्/स्/स्/ कर्त्ता** च पदं तत् स्यात् त्रिसकारं पदं हि तत् ॥ १०३
सानुस्वारे पुनः पक्षे द्विसं पदं स्थितं खलु ।
**सं/स्/स्/ कर्त्ता** च पदं तत् स्यात् इति पूर्व्वं प्रदर्शितम् ॥ १०४
"अनचि" चेद् भवेद् युक्तं त्रिसं पदं तदा भवेत् ।
**सं/स्/स्/स्/** कर्त्ता च पदं तत् स्यात् त्रिसकारं पदं हि तत् ॥ १०५
इयता यद् भवेल्लब्धं तदिह गण्यते पुनः ।
सर्व्वेषां गणनां कृत्वा दर्शयामि तवाग्रतः ॥ १०६
यः सानुनासिकः पक्षः तत्र त्रयं भवेदिह ।
सानुस्वारः पुनः पक्षस्तत्रापि च त्रयं भवेत् ॥ १०७

एकसं च भवेद् रूपं द्विसं रूपं भवेत्तथा।
त्रिसं रूपं भवेत्तद्वत् त्रयश्च सानुनासिके॥ १०८

एकसं च भवेद् रूपं द्विसं रूपं भवेत्तथा।
त्रिसं रूपं भवेत्तद्वत् सानुस्वारे पुनस्त्रयम्॥ १०९

एवं यदा स्थितं तत्र पुनः पदं प्रवर्त्तते।
यथा यथा पदं सिध्येत् कथयामि तथा तथा॥ ११०

यः सानुनासिकः पक्षः त्रयं तत्र च विद्यते।
आदाय तत् त्रिकं चात्र पुनः पदं च लभ्यते॥ १११
वार्त्तिकं च स्थितं तावत् "शरः खयः" भवेच्च तत्।
क-द्वित्वं च भवेत्तेन पदत्रयं पुन भवेत्॥ ११२
आदौ त्रयं त्रयं पश्चात् पदषट्कं तथा पुनः।
पक्षे सानुनासिके च साकल्येन भवन्ति षट्॥ ११३

सानुस्वारः पुनः पक्षः तत्र त्रयं स्थितं खलु।
आदाय तत् त्रिक चात्र पुनः पदं च लभ्यते॥ ११४
वार्त्तिकं च स्थितं तावत् "शरः खयः" भवेच्च तत्।
क-द्वित्वं च भवेत्तेन पदत्रयं तथा भवेत्॥ ११५
आदौ त्रयं त्रयं पश्चात् पदषट्कं तथा भवेत्।
सानुस्वारे पुनः पक्षे साकल्येन भवन्ति षट्॥ ११६
सानुस्वारे पुनः पक्षे सर्व्वादौ दर्शितं त्रयम्।
अनुस्वारः स्थितस्तत्र गणनाय च गृह्यते॥ ११७
"अनचि" च भवेद् योज्यमनुस्वारो भवेच्च शर्।
अनुस्वारे भवेद् द्वित्व "मनचि" चेत् प्रयुज्यते॥ ११८
आदौ त्रयं त्रयं पश्चात् पदषट्कं तथा भवेत्।
सानुस्वारे पुनः पक्षे साकल्येन भवन्ति षट्॥ ११९

आदौ षट् च परे षट् च ततः परे पुनश्च षट्।
अष्टादश तथा भेदाः साकल्येन धृता यदा॥ १२०
षट् सानुनासिके भेदाः सानुस्वारे च षट् च षट्।
अष्टादश मिलित्वा द्वे इत्यपि दर्शितं भवेत्॥ १२१

पूर्व्वे चैकतकाराः स्युरष्टादश पुनश्च ते ।
"अचः" इति स्थितं सूत्रं पुनश्च तत् प्रयुज्यते ॥ १२२
तकारस्य भवेद् द्वित्वं द्वितकारं पदं भवेत् ।
अष्टादश पुनर्भेदाः द्वितकाराः भवन्ति च ॥ १२३
अष्टादश स्थिताः पूर्व्वे अष्टादश स्थिताः परे ।
मिलित्वा षट् पुनस्त्रिंशत् साकल्येन भवन्ति च ॥ १२४

वार्त्तिकं च "यणो मयः" पुनरिह स्थितं खलु ।
अष्टादश स्थिताश्च ते तेषु तत्र प्रयुज्यते ॥ १२५
रकारस्य परे तः स्यात् तस्य द्वित्वं भवेदिह ।
पूर्व्वं द्वित्वं स्थितं तस्य तदपि च धृतं भवेत् ॥ १२६
त्रितकारं पदं तावत् प्रत्येकन्तु भवेदिह ।
त्रितकारो भवन्तीह अष्टादश तथा खलु ॥ १२७
षट्त्रिंशच्च स्थिताः पूर्व्वे अष्टादश स्थिताः परे ।
मिलित्वा चतुःपञ्चाशत् साकल्येन भवन्ति च ॥ १२८

इह चतुःपञ्चाशद् ये शब्दाः खलु व्यवस्थिताः ।
अन्ते तेषां च सर्व्वेषां "ता" दृश्यते इति स्थितिः ॥ १२९
आकारः स्याद् यतश्चान्ते तस्माद् "अणः" प्रयुज्यते ।
अनुनासिकता तेन प्रत्येकन्तु प्रजायते ॥ १३०
"अन्" सानुनासिको भवेत् चतुःपञ्चाशतां तथा ।
लब्धा चतुः पञ्चाशच्च अनयेव दिशा पुनः ॥ १३१

आद्य चतुःपञ्चाशच्च स्थितास्तावदिति स्थितिः ।
परे चतुःपञ्चाशच्च पुनरपि स्थिताः खलु ॥ १३२
अष्टोत्तरं शतं तावत् मिलनेन भवन्ति च ।
विस्तरस्तु मया दत्तो दत्ते नेह च सर्व्वथा ॥ १३३

१३९ । पुमः खय्यम् परे । ८।३।६

परे खय् चेत् ततश्चेद् अम् पूर्व्वं पुमस् यदा स्थितः ।
पुंसो भवेत् मकारो यस्तस्य रुः स्यादिति स्थितिः ॥ १३४

×क×पयोर्वा भवेत् प्राप्तिः यः प्राप्तो वा भवेदपि ।
"सं पुंकानां" प्रवृत्तं स्यात् ततश्च "स" भवेदिह ॥ १३५
"पुंस्कोकिलो" भवेत्तस्मात् "पुंकोकिल"स्तथा पुनः ।
"पुंपुत्रः" स्यात् पदं तद्वत् पुंस्पुत्रो वा तथा भवेत् ॥ १३६
खयः परो न चेद् अम् स्यात् तदा न स्यादिति स्थितिः ।
पुंक्षीरं स्याद् न भवेद् रुः न तावदम् परे भवेत् ॥ १३७
न खय् यदा परे तत्र तदा न स्यादिति स्थितिः ।
पुंदासं स्यात् न भवेद् रुर्न तावत् खय् परे भवेत् ॥ १३८

ख्याञादेशो न (वा)

ख्याञादेशो यदा तत्र न तदा रुर्भवेदिह ।
पुंख्यानं स्यात् न भवेद् रु ख्याञ् परे च प्रवर्त्तते ॥ १३९

१४० । नश्छव्यप्रशान् । ८।३।७

परे छव् चेद् ततश्चेद् अम् नान्तस्येह भवेच्च रुः ।
प्रशान् यदि भवेत् शब्दो न तदा स्यादिति स्थितिः ॥ १४०
"शार्ङ्गिन्" यदा यदा "छिन्धि" संहिता विषयो यदि ।
नकारस्य भवेद् रुश्च विसर्गः स्यात् पुनश्च रोः ॥ १४१
विसर्गस्य सकारः स्यात् सकारस्य पुनश्च शः ।
"शार्ङ्गिं श्छिन्धि" भवेदत्र "शार्ङ्गिश् छिन्धि" तथा भवेत् ॥ १४२
पदं न स्याद् यदा तत्र तदा न रुर्भवेदिह ।
हन्तीति च पदं न स्यात् तस्माद् रुर्न भवेत् पुनः ॥ १४३
अमिह न परे यत्र तदा न रुरिति स्थितिः ।
सन्त्सरुः स्यात् न तावद् रुरमिह न परे भवेत् ॥ १४४

१४१ । नॄन् पे । ८।३।१०

पकारश्चेत् परे तत्र नृनो रुः स्याद् विभाषया ।
"नॄँर् पाहि" स्यात् तदा तत्र "नृंर् पाहि" स्यात् तथैव च ॥ १४५
"खरवसानयोः" सूत्रं परे पुनः प्रयुज्यते ।
रकारस्य विसर्गः स्यात् पदद्वयं भवेद् यथा ॥ १४६
नॄँः पाहि स्यात् पदं तत्र नृंः पाहि च पदं भवेद् ।
एवं यदा स्थितं तत्र सूत्रं परं प्रवर्त्तते ॥ १४७

१४२। कुप्वोः ≍क≍पौ च। ८।३।३७

इह विसर्ज्जनीयस्य जिह्वामूलीयता भवेत्।
कवर्गश्चेत् परे तावत् पुनरिह प्रवर्त्तते॥ १४८
इह विसर्ज्जनीयस्य उपध्मानीयत भवेत्।
पवर्गश्चेत् परे तावत् पुनरिह प्रवर्त्तते॥ १४९
विभाषया विसर्गोऽपि यथापूर्व्वं स्थितो भवेत्।
"नृ≍पाहि" स्यात् "नॄं≍पाहि" स्यादुपध्मानीयता तदा॥ १५०
"नृः पाहि" स्यात् "नॄंःपाहि" स्यात् विसर्ग एव चेत् स्थितः।
"नॄन् पाहि" स्यात् पदं तत्र विभाषया यदा न रुः॥ १५१
सूत्रं 'विसर्ज्जनीयस्य" वाधितं स्यादनेन च।
"शर्परे" न वाधितं स्यात् "वासः क्षौमम्" तथा भवेत्। १५२

१४३। कानाम्रेडिते। ८।३।१२

कान्शब्दस्य नकारस्य आम्रेडिते परे च रुः।
"कान् कान्" यदा स्थितं तत्र "कार् कान्" तदा भवेदिह॥ १५३
अनुस्वारो भवेत् पश्चात् तथा स्यादनुनासिकः।
"कांर्कान्" भवेत् भवेत् "काँर्कान्" स स यदा भवेदिह॥ १५४
"खर्" इति च प्रयुक्तं स्यात् "कांःकान्" "काःकान्" तदा भवेत्।
सूत्रं "विसर्ज्जनीयस्य" प्रसरं लभते तदा॥ १५५
"कुप्वोः" इति स्थितं सूत्रं तेन तद् वाधितं भवेत्।
"कुप्वो"रिति पुनश्चास्य "संपुंकानां" च वाधकम्॥ १५६
"कांस्कान्" भवेत् पदं तत्र "काँस्कान्" भवेत् तथैव च।
सूत्रं परं भवेदत्र तेन "सः" वा विधीयते॥ १५७

१४४। कस्कादिषु च। ८।३।४८

≍क≍पयोरपवादे च "कस्कादिषु" भवेदिह।
इणः षः स्याद् विसर्गे च अन्ये वर्णे पुनश्च सः॥ १५८
"काँस्कान्" "कांस्कान्" भवेदत्र "कौतस्कुत"स्तथा भवेत्।
भवेद् "धनुष्कपालञ्च" स्यादाकृतिगणः खलु॥ १५९

१४५। संहितायाम्। ६।१।७२

इतः परं यदत्र स्यात् सर्व्वत्र संहिता भवेत्।
अधिकारे स्थितं सूत्रमधिकारो विधीयते॥ १६०

१४६ । छे च । ६।१।७३

संहिता विषयो यत्र ह्रस्वस्य तुक् परे च छे।
"स्वस्य छाया" यदा वाक्यं "स्व छाया" च तदा भवेत् ॥ १६१
ततः परं भवेत् सन्धिः संहिता विषयो यदि।
"स्वच्छाया" च पदं सन्धौ भवेदिह यथा परम् । १६२

अनेनैव यदा तुक् स्यात् "स्वत् छाया" च तदा भवेत्।
सूत्रद्वयं ततः पश्चात् भवेदिह प्रयोजनम् ॥ १६३
तकारस्य दकारः स्यात् "झलां जश्" चेत् प्रवर्त्तते।
तकारस्य चकारः स्यात् सूत्रं "स्तो" श्चेद् भवेदिह ॥ १६४
सूत्रं "स्तोश्चु" परं शास्त्रं तदसिद्धं भवेदिह।
"झलां जश्" च भवेत् पूर्व्वं तदेवेह प्रयुज्यते ॥ १६५
तकारस्य दकारः स्यात् "स्वद् छाया" च तदा भवेत्।
सूत्रद्वयं ततः पश्चाद् प्रसरं लभते पुनः ॥ १६६
दकारस्य तकारः स्यात् "खरि" यदि प्रयुज्यते।
दकारस्य जकारः स्यात् सूत्रं "स्तो"श्चेत् प्रवर्त्तते ॥ १६७
"खरिह" च परं शास्त्रं तदसिद्धं भवेदिह।
सूत्रं "स्तोश्चु" भवेत् पूर्व्वं तदेवेह प्रयुज्यते ॥ १६८
"स्तोः" सूत्रं च यदा युक्तं दकारस्य भवेद्धि जः।
"स्वज् छाया" स्यात् तदा तत्र जकारश्च भवेदिह ॥ १६९
"स्वज् छाया" च यदा तत्र पुनः सन्धिः प्रवर्त्तते।
"खरी"ति च प्रयुक्तं स्यात् स्वचछाया स्यात् तदा पुनः ॥ १७०
इष्टं पदं तदेव स्यात् तदेवेह च लभ्यते।
"शिवश्छाया" पदं तद्वत् तद्वदन्यत् पदं भवेत् ॥ १७१

१४७ । आङ्माङोश्च । ६।१।७४

विकल्पस्यापवादेन सूत्रमिदं प्रवर्त्तते।
आङ्माङोस्तुक् छे परे स्यात् नित्यमेव तथा भवेत् ॥ १७२
"आच्छादयति" तत्र स्यात् पुनस्तावन्निदर्शनम्।
"माच्छिदत्" स्यात् तथैवात्र निदर्शनं परं पुनः ॥ १७२

१४८। दीर्घात्। ६।१।७५

दीर्घात् तुक् स्यात् परे छे चेत् चेच्छिद्यते निदर्शनम्।
छस्य न तुक् भवेदत्र "सेने"ति ज्ञापकं भवेत् ॥ १७४

१४९। पदान्ताद् वा। ६।१।७६

पदान्ताद्द वा पुनर्दीर्घात् छे परे तुग् विभाषया।
"लक्ष्मीच्छाया" पदं तत्र "लक्ष्मीछाया" तथा भवेत् ॥ १७५

१८।१।७४-६७ श्लोकाः

इति—

हल्सन्धि प्रकरणम्।

रचनाकालः—१६।१।१९७४-१६ श्लोकाः

१७।१।१९७४-६६ श्लोकाः

१८।१।१९७४-९३ श्लोकाः

१७५ श्लोकाः

इति—

श्रीभुवनमोहन-मृणालिनी सुत—

श्रीहरिपददत्तविरचितायाम् व्याकरणकारिकायाम्

हल्सन्धिप्रकरणम्।

———

## विसर्गसन्धिप्रकरणम्

आरम्भः
११।७४ प्रातः

विसर्ज्जनीयस्य सः। ८।३।३४
विसर्गस्य सकारः स्यात् खर् इह चेत् परे भवेत्।
"विष्णुः त्राता" यदा तत्र "विष्णुस्त्राता" तदा भवेत्॥ १

**१५०। शर्परे विसर्ज्जनीयः। ८।३।३५**
खरः परे यदा शर् स्यात् यदा खरि परे पुनः।
विसर्गस्य विसर्गः स्यात् न स्यादन्यत् शशःक्षुरम्॥ २
पदं "विसर्ज्जनीयश्च" मुनिनेह प्रयोजितम्।
इह षत्वं तथा न स्यात् जिह्वामूलीयता न च॥ ३

**१५१। वा शरि। ८।३।३६**
विसर्गस्य विसर्गो वा शर् इह चेत् परे स्थितः।
"हरिः शेते" यदा तत्र "हरिः शेते" तदा पुनः॥ ४
विभाषया "हरिश्शेते" पदमिह भवेदपि।
आदौ "विसर्ज्जनीयश्च" पश्चात् "स्तो"श्च प्रवर्त्तते॥ ५
खर परे शरि वा विसर्गलोपो वक्तव्यः (वा)
शर् इह चेत् परे तत्र ततः परम् पुनश्च खर्।
विसर्गस्य तु पूर्व्वस्य भवेत् लोपो विभाषया॥ ६
"रामः स्थाता" यदा तत्र "राम स्थाता" भवेत्तदा।
भवेल्लोपो विसर्गस्य लोपपक्षे पदं भवेत्॥ ७
न यदा तु भवेल्लोपः यथा स्थितं तथा पुनः।
"रामः स्थाता" विसर्गः स्यात् यथा स्थितं तथा स्थितम्॥ ८

**१५२। सोऽपदादौ। ८।३।३८**
कवर्गश्चेत् परे तत्र पवर्गश्चेत् परे पुनः।
स स न चेत् पदादौ स्यात् विसर्गस्य सकारता॥ ९
पाशकल्पौ ककाम्यौ च यदा पुनः स्थितौ खलु।
तदैव च विधिर्योज्यो न पदादौ भवेतथा॥ १०

अमव्ययस्येति वक्तव्यम् (वा)
अव्ययं चेद् भवेदत्र न तदा स्यादिति स्थितिः ।
प्रातः कल्पं पुनः कल्पप् भवेदिह निदर्शनम् ॥ ११

रोरेव काम्ये नान्यस्येति नियमार्थम् (वा)
रुरित्यस्माद् विसर्गश्चेन् तदा स स्यादिति स्थितिः ।
न चान्यस्य विसर्गस्य सकारः सम्मतो भवेत् ॥ १२
गीः काम्यति न तावत् स्यात् विसर्गो न भवेन्न रोः ।
धूः कामाति न तावत् स्यात् विसर्गो न भवेन्न रोः ॥ १३

उपध्मानीयस्य कवर्गपरे सकारः आदेशो
भवतीति वाच्यम् (वा)
सः स्यादुपध्मानीयस्य कवर्गश्चेत् परे स्थितः ।
अभ्युद्गः स्यात् समुद्गः स्यात् पुनरिह निदर्शनम् ॥ १४

१५३ । इनः षः । ८।३।३९
इनः परो विसर्गश्चेत् तस्य षः स्यादिति स्थितिः ।
कवर्गो न पवर्गो न पदादौ चेद् भवेदिह ॥ १५
सर्पिष्पाशं भवेदत्र सर्पिष्कल्पं तथा भवेत् ।
सर्पिष्कं स्यान् यजुष्कं स्यान् तथैव च पदं पुनः ॥ १६

१५४ । नमस्-पुरसोः काम्ये । ८।३।४०
नमस् पुरस् गतिर्यत्र कुः पुः पुनः परे स्थितः ।
विसर्गस्य तदा सः स्यात् नमस्कर्त्ता निदर्शनम् ॥ १७
न गतिश्चेत् न तावत् सः यथा परं निदर्शनम् ।
पूःकरोति न तावत् सः न च गतिः प्रतीयते ॥ १८

१५५ । इदुदुपधस्य चाप्रत्ययस्य । ८।३।४१
इः पूर्व्वे चेत् उः पूर्व्वे चेत् प्रत्ययो न यदा पुनः ।
विसर्गस्य तदा षः स्यात् कुः पुः यदि परे स्थितः ॥ १९
निष्कृतं स्यान् पदं तत्र दुष्कृतं स्यात् पदं तथा ।
आविष्कृतं पदं तद्वत् चतुष्पदं तथा भवेत् ॥ २०

पुंमुहुषोः प्रतिषेधो वक्तव्यः (वा)

पुंकामा च मुहुःकामा न तावत् षः भवेदिह ।

वृद्धिभूतानां षत्वं वक्तव्यम् (वा)

वृद्धावपि षकारः स्यात् नैष्कुल्यं स्यन्निदर्शनम् ॥ २१

मुताग तादौ च (वा)

मुतोऽपि च यदा तत्र तदापि षो भवेदिह ।

तादौ चापि षकारः स्यात् निष्कुलं च वहीष्टरः ॥ २२

१५६ । तिरसोऽन्यतरस्याम् । ८।३।४२

कवर्गश्चेत् परे तत्र पवर्गश्चेत् परे पुनः ।

तिरसो वा सकारस्य विसर्गः स्यादिति स्थितिः ॥ २३

तिरस्कर्त्ता पदं तत्र तिरःकर्त्ता तथा भवेत् ।

तिरस्कर्तृं पदं तद्वत् तिरःकर्तुं तथा पुनः ॥ २४

१५७ । द्वि-त्रि-चतुरिति कृत्वोऽर्थे । ८।३।४३

द्वि त्रि चतुर् यदा शब्दः कुः पुः यदा परे पुनः ।

विसर्गस्य विभाषा षः कृत्वोऽर्थश्चेत् प्रतीयते ॥ २५

द्विः करोति भवेदत्र द्विष्करोति तथा भवेत् ।

द्विः पचति पदं तद्वत् द्विष्पचति तथा पुनः ॥ २६

१५८ । इसुषोः सामर्थ्ये । ८।३।४४

इसुषश्च विसर्गस्य ष इह स्याद् विभाषया ।

सामर्थ्यं चेत् प्रतीतं स्यात् कुः पुः यदि परे भवेत् ॥ २७

भवेत् सर्पिष्करोतीह षकारे च निदर्शनम् ।

भवेत् सर्पिष्करोतीह षकारश्चेत् न युज्यते ॥ ३८

१५९ । नित्यं समासे अनुत्तरपदस्थस्य । ८।३।४५

इसन्तं स्याद् उसन्तं स्यात् न परं स्यात् समासतः ।

परे कौ चेत् परे पौ चेत् विसर्गः "स" भवेत् सदा ॥ २९

स्यात् सर्पिष्कुण्डिका चात्र तथा षत्वे निदर्शनम् ।

धनुष्कुलं पदं तद्वत् सर्पिष्पानं पदं यथा ॥ ३०

**१६० । अतः कृ-कमि-कंस-कुम्भ-पात्र-कुश-कर्णीषु अनव्ययस्य । ८।३।४६**

अनव्ययम् असन्तं चेत् पदं परं न चेत् पुनः ।
करोत्यादौ परे सः स्यात् कंसादौ च परे तथा ॥ ३१
अयस्कारः करोतौ स्यात् पयस्कामश्च काम्यतौ ।
पयस्कंसः पदं तत्र कंसशब्दो यदा परे ॥ ३२

**१६१ । अधःशिरसी पदे । ८।३।४७**

पदं परं यदा न स्यात् समासश्चेत् भवेत् पुनः ।
अधस् शिरस् पदं यत्र विसर्गः "सः" तदा भवेत् ॥ ३३
अधस्पदं भवेत्तत्र शिरस्पदं तथा भवेत् ।
अधस्पदी पदं स्यात्र शिरस्पदी तथा पुनः ॥ ३४

**१६१ (क) । कस्कादिषु च । ८।३।४७**

ककारश्च पकारश्च कष्कादौ "षो" भवेदिह ।
तस्मात् पूर्व्वं विसर्गस्य "स" वा "ष" वा भवेत् खलु ॥ ३५
"कष्कः" भवेत् पदमत्र कौतष्कुतस्तथा भवेत् ।
स्यात् सर्पिष्कुण्डिका चापि बर्हिष्पलं तथा पुनः ॥ ३६
१।१।१९७४-३६ श्लोकाः

इति —
विसर्गसन्धि प्रकरणम् ।

रचनाकालः— १।१।१९७४-३६ श्लोकाः

श्रीभुवनमोहन-मृणालिनी-सुत
श्रीहरिपददत्तविरचितायां व्याकरणकारिकायां
विसर्गसन्धि प्रकरणम् ।

---

## स्वादिसन्धिप्रकरणम्

आरम्भः

१६१।१।७८

"सु औ जश्" च भवेत् सूत्रं "सु"प्रत्ययः प्रयुज्यते ।
"शिवस् अर्च्च्यः" तदा जातः सूत्रं परं प्रवर्त्तते ॥ १

१६२ । ससजुषो रुः । ८।२।६६

सकारश्चेत् पदान्ते स्यात् तस्य रुः स्यादिति स्थितिः ।
सजुष् शब्दः पदान्ते चेत् तस्य सस्य तथा च रुः ॥ २

१६३ । अतो रो लुतादप्लुते । ६।१।११३

अदप्लुतो यदा पूर्व्वे अदप्लुतो यदा परे ।
"उ" भवेद् रोस्तदा तत्र भो भगोन प्रवर्त्तते ॥ ३
यतो हत्वमनूद्येह उत्वं खलु विधीयते ।
उत्वं प्रति न हत्वं स्यादसिद्धं च ततः पुनः ॥ ४
"उ" भवेद् रोः "शिव उ स्यात्" "अर्च्च्य." शब्दः परे पुनः ।
एवं यदा स्थितं तत्र सूत्रं परं प्रवर्त्तते ॥ ५

१६४ । प्रथमयोः पूर्व्वसवर्णः । ६।३।१०२

सु-औ-जशाम् अम-औट्-शसाम् अजिह चेत् परं स्थितः ।
पूर्व्वं सवर्णदीर्घः स्यादकस्तात्तदिति स्थितिः ॥ ६
एतेन "शिव आ अर्च्च्य" इति रूपं प्रपद्यते ।
एवं न स्यात् पुनस्तत्र प्रतिषेधः परे यथा ॥ ७

१६५ । नादिचि । ६।१।१०४

पूर्व्वसवर्णदीर्घो न अवर्णाद् इच परे यदा ।
अवर्णादिच् परे चात्र दीर्घता न तथा भवेत् ॥ ८
"आद्गुणश्च" स्थितं सूत्रं तदेवेह प्रयुज्यते ।
शिवो अर्च्च्यस्तदा तत्र सूत्रं परं भवेत् पुनः ॥ ९
आदेशः पूर्व्वरूपं स्यात् "एङः" इति स्थितं खलु ।
शिवोऽर्च्च्यः स्यात् तदा तत्र रूपमिष्टं तदेव हि ॥ १०

"अतः" इति तपरं ना कथं पदं प्रयुज्यते ।
आकारो न भवेद् यस्माः "देवा अत्र" न तावद् उः ॥ ११

"आत" इति तपरं वा कथं पदं प्रयुज्यते ।
आकारो न भवेद्ग्राह्यः "स्व आगन्ता" न तावद् उः ॥ १२
अप्लुतो वा कथं तत्र प्लुत इति न गृह्यते ।
एहि सुश्रोत३ अत्रेति प्लुत इति न तावद् उः ॥ १३

१६६। हशि च। ६।१।११४

न प्लुतश्चेदकारः स्यात् परे हश् चेत् स्थितो भवेत् ।
रो भवेद् "उ" तदा तत्र "शिवो वन्द्यो" भवेद् यथा ॥ १४
"उ" तावदनुबन्धः स्यात् यदा च "रो" इहोच्यते ।
रो रः न चेत् तदा न स्यात् "प्रातरत्र" निदर्शनम् ॥ १५
"देवास इह" यदा तत्र "ससजुषो" भवेच्च रुः ।
"देवार् इह" तदा तत्र ततः सूत्रं परं भवेत् ॥ १६

१६७। भो भगो अघो अपूर्व्वस्य योऽशि। ८।३।१७

भो इह चेत् भवेत् पूर्व्वे भगो पूर्व्वे भवेद् यदि ।
अघो यदि भवेत् पूर्व्वे अः पूर्व्वे चेद् भवेदिह ॥ १७
तदा रः स्याद् यकारश्च अशिह चेत् परे स्थितः ।
देवास् इह "देवार् इह" "देवायिह" भवेत् क्रमात् ॥ १८
शाकल्यस्य भवेल्लोपः पुनरिह विभाषया ।
देवा इह भवेत्तस्मात् यदा लोपस्तथा भवेत् ॥ १९
अशि परे यकारः स्यात् अन्यत्र न तथा पुनः ।
"देवाः सन्ति" यकारो न न तावदश् परे स्थितः ॥ २०
इहासिद्धं यदा सत्वं विसर्गो लभ्यते तदा ।
विसर्गः स्थानिवत् स्याच्च रुत्वात् यत्वं प्रवर्त्तते ॥ २१
अल्विधि र्न पुनश्चायं समुदायो भवेच्च रुः ।
केवलमल् न चेहास्ति र-युतः स इह स्थितः ॥ २२
सकारान्तो भवेद् भोस् च सकारान्तो भवेद् भगोस् ।
अघोस् भवेद् सकारान्तः "स"स्य "रुः" स्यात् ततश्च यः ॥ २३
भोस् इति स्यात् भगोस् स्याच्च अघोस् स्याच्च तदा पुनः ।
एवं यदा स्थितं तत्र सूत्रं परं प्रवर्त्तते ॥ २४

१६८। व्योर्लघुप्रयत्नतरः शाकटायनस्य। ८।३।१८

पदान्ते "व" पदान्ते "य" पुनरश् चेत् परे स्थितः।
लघुतरौ "यवौ" स्यातामिति च शाकटायनः॥ २५
प्रयत्नो यः स्वभावेन यवयोश्च भवेदिह।
इह त्र तदपेक्षया यत्नो लघुतरो मतः॥ २६
जिह्वाग्रावेश्च शैथिल्यं यस्मिन् काले प्रजायते।
तस्मिन् काले पुनर्यत्नो लघुतरो भवेदिह॥ २७

१६९। ओतो गार्ग्यस्य। ८।३।२०

ओकाराद् यः पदान्ते चेत् यत्नो लघु नं चेत् पुनः।
यकारस्य तदा लोपोः गार्ग्येन कथितं तथा॥ २८
भो अच्युत भवेदत्र यकारस्तु विलुप्यते।
भोस् अच्युत यदा तत्र भवेदुच्चारणं लघु॥ २९
यकारो न पदान्ते चेत तदा लोपो भवेन्न च।
तोयमिति पदं तत्र पदान्ते न न लुप्यते॥ ३०

१७०। उञि च पदे। ८।३।६१

अवर्णपूर्व्वयोस्तत्र यवयोश्च पदान्तयोः।
उञि परे भवेल्लोपः "स उ" भवेन्निदर्शनम्॥ ३१
पदं न चेत्, तथा न स्यात् तन्त्रयुतं भवेदिह।
वेञो रूपं प्रसारे स्यात् पदं न स्यात् तथा च न॥ ३२
निपात उञ् यदा ग्राह्यः प्रतिपदोक्तत्तावशात्।
उत्तरार्थं तदा सूत्रे पदस्य ग्रहणं भवेत्॥ ३३

१७१। हलि सर्व्वेषाम्। ८।३।२२

हलि परे च सर्व्वेषां मतेन "य" विलुप्यति।
भोस् प्रभृति यदा पूर्व्वे उच्चारणं यथा तथा॥ ३४
"भोः देवाः" स्यात् प्रयोगश्च "भो लक्ष्मि" स्यात् तथा पुनः
भवेद् "भगो नमस्ते" च सर्व्वत्र च परे हलि॥ ३५

१७२। रोऽसुपि। ८।२।६९

अहन्निति नकारस्य रेफादेशो भवेदिह।
सुपि परे न तावत् स्यात् अपवादो भवेच्च रोः॥ ३६

"अहरहो" भवेदत्र भवेद् "अहर्गणं" स्तथा ।
सुपि परे न तावत् स्यात् "अहोभ्याम्" इति नेह च ॥ ३७

रूप-रात्रि-रथन्तरे रुत्वं वाच्यम् (वा)

नकारस्य भवेद् रुश्च रूपे रात्रौ रथन्तरे ।
"अहोरूपं" पदं चात्र प्रदर्शितं निदर्शनम् ॥ ३८
रात्रिरेषा भवेद् रुश्च "अहोरथन्तरं" च रुः ।
अन्तस्य एकदेशः स्यात् "अहोरात्रं" तथा भवेत् ॥ ३९

अहरादीनां पत्यादिषु वा रेफः (वा)

पत्यादिकं परे यत्र अहरो रु विभाषया ।
अपवादो विसर्गस्य निदर्शनम् "अहर्पतिः" ॥ ४०
विसर्गश्च भवेत् पक्षे "अहःपति"स्तथा भवेत् ।
भवेदुपध्मानीयश्च "अह≍पति" स्तथा पुनः ॥ ४१

**१७३ । रो रि । ८।३।१४**

रेफे परे रेफस्येह भवेल्लोप इति स्थितिः ।
स्यात् "पुनर् रमते" तत्र स्यात् "पुन रमते" तथा ॥ ४२

**१७४ । ढ्लोपे पूर्व्वस्य दीर्घोऽणः । ६।३।१११**

ढकारस्य रकारस्य येन लोपो भवेदिह ।
ढ्लोपः स इह ज्ञेयो वर्णो इह मतो भवेत् ॥ ४३
वर्णो तस्मिन् परे चात्र भवेदिणो हि दीर्घता ।
भवेद् "पुना रमते" च तथा सति निदर्शनम् ॥ ४४
अण एव भवेद दीर्घो न चान्येस्य तथा भवेत् ।
"तृढः" इति ऋकारः स्यात् तस्य दीर्घो भवेन्न च ॥ ४५

**अजघाः**

इह गृधु स्थितो धातुर्यङ्लुगिह स्थितः पुनः ।
लङि सिपि पदं साध्यं प्रक्रिया च भवेद् यथा ॥ ४६

गृध् यङ् सिप् च स्थितं तावत् प्रक्रिया च प्रवर्त्तते ।
**"यङोऽचि"** (१) च यङोलुक् स्यात् गृध्-/०/-सिप् तदा स्थितं भवेत् ॥ ४७
**"सन्यङोश्च"** (२) स्थितं सूत्रं तदेवेह प्रयुज्यते ।
तेन चात्र भवेद्द्वित्वं /गृध्/ गृध् सिप् च तदा भवेत् ॥ ४८

"गुण" (३) इति स्थितं सूत्रं ततश्च तत् प्रयुज्यते ।
तेन गुणो भवेदत्र /गर्ध्/ गृध् सिप् च तदा भवेत् ॥ ४९
"हलादिः" (४) च परं सूत्रं ततः परं प्रयुज्यते ।
"ग" शिष्यते परं लुप्तं ग /०/-गृध् सिप् च तदा भवेत् ॥ ५०
"रुगरिकौ" (५) च भवेत् सूत्रं ततः परं प्रयुज्यते ।
रुगागमो भवेदत्र ग/र्/ गृध् सिप् च तदा भवेत् ॥ ५१
"अभ्यासे चर्" (६) पुनः सूत्रं ततः परं प्रयुज्यते ।
गकारस्य जकारः स्यात् /ज/र् गृध् सिप् च तदा भवेत् ॥ ५२
"पुगन्त" (७) च स्थितं सूत्रं परं तत्र प्रयुज्यते ।
तेन गुणो भवेदत्र जर् /गर्ध्/ सिप् च तदा भवेत् ॥ ५३
"इतश्चेति" (८) स्थितं सूत्रं परं च तत् प्रयुज्यते ।
इकारस्य भवेल्लोपः जर् गर्ध् /स्/ च तदा भवेत् ॥ ५४
"हल्ङ्याब्भ्यो" (९) च स्थितं सूत्रं परं च तत् प्रयुज्यते ।
सकारस्य भवेल्लोपो जर्-गर्ध्-/०/ तावत् तदा भवेत् ॥ ५५
"एकाचः" (१०) स्यात् पुनः सूत्रं परं च तत् प्रयुज्यते ।
गकारस्य भवेद् घश्च जर् /घ/र्ध् पुनस्तदा भवेत् ॥ ५६
"झलां जश्" (११) च परं सूत्रं पुनश्च तत् प्रयुज्यते ।
दकारः स्यात् धकारस्य जर् घ/र्द्/ पुनस्तदा भवेत् ॥ ५७
"वश्च" (१२) खलु स्थितं सूत्रं परं च तत् प्रयुज्यते ।
रुत्वं चात्र दकारस्य जर् घर्/र्/ पुनस्तदा भवेत् ॥ ५८
"रो रि:" (१३) पुनः स्थितं सूत्रं परं च तत् प्रयुज्यते ।
रेफस्य च भवेल्लोपो जर्-घर्-/०/ पुनस्तदा भवेत् ॥ ५९
"ढ्लोपश्च" (१४) स्थितं सूत्रं परं च तत् प्रयुज्यते ।
अकारस्य भवेद् दीर्घो जर् /घार्/ पुनस्तदा भवेत् ॥ ६०
"लुङ्लङ्" (१५) पुनः स्थितं सूत्रं परं च तत् प्रयुज्यते
अडागमो भवेत्तस्मात् "/अ/जर्घा." च पदं भवेत् ॥ ६१

हरिपदेन दत्तेन प्रक्रिया दर्शिता मया ।
इह यद् यत् स्थितं शास्त्रे तत्तत् सर्व्वं प्रदर्शितम् ॥ ६२

"मनस् रथः" यदा तत्र संहिता विषयो यदा ।
सकारस्य भवेद् रुश्च "मनर् रथ"स्तदा भवेत् ॥ ६३
एवं यदा स्थितं तत्र संशयस्तु प्रजायते ।
"हशि" वा स्यात् "रो रि"वा स्यात् कतरद्वा तयो र्भवेत् ॥ ६४
"हशी"ति चेत् प्रयुक्तं स्यात् "उ" इति स्यात् तदा च रोः ।
"रो रि" यदि प्रयुक्तं स्यात् रोः लोपः स्यात् समग्रतः ॥ ६५
एवं यदा विरोधः स्यात् समाधानं प्रयोजनम् ।
समाधाने पुनः सूत्रं परमिह प्रवर्त्तते ॥ ६६

**१७५ । विप्रतिषेधे परं कार्य्यम् । १।४।२**

तुल्यबलविरोधश्चेत् परं कार्य्यं भवेदिह ।
"रो रि" भवेत् परं शास्त्रं तेन लोपो भवेत् खलु ॥ ६७
न च तावत् भवेल्लोपः न च "रो रि" प्रयुज्यते ।
पूर्व्वत्रासिद्धमित्येतन शास्त्रमिह प्रवर्त्तते ॥ ६८
पूर्व्वं प्रति परं शास्त्रमसिद्धं स्यादिति स्थितिः ।
"रो रि" भवेत् परं शास्त्रं तदसिद्धं भवेदिह ॥ ६९
"हशि" पूर्व्वं प्रयुक्तं स्यात् "उ" तदा च प्रवर्त्तते ।
"मनर् रथः" यदा तत्र "मन उ" स्यात् तदा पुनः ॥ ७०
"मन" "उ" च "रथश्चे"ति त्रयं यदा युतं भवेत् ।
"मनोरथः" पदं तत्र तदा खलु प्रसिध्यति ॥ ७१

**१७६ । एतत्तदोः सुलोपोऽकोरनञ्समासे हलि । ६।१।१३२**

"एतद्" शब्दात् यदा सुः स्यात् "तद्" शब्दात् "सु" यदा पुनः ।
तस्य दश्च भवेल्लोपः हलिह चेत् परे स्थितः ॥ ७२
तस्मिन् तस्मिन् ककारश्चेत् लोपस्तदा भवेन्न च ।
तत्पुरुषः समासश्चेत् न लोपः स्यात् तदापि च ॥ ७३
"एष विष्णु" सुलोपः स्यात् "स शम्भु"श्च तथा पुनः ।
क इह चेत् तदा न स्यात् "स एषको हरि"र्यथा ॥ ७४
नञ् समासो यदा तत्र तदा न स्यात् तथा पुनः ।
"असः शिवः" समासः स्यात् न सुलोपस्ततो भवेत् ॥ ७५
परे यदि न हल् तत्र तदा न स्यात् तथा पुनः ।
"एषोऽत्र" स्यात् परे हल् न लोपो नास्ति तथा पुनः ॥ ७६

**१७७। सोऽचि लोपे चेत् पादपूरणम्। ६।१।१७४**

अचि परे सुलोपः स्यात् तेन चेत् पादपूरणम्।
"सेमा"मिति स्थितो वेदे लोपे पादश्च पूर्य्यते॥ ७७
ऋक्पादे केवलं तद्वद् नान्यत्रेति च वामनः।
अन्यत्रापि भवेत्तद्वत् परे प्राहुरिति स्थितिः॥ ७८
"सैष दाशरथि रामः" भवेदिह निदर्शनम्।
तथा च पूर्य्यते पादः ततः सन्धिः समाश्रितः॥ ७९

१६।१।७४ -७९ श्लोकाः

(अपराह्नः २-३० घटिका)

इति—
स्वादिसन्धि प्रकरणम्

सन्धि प्रकरणे

| | |
|---|---|
| अच्सन्धौ— | २१९ श्लोकाः |
| अच्सन्धौ प्रकृतिभावे— | ५१ श्लोकाः |
| हलसन्धौ— | १९५ श्लोकाः |
| विसर्गसन्धौ— | ३६ श्लोकाः |
| स्वादिसन्धौ— | ७९ श्लोकाः |
| | ५८० श्लोकाः |

इति—
श्रीभुवनमोहन-मृणालिनी सुत
श्रीहरिपददत्तविरचितायां व्याकरणकारिकायां
सन्धिप्रकरणं समाप्तम्।

## शब्दाधिकारे अजन्त पुंलिङ्ग प्रकरणम्

आरम्भः

२३।११९७४

**१७८। अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। १।२।४५**

न धातुः प्रत्ययो नैव प्रत्ययान्तं तथैव न।
अर्थवच्छब्दरूपं यत् तत् प्रातिपदिकं मतम्॥ १
"भुवन" इति शब्दः स्यात् तत् प्रातिपदिकं भवेत्।
प्रत्ययः प्रत्ययान्तो न धातुर्न पुनरर्थवत्॥ २

**१७९। कृत्तद्धितसमासाश्च। १।२।४६**

कृदन्तं तद्धितान्तं च समासश्च तथा भवेत्।
कारकं मासिकं स्याच्च स्याद् राजपुरुषस्तथा॥ ३
"समास" स्तु पदं सूत्रे नियमार्थं भवेच्च तत्।
समासस्य भवेत् संज्ञा वाक्यस्य न तथा भवेत्॥ ४

**१८०। प्रत्ययः। ३।१।१**

अध्यायः पञ्चमो यावन्न समाप्तो भवेदिह।
प्रत्ययस्तु भवेत्तावदधिकारो विधीयते॥ ५

**१८१। परश्च। ३।१।२**

अधिकारे भवेत् सूत्रं योगे योगे प्रवर्त्तते।
प्रत्ययस्तु परे योज्यः परे युक्तो भवेत् सदा॥ ६

**१८२। ङ्याप्प्रातिपदिकात्। ४।१।१**

ङ्यन्तं यत् स्यात् यदाबन्तं यत् प्रातिपदिकं पुनः।
तस्मात् तस्मात् परे कार्य्यमितः परं भविष्यति॥ ७
अध्यायः पञ्चमो यावत् न समाप्तो भवेदिह।
यद् योज्यं तत् परे योज्यमधिकारो भवेदिति॥ ८

धृतं प्रातिपदिकं चेत् लिङ्गमपि धृतं भवेत्।
तत् कथं ङ्याप् पुनः प्रोक्तं पुर्नलिङ्गं च बोधितम्॥ ९
ङ्याबन्तात् तद्धितोत्पत्ति र्यथा नेह विहन्यते।
तद्धितो न यथा प्राक् स्यात् तथा ङ्याप् पठितं पुनः॥ १०

**१८३ । सु-औ-जश्/ अम-औट्-सस्/ टा-भ्याम्-भिस/ ङे-भ्यास्-भ्यस्/ ङसि-भ्याम्-भ्यस/ ङस्-ओस्-आस्/ ङि-ओस्-सुप् । ४।१।२**

सुऔ जश्/ स्यात् /अम्औट्शस्/ स्यात् /टाभ्याम्भिस्/ स्यात् तथा पुनः ।
ङेभ्याम्भ्यस्/ स्यात् /ङसिभ्याम् भ्यस्/ /ङस्ओस्आम्/ च तथा भवेत् ॥

ङिओस्सुप् स्यात् तथा तत्र सर्व्वा मया प्रदर्शिताः ।
ताः प्रातिपादिकाद्द योज्या ङ्यावन्ताच्च भवन्ति ताः ॥ १२

उकार इद् भवेदत्र एकार इत् तथा भवेत् ।
ये जशटङपास्तेऽपि पुनरितो मता इह ॥ १३

**१८४ । विभक्तिश्च । १।४।१०४**

सुप् विभक्तिर्भवेदत्र तिङ्विभक्तिर्भवेदिह ।
एषा संज्ञा स्थिता प्राचामिहापि सा प्रयोजिता ॥ १४

त्रिकं त्रिकं त्रिकं तत्र एवं सप्त गणाः स्थिताः ।
प्रथमा च द्वितीया च क्रमादेवमिहोच्यते ॥ १५

**१८५ । सुपः । १।४।१०३**

त्रिकं त्रिकं सुपस्तत् तत् एकमेकं धृतं यदा ।
एकवचनादिसंज्ञा तदा खलु भवेदिह ॥ १६

"सु" एकवचनं तत्र "औ" च द्विवचनं भवेत् ।
"जश्" वहुवचनं तत्र ज्ञेयाः सर्व्वे तथा पुनः ॥ १७

**१०६ । द्व्येकयोर्द्विवचनैकवचने । १।४।२२**

द्विवचनं भवेद् यत्र तत्र द्वित्वं प्रतीयते ।
स्यादेकवचनं यत्र तत्रैकत्वं मतं भवेत् ॥ १८

**१८७ । वहुषु वहुवचनम् । १।४।२१**

स्याद् वहुवचनं यत्र तत्र वहु मतं भवेत् ।
त्रयं तदधिकं तत्र भवेद्द ग्राह्यमिति स्थितिः ॥ १९

"भुवन" इति शब्दः स्यात् रूपं तस्य स्थितं परे ।
सुपि यानि पदानि स्युस्तानि वच्मि यथाक्रमम् ॥ २०

"भुवन" स्याद्द यदा शब्दः प्रत्ययः "सु" भवेद्द यदा ।
"ससजुषो" रिति सूत्रं सर्व्वादौ च प्रयुज्यते ॥ २१

एतेन रुभ वेदत्र "भुवन र्" च तदा भवेत् ।
"खर्"-इति च भवेद् योज्यं विसर्गश्च भवेत्तदा ॥ २२
रकारस्य विसर्गः स्यात् "भुवनः" स्यात् पदं तथा ।
पदमिष्टं तदेव स्यात् सुप्रत्यये पदं हि तत् ॥ २३

**१८८ । सरूपाणामेकशेष एकविभक्तौ । १।२।६४**

एका परे विभक्तिश्चेत् रूपान्तरं न चेत् भवेत् ।
एक एव सरूपानां शिष्यते च तदा पुनः ॥ २४
"भुवन भुवन" इति सरूपौ चेत् स्थितौ पुनः ।
"भुवन" एकशेषः स्यात् स इह गृह्यते तदा ॥ २५

"भुवन" स्याद् यदा शब्दः प्रत्यय "औ" स्थितो यदा ।
सूत्रत्रयं भवेद् योज्यं "भूवनौ" च पदं भवेत् ॥ २६
"प्रथमयोः" स्थितं सूत्रं तस्य प्राप्ति र्भवेदिह ।
पूर्व्वस्य सवर्ण एव दीर्घस्तेन हि लभ्यते ॥ २७
बाधित्वा तत् पुनः सूत्रं "नादिचि" च प्रवर्त्तते ।
पूर्व्वस्य सवर्णो दीर्घो यः प्राप्तः स निषिध्यते ॥ २८
"वृद्धिरेचि" भवेत् सूत्रं तदेव च प्रयुज्यते ।
एचि परे भवेद् वृद्धिः "भूवनौ" च पदं भवेत् ॥ २९

"भूवन" स्याद् यदा शब्दः प्रत्ययो "जश्" परे यदा ।
पदस्य साधने तत्र प्रक्रिया स्याद् यथा परे ॥ ३०

**१८९ । चुटू । १।३।७**

प्रत्ययादौ यदा चुः स्यात् प्रत्ययादौ यदा च टुः ।
तदा तयो र्भवेल्लोपो लुप्यते जस्तथा पुनः । ३१

अकारस्य यदा लोपस्तदा प्रश्नो भवेत् पुनः ।
लोपो वा स्यात् सकारस्य "हलन्त्यं" च स्थितं खलु ॥ ३२
न प्राप्नोति पुनर्लोपः सकारो न विलुप्यते ।
लोप इह यथा न स्यात् तथा सूत्रं प्रवर्त्तते ॥ ३३

**१९०। न विभक्तौ तुस्माः। १।३।४**

वर्त्तमानो विभक्तौ चेत् तवर्गो न विलुप्यते।
सकारश्च मकारश्च तत्र स्थितो न लुप्यते॥ ३४
एतेन तु सकारस्य लोप इह निषिध्यते।
"अस्" इति स्यात् तदा तत्र "भुवन अस्" तदा स्थितः॥ ३५

एवं यदा स्थितं तत्र पुनः सूत्रं प्रयोजनम्।
कतरद् वा भवेद् योज्यं तदिह च परीक्ष्यते॥ ३६

**१९१। अतो गुणे। ६।१।९७**

अकारो न पदान्ते चेत् गुण इह परे यदि।
पररूपमेकादेशस्तदा भवेदिति स्थितिः॥ ३७

पररूपमेकादेश एवं प्राप्तो भवेदिह।
स आदेशो न तावत् स्यात् कारणं स्याद् यथा परे॥ ३८

एतत् सूत्रं स्थितं पूर्व्वे "प्रथमयोः" स्थितं परे।
परमेव भवेद् योज्यं पूर्व्वमिह न युज्यते॥ ३९
"प्रथमयोः" भवेद् योज्यं तेन दीर्घो भवेदिह।
"भुवन जस्" स्थितं तत्र दीर्घे स्याद् "भुवनाः" पदम्॥ ३२
अक इति परे सूत्रं तेनापि दीर्घता भवेत्।
तदिह न भवेद् योज्यं वाधितं तद् भवेद् यतः॥ ४१
"अनन्तरा" हि वाध्यते न वाध्यन्ते इहोत्तराः।
"अक" इति चानन्तरं "प्रथमयो" रिहोत्तरम्॥ ४२
"अक" इति वाधितं स्यात् "प्रथमयो" नं वाध्यते।
"प्रथमयोः" प्रयुक्तं स्यात् ततो दीर्घो भवेदिह॥ ४३

"अक" इति स्थितं सूत्रम् "अत" इति स्थितं पुनः।
"प्रथमयोः" स्थितं सूत्रम् अन्त्यमेव प्रवर्त्तते॥ ४४
परिभाषावलादत्र कार्य्यं भवेद् यथोचितम्।
पुरस्तादपवादेति परिभाषा प्रदर्शिता॥ ४५

**१९२ । एकवचनं सम्बुद्धिः । २।३।४९**

इहैकवचनं यत् च प्रथमायां स्थितं भवेत् ।
सम्बोधने तत् सम्बुद्धिः पुनरिह च कथ्यते ॥ ४६

**१९३ । एङ्ह्रस्वात् सम्बुद्धेः । ६।१।६९**

एङन्तं यद् भवेदङ्गं ह्रस्वान्तं यद् भवेत् पुनः ।
लुप्यते हल् पुनस्तस्मात् सम्बुद्धे हलं भवेद् यदि ॥ ४७
"भुवन सु" यदा तत्र लुप्यते "स" तदा पुनः ।
"हे भुवन !" तदा रूपं सम्बोधने भवेदिह ॥ ४८
"भुवनौ" "भुवनाः" स्याच्च विशेषश्च न वर्त्तते ।
प्रथमायां यथा यथा सम्बोधने तथा तथा ॥ ४९

एङन्तं चेद् भवेदङ्गं ह्रस्वान्तं चेद् भवेत् पुनः ।
सम्बुद्धेः सोस्तदा लोपो नान्यत्र च तथा भवेत् ॥ ५०
"हे कतरत्कुले"त्यत्र न लोपश्च विधीयते ।
रेफान्तं हि स्थितमङ्गं ह्रस्वान्तं न स्थितं पुनः ॥ ५१

केवलं चेत् पदं "ह्रस्वात्" सूत्रे भवेत् प्रयोजितम् ।
ह्रस्वादेव भवेल्लोपो नान्यस्मात् स्यात् तथा पुनः ॥ ५२
गुणे कृते "हरे" स्याच्च गुणे "विष्णो" भवेदिह ।
नेह ह्रस्वात् परत्वं स्यात् लोपस्तस्मात् भवेन्न च ॥ ५३
एकारान्ताद् यथा च स्यात् ओकारान्ताद् यथा भवेत् ।
एङिति च पदं सूत्रे तथा खलु निवेशितम् ॥ ५४
यदा "हरे" यदा "विष्णो" स्यादेङन्तं पदं तदा ।
एङन्ताच्च भवेल्लोपः पदमिष्टं तथा भवेत् ॥ ५५

( पूर्व्वपक्षः )

आदौ गुणं विधायेह पश्चाद् लोपो विधीयते ।
एङिति च निवेशस्य तेन भवेत् प्रयोजनम् ॥ ५६
आदौ लोपं गृहाणेह पश्चाद् गुणं प्रयोजय ।
"हे हरि सु" स्थितो ह्रस्वः ह्रस्वादेव विधिर्भवेत् ॥ ५७
"ह्रस्वादि"ति पदं सूत्रे तेन सिध्येत् प्रयोजनम् ।
"एङि"ति ते पदं व्यर्थं तदनुसरणं वृथा ॥ ५८

( उत्तरपक्षः )

आदौ लोपो गुणः पश्चादिति युक्तं भवेन्न च ।
गुणे विधि र्भवेन्नित्यो गुणे विधिः परो भवेत् ॥ ५९

आदौ गुणो भवेत् कार्य्यः पश्चाल्लोपो हि युज्यते ।
गुणे "हरे" गुणे "विष्णो" ततो लोपः प्रसज्यते ॥ ६०

यदा "हरे" यदा "विष्णो" स्यादेङन्तं पदं तदा ।
तस्माद् लोपो भवेत् कार्य्यो विधिस्तत्र प्रयोजनम् ॥ ६१

एङिति च पदं तस्मात् मुनिनेह प्रयोजितम् ।
एङिति न पदं व्यर्थं न चानुमरणं वृथा ॥ ६२

२३।१।७४-६२ श्लोकाः

१९४ । अमि पूर्व्वः । ६।१।१०१

अमश्चेदच् परे तत्र पूर्व्वे चेदक् भवेदिह ।
आदेशः पूर्व्वरूपं स्यात् "भुवनम्" "भुवनौ" तथा ॥ ६३

भुवन शस् यदा तत्र प्रक्रिया स्याद् यथा परे ।
इह सूत्रं पुन र्योज्यं तद् भवेच्च यथा पुनः ॥ ६४

१९५ । लशक्वतद्धिते । १।३।८

प्रत्ययादौ लकार इद् शकार इद् भवेदिह ।
कवर्ग इद् भवेत्तद्वत् तद्धिते न तथा भवेत् ॥ ६५

"भुवन शस्" यदा तत्र "भुवन अश" तदा भवेत् ।
ततः परं पुनः सूत्रं भवेत् प्रयोजनं यथा ॥ ६६

१९६ । तस्माच्छसोनः पुंसि । १।३।१०३

पूर्व्वसवर्णदीर्घाच्च शसो मध्य सकारता ।
"भुवनान्" स्यात् पदं तत्र पदमिष्टं तदेव हि ॥ ६७

"राम शस्" स्यात् यदा तत्र "रामान्" पदं तदा भवेत् ।
इह णत्वं भवेद् वा न इति तु संशये स्थिते ॥-६८

१९७ । अट्कुप्वाङ्नुम्व्यवायेऽपि । ८।४।२

रकारो वा षकारो वा यदा पूर्व्वं भवेदिह ।
नकारश्च यदा पश्चाद् पुनरिह प्रवर्त्तते ॥ ६९

नकारस्य भवेद् णत्वमेकपदे तदा पुनः ।
अट्कुप्वाङ्नुम्व्यवायेऽपि विधिरेषः प्रवर्त्तते ॥ ७०

करणं हरणं तद्वत् किरिणा गिरिणा तथा ।
कुरुणा गुरुणा तद्वत् अड् व्यवाये निदर्शनम् ॥ ७१
व्यवधाने कवर्गस्य स्यादर्केण निदर्शनम् ।
मूर्खेण गर्गेण तद्वत् दीर्घेण च तथा भवेत् ॥ ७२
व्यवधाने पवर्गस्य पुनर्भवेत् निदर्शनम् ।
दर्पेण गर्भेण तद्वत् चर्मणा वर्मणा तथा ॥ ७३
पर्य्यानद्धं निरानद्धम् आङा भवेन्निदर्शम् ।
बृंहणं बृंहणीयं स्यादनुस्वारे स्थिते पुनः ॥ ७४
तृंहणं तृंहनीयं स्याद् व्यवधानं यदा नुमा ।
अट्कुप्वाङ नुम् व्यवायेऽपि भवेद् णत्वमिति स्थितिः ॥ ७५
व्यस्तैर्व्वा मिलितैर्व्वापि व्यवधानं भवेदिह ।
यथा यथा भवेद् योज्यं योजनीयं तथा तथा ॥ ७६

लक्षितः स्यादनुस्वारो नुमिति च यदोच्यते ।
अत्रैव तद् भवेदुक्तं त्यक्तुं शक्यं ततश्च नुम् ॥ ७७

यथा तथा भवेद्वापि नालं च बहुना पुनः ।
रामान् यदा तदा णत्वं भवेन्नवा तदीक्ष्यते ॥ ७८
विषये तु पुनश्चास्मिन् सूत्रमन्यदपेक्षितम् ।
अपेक्षितं भवेत् यत् तत् परमिह प्रदर्शितम् ॥ ७९

१९८ । पदान्तस्य । ८।४।३७

पदान्तस्य न नस्येह भवेद् णत्वमिति स्थितिः ।
"रामान्" यतः पदान्ते स्यात् णत्वं तस्मात् भवेन्न च ॥ ८०

२४।१ ७४-१८ श्लोकाः

इति—

द्वितीया विभक्तिः

---

## अथ तृतीया विभक्तिः

१९९ । यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । १।४।१३

धातोः प्रातिपदिकाद् वा प्रत्ययश्चेद् विधीयते ।
प्रत्यये परतस्तत्र तदादेरङ्गता भवेत् ॥ ८१

"कर्त्ता" स्याद् "भानवः" स्याच्च पुनरिह निदर्शनम् ।
प्रत्यये तु परे तत्र पूर्व्वमङ्गं भवेदिह ॥ ८२

"ण्वुल्तृचौ" च स्थितं सूत्रं प्रत्ययस्तृज् विधीयते ।
प्रत्यये तु परे तस्मिन्नङ्गं "कृ" स्यादिति स्थितिः ॥ ८३

"तस्यापत्यम्" स्थितं सूत्रम् अणप्रत्ययो विधीयते ।
प्रत्यये तु परे तस्मिन्नङ्गं "भानु" भवेदिह ॥ ८४

"तदादि" च पदं सूत्रे मुनिनेह निवेशितम् ।
विकरणादिकं यत् स्यात् तदपि च धृतं भवेत् ॥ ८५

विकरणविशिष्टस्य संज्ञा भवेदिति स्थितिः ।
"भविष्यामि" "करिष्यामि" "स्य"प्रत्ययो धृतो भवेत् ॥ ८६

"भविष्य"स्यात् "करिष्य" स्यादङ्गमिह समग्रतः ।
विकरणं धृतं चात्र धृता च प्रकृतिः पुनः ॥ ८७

विधिर्यदि भवेदङ्गं न चेद् विधि स्तथा च न ।
"स्त्री इयती" विधिर्न स्यात् न स्यादङ्गं तथा पुनः ॥ ८८

"इयती" प्रत्ययः सत्यं किन्तु स न विधिर्भवेत् ।
तस्मात् स्त्री न भवेदङ्गम् अङ्गकार्य्यं न सिध्यति ॥ ८९

द्वितीयः "प्रत्यय"शब्दो मुनिनेह निवेशितः ।
कियद्दूरं भवेदङ्गं सीमा तस्य प्रदर्शिता ॥ ९०

प्रत्यये तु परे तत्र तत्पूर्व्वं यद् भवेदिह ।
तदेव च भवेदङ्गं तदधिकं न गृह्यते ॥ ९१

अङ्गं चेत् प्रत्ययान्तं स्याद् "वव्रश्चे"ति न सिध्यति ।
"उव्रश्चे"ति पदं सिध्येद् अनिष्टं तु महद् भवेत् ॥ ९२

प्रत्ययेन विशिष्टं चेद् अङ्गं भवेत् समादृतम् ।
णल्सहितस्तदा "व्रश्च" भवेदङ्गमिति स्थितिः ॥ ९३

तथाभूतं यदा चाङ्गं निमित्तं न परे स्थितम् ।
निमित्तं चेत् परे नास्ति "उरत्" "अचः-" न युज्यते ॥ ९४
"उरत्" "अचः-" न युक्तं चेत् स्थानिवत्त्वं न सिध्यति ।
स्थानिवत्त्वं न सिद्धं चेत् सिध्येन्न च प्रसारणम् ॥ ९५
प्रसारणं न सिद्धं चेत् "ने"ति सूत्रं न युज्यते ।
"ने"ति सूत्रं न युक्तं चेत् प्रसारणं गतिर्भवेत् ॥ ९६
प्रसारणं यदा सिध्येद् "उवश्च" स्यात् पदं तदा ।
"वव्रश्चे"ति पदं तावदिष्टमपि न लभ्यते ॥ ९७

आधिकं चेद् भवेदङ्गम् अनिष्टं स्यात् तथापि च ।
प्रागपि देवदत्तात् स्यादड़ागमस्तदा पुनः ॥ ९८
देवदत्त इहौदनमपाक्षीत् चेद् भवेदिह ।
देवदत्तात् परं तत्र सुप् प्रत्ययः प्रवर्तते ॥ ९९
सुप्पर्यन्तं भवेदङ्गम् आदाय तं सुपं पुनः ।
सुप्परं देवदत्तात् प्रागङ्गाद् भवेदड़ागमः ॥ १००

द्वितीयः "प्रत्यय" शब्दो मुनिनेह निवेशितः ।
कियद्दूरं भवेदङ्गं सीमा तस्य प्रदर्शिता ॥ १०१
प्रत्यये तु परे तत्र तत्पूर्वं यद् भवेदिह ।
तदेव च भवेदङ्गं तदधिकं न गृह्यते ॥ १०२

२६।१।७४-२२ श्लोकाः

२००। अङ्गस्य। ६।४।१

अधिकारे भवेत् सूत्रमङ्गात् कार्यं भवेदिह ।
अध्यायः सप्तमो यावत् न समाप्तः स्थितो हि सः ॥ १०३

२०१। टा-ङसि-ङसाम् इन-आत्-स्याः। ७।१।१२

अङ्गं स्याच्चेद् एकारान्तं टा ङसि ङस् परे यदि ।
"इन" भवेत् भवेद् "आत्" च भवेत् "स्य" च यथाक्रमम् ॥ १०४
"भुवन" स्यात् यदा शब्दः "टा" प्रत्ययः परे यदा ।
"इन" भवेत् समादेशो "भुवनेन" पदं भवेत् ॥ १०५

२०२। सुपि च। ७।३।१०२

अदन्तस्य भवेद् दीर्घो यञादौ च परे सुपि।
"भुवन भ्याम्" भवेद् दीर्घो "भुवनाभ्याम्" तदा भवेत्॥ १०६

२०३। अतो भिस ऐस्। ७।१।९

भिस ऐस् स्यादकारान्तात् सर्वादेशश्च बहुला।
"भुवन भिस्" यदा तत्र "भुवनैः" स्यात् पदं तदा॥ १०७

२०४। ङेर्यः। ७।१।१३

आदेशो "य" यदा "ङे" स्यात् अतोऽङ्गात् परे पुनः।
"भुवन ङे" यदा तत्र "भुवनाय" पदं भवेत्॥ १०८
एकारस्य यकारः स्यात् "य" स्थानिवद् भवेदिह।
सुपीति च भवेद् योज्यं दीर्घे पदं तथा भवेत्॥ १०९
सन्निपातपरिभाषा नेह पुनः प्रवर्त्तते।
अनित्या परिभाषा सा "कष्टाय" ज्ञापकं भवेत्॥ ११०
"भुवन भ्याम्" यदा तत्र "सुपी"ति च प्रवर्त्तते।
इह तेन भवेद् दीर्घ "भुवनाभ्याम्" पदं भवेत्॥ १११

२०५। बहुवचने झल्येत्। ७।३।१०३

एकारः स्यादतोऽङ्गस्य झलादि चेत् परे बहु।
"भुवन भ्यस्" यदा तत्र "भुवनेभ्यः" तदा भवेत्॥ ११२

एकारः स्याद् बहुत्वं चेत् अन्यत्र न तथा भवेत्।
"भुवन सु" न चैकारः स्यादेकवचनं हि तत्॥ ११३
परे झल् चेत् तदैव स्यात् अन्यत्र न तथा भवेत्।
"भुवन आम्" न तावत् स्यात् झलिह न परे पुनः॥ ११४
एकारः स्याद् यदा सुप् स्यात् यदा तिङ् स्यात् तदा पुनः।
पचध्वं स्यात् न चैकारः इह सुप् न परे च तिङ्॥ ११५

"भुवन" स्यात् "ङसि" स्याच्चेत् "भुवन आत्" तदा भवेत्।
"झलां जशः" तकारस्य दकारः स्यात् तदा पुनः॥ ११६

२०६। वाऽवसाने। ८।४।५६

अवसानं यदा तत्र झलां चरो विभाषया।
"भुवनात्" स्यात् "भुवनाद्" स्यात् तदद्वयं तथा भवेत्॥ ११७

चत्वारि च पदानि स्युर्यदा द्वित्वं भवेदिह ।
"भुवनात्" "भुवनात्त्" स्याच्च "भुवनाद्" "भुवनाद्द्" पुनः ॥ ११८

"भुवनाभ्याम्" "भुवनेभ्यः" न विशेष इह स्थितः ।
"भुवनस्य" पदं स्याच्च ङसः "सत्" स्याद् पुनर्यदा ॥ ११९
सकारस्य यदा द्वित्वं भुवनस्स्य तदा भवेत् ।
"खरि" चेति सकारस्य तकारो न भवेदिह ॥ १२०
यत्ने भेदः स्थितस्तत्र अल्पप्राणो भवेच्च तः ।
सकारो यो भवेदत्र महाप्राणो मतो हि सः ॥ १२१
"खरिचे"ति सकारस्य तकारश्चेत् भवेदिह ।
"सः सि" चेति पुनः सूत्रं नं भवेच्च प्रयोजनम् ॥ १२२

२०७ । ओसि च । ७।३।२०४

अदन्तं चेद् भवेदङ्गं ओसिह् चेत् परे स्थितः ।
ऐकारः स्यात् तदाङ्गस्य "भुवने ओस्" तदा भवेत् ॥ १२३
इह यदा भवेत् सन्धिः "भवनयोः" पदं तदा ।
"भुवन आम्" यदा तत्र सूत्रं परं प्रयोजनम् ॥ १२४

२०८ । ह्रस्वनद्यापो नुट् । ७।१।५४

ह्रस्वान्तं चेद् भवेदङ्गं नद्यन्तं चेद् भवेत् पुनः ।
आबन्तं चेद् भवेदङ्गं नुडागमो भवेत्तदा ॥ १२५
"भुवन" "न" पुनर् "आम्" स्यादिति यथाक्रमं स्थितम् ।
इतः परं पुनः सूत्रं भवेत् प्रयोजनं यथा ॥ १२६

२०९ । नामि । ६।४।३

अदन्तं चेद् भवेदङ्गं नामि दीर्घो भवेत्तदा ।
"भुवनानाम्" पदं दीर्घे तथा भवेदिति स्थितिः ॥ १२७

"सुपी"ति च विधिर्दीर्घे परोऽपि न प्रवर्त्तते ।
सन्निपातपरिभाषाविरोधः स्यात् तदा पुनः ॥ १२८
यस्माद् यस्य भवेद् जन्म न तं हन्ति कदापि सः ।
उपजीव्यं निहन्ति न कदापि चोपजीवकम् ॥ १२९
"ह्रस्व" इति स्थितं सूत्रं तदाश्रित्य भवेन्न नुट् ।
ह्रस्वान्नुटो भवेज् जन्म ह्रस्वान्न नुट् प्रजायते ॥ १३०

"सुपि" ह्रस्वविघाते स्यात् दीर्घस्तेन विधीयते ।
न तं प्रति निमित्तं स्याद् यञादीति पुनश्च नुट् ॥ १३१
ह्रस्वान्नुटो भवेज् जन्म दीर्घाय स न कल्पते ।
नुटं च तं समाश्रित्य "सुपि" नेह प्रवर्त्तते ॥ १३२
रामाभ्यामितिवद् यत्र परे भ्यामि पदं भवेत् ।
तत्रैव हि भवेद् योज्यं सूत्रं "सुपि" मुने मते ॥ १३३

स एव हि प्रदेशः स्यात् तत्र "सुपि" प्रयुज्यते ।
तत्रैव लभते सूत्रमवकाशं यथायथम् ॥ १३४
आमो नामि परे यत्र सूत्रं "सुपि" न युज्यते ।
अवकाशं पुनः सूत्रं न तत्र लभते क्वचित् ॥ १३५
आमो नामि परे यत्र सूत्रमन्यत् प्रयोजनम् ।
नामीति च पुनः सूत्रं तत आरभते मुनिः ॥ १३६
रामानां स्याद् मुनीनां स्याद् नदीनां स्याद् यथा पुनः ।
तथा भवेत् समारम्भो "नामी"ति कुरुते मुनिः ॥ १३७
एवं यदा समारम्भः परिभाषा निवर्त्तते ।
बाधित्वा परिभाषां तां "नामि" च लभते पदम् ॥ १३८
अन्यत्र निरवकाशमत्रैव तत् प्रयुज्यते ।
परिभाषा स्वयं याति समारम्भो भवेद् बली ॥ १३९
"भुवन ङि" यदा तत्र "भुवन इ" तदा भवेत् ।
"भुवने" स्याद् यदा सन्धिरिष्टं पदं तदेव च ॥ १४०
भुवन ओस् यदा तत्र भुवनयोः पदं भवेत् ।
प्रक्रिया या भवेदत्र सा च पूर्व्वं प्रदर्शिता ॥ १४१
"भुवन सुप्" यदा तत्र भुवने सु तदा भवेत् ।
स्याद् "बहुवचने" सूत्रम् एकारः स्यात् तथा पुनः ॥ १४२
"भुवने सु" यदा तत्र सूत्रं परं प्रयोजनम् ।
सकारस्य भवेत् षत्वं तदेवं च विधीयते ॥ १४३

२१० । अपदान्तस्य मूर्धन्यः । ८।३।५५

अपदान्ते स्थितः स्याच्चेत् मूर्धन्यः स्यात् तदा पुनः ।
अधिकारे स्थितं सूत्रं यावत् पादं स्थितो हि सः ॥ १४४

२११। इणकोः। ८।३।५७

इतः परं भवेद् यत् तत् इनकोः परं भवेद्र हि तत्।
अधिकारे स्थितं सूत्रं यावत् पादं स्थितो हि सः॥ १४५

२१२। आदेश प्रत्ययपोः। ८।३।५९

आदेशो यः सकारः स्यात् सकारः प्रत्ययश्च यः।
इणकोः परं भवेत्तस्य मूर्धन्यः ष इति स्थितिः॥ १४६
भुवने सु यदा तत्र "भवनेषु" तदा भवेत्।
सकारस्य षकारः स्यात् इनः पर इति स्थितिः॥ १४७

इनकोः परं यदा "स" स्यात् तदा "ष" स्यादिति स्थितिः।
रामस्येति न स्यादिन्कोः तस्मात् षो न भवेदिह॥ १४८
आदेशप्रत्यययोश्चेत् सकारः स्यात् तदैव षः।
"सुपीः" न स्यात् समादेशः प्रत्ययो न तथा न षः॥ १४९
अपदान्ते यदा षः स्यात् तदा षः स्यादिति स्थितिः।
"हरिःष" पदान्ते सः तस्मात् षो न भवेदिह॥ १५०

२१३। सर्व्वादीनि सर्व्वनामाणि। १।१।२७

भवन्ति सर्व्वनामानि सर्व्वादीनि च संज्ञया।
तदन्तानि पुनर्यानि तानि स्युश्च तथैव च॥ १५१
"द्वन्वो" चेति स्थितं सूत्रं तदिह ज्ञापकं भवेत्।
तदन्तस्य तथा संज्ञा सूत्रेण स्यात् समर्थिता॥ १५२
पदं परमसर्व्वत्र यदिह च श्रुतं भवेत्।
आदाय सर्व्वनामतां पदं च तत् प्रसिध्यति॥ १५३
"परम" स्यात् पदं तत्र पदं "सर्व्वं" तथा भवेत्।
तेन परमसर्व्वः स्यात् सर्व्वशब्दः परे स्थितः॥ १५४
"सर्व्वं" स्यात् सर्व्वनामेह अन्ते च तत् स्थितं भवेत्।
तदन्तस्य तथा संज्ञा संज्ञा स्यात् सर्व्वनाम च॥ १५५
यदा परमसर्व्वं स्यात् सर्व्वनाम हि संज्ञया।
तदैव च भवेत् सूत्रं सप्तम्यात्तल् प्रयोजितम्॥ १५६
तेन परमसर्व्वत्र पदमिह प्रजायते।
आदौ सर्व्वनामता स्यात् पश्चात् त्रल् च प्रवर्त्तते॥ १५७

स्यात् परमभवत्कान् च पदं तत् स्यात् तथैव च ।
आदौ सर्व्वनामतास्यात् पश्चादकच् प्रवर्त्तते ॥ १५८
२७।१।७४- ५६ श्लोकाः
रात्रिः १० घटिकाः

२१४ । जशः शी । ७।१।१७
अदन्तं सर्व्वनाम चेत् जशः शी स्यादिति स्थितिः ।
अनेकाल् स भवेत् "शी" च सर्व्वादेशस्तथा भवेत् ॥ १५९
पूर्व्वपक्षः
अनेकाल् शी न तावत् स्यात् अनेकालत्वं न सिध्यति ।
अनेकालत्वे पुनर्बाधा परिभाषा भवेदिह ॥ १६०
"सानुबन्धकता"मिति परिभाषा प्रवर्त्तते ।
अनुबन्धं समादाय न चानेकाल् प्रसिध्यति ॥ १६१
"अर्वणस्तृ" भवेत् सूत्रं ऋकार इत् भवेत् तदा ।
ऋकारमितमादाय न चानेकाल् प्रवर्त्तते ॥ १६२
प्रत्ययः "शी" भवेदत्र सूत्रं "लश"—प्रयुज्यते ।
शकारमितमादाय न चानेकाल् भवेदिह ॥ १६३

शकार इद् भवेदत्र प्रत्ययः शिद् भवेदतः ।
शित्वमिह निमित्तं स्यात् सर्व्वादेशं च नं प्रति ॥ १६४
उत्तरपक्षः
"अर्वणस्तृ" स्थितं सत्यं तत्र "तृ" प्रत्ययो मतः ।
इह सूत्रं "जशः शी" स्यात् नात्र "शी" प्रत्ययो भवेत् ॥ १६५
पूर्व्वं "तृ" प्रत्ययस्तत्र परे "शी" प्रत्ययो न च ।
एवं तत्र द्वयोर्भेदः खलु स्थितः सुदुस्तरः ॥ १६६

"तृ" यदा स्यात् ऋकारस्तु सर्व्वादौ हि विलुप्यति ।
"त" युज्यते परे तत्र एकोहि "त" प्रयुज्यते ॥ १६७
प्रयोगः स्यात् यदा तत्र ऋकारो न स्थितस्तदा ।
अनेकाल्त्वं पुनस्तस्मात् न तदा स्यादिति स्थितिः ॥ १६८

"शी" यदा स्यात् शकारस्तु सर्व्वादौ न विलुप्यति ।
परे तस्य भवेल्लोपः सर्व्वादेशे कृते सति ॥ १६९

"शी" यदा स्यात् सर्व्वादेशात् प्राक् "श" इह स्थितो भवेत् ।
अनेकाल्त्वं ततश्च स्यादप्रतिहतमेव हि ॥ १७०

२८।१।७४-१२ श्लोकाः

"सर्व्व शी" स्याद् यदा तत्र "सर्व्व ई" च तदा भवेत् ।
यदा पुनर्भवेत् सन्धिः पदं "सर्व्वे" भवेत् तदा ॥ १७१

२१५ । सर्व्वनाम्नः स्मै । ७।१।१४

अदन्तं सर्व्वनाम चेत् "ङे" "स्मै" भवेदिति स्थितिः ।
यदा "सर्व्व" यदा "ङे" च "सर्व्वस्मै" स्यात् पदं तदा ॥ १७२

२१६ । ङसिङ्योः स्मात्स्मिनौ । ७।१।१५

अदन्तं सर्व्वनाम चेत् पुनरिह प्रवर्त्तते ।
"ङसि" यदा तदा "स्मात्" स्यात् "स्मिन्" पुनः स्यात् यदा च "ङि" ॥ १७३
यदा "सर्व्व" भवेत् पूर्व्वं यदा "स्मिन्" च परे भवेत् ।
"सर्व्वस्मात्" स्यात् पदं तत्र पञ्चम्यां तत् प्रवर्त्तते ॥ १७४

२१७ । आमि सर्व्वनाम्नः सुट् । ७।१।५२

अदन्तं सर्व्वनाम चेत् आमः सुट् स्यात् तदा पुनः ।
एत्वषत्वे "सर्व्वेषाम्" स्यात् "सर्व्वस्मिन्" च पदं भवेत् ॥ १७५

सर्व्वनामसंज्ञाप्रकरणम्

पञ्चत्रिंशत् धृताः शब्दाः सर्व्वादीनां गणे खलु ।
मया गणकारिकायां ते च सर्व्वे प्रदर्शिताः ॥ १७६
इह ये ये विशेषाः स्युः तान् तान् वच्मि परे पुनः ।
उक्तं दीक्षितपादैर्यत् तदुच्यते सविस्तरम् ॥ १७७

(१) उभ

उभशब्दे विशेषश्च पुनरिह प्रवर्त्तते ।
दर्शयामि च तान् सर्व्वान् यथाशास्त्रं यथा परम् ॥ १७८

विषयश्चेद् भवेद् द्वित्वम् उभशब्दः प्रयुज्यते ।
स च द्वित्वविशिष्टस्य वाचकः स्यादिति स्थितिः ॥ १७९
यदा शब्दो भवेद् योज्यो द्विवचनं भवेत् तदा ।
नित्यं द्विवचनं तत्र नित्यं द्वित्वं प्रवर्त्तते ॥ १८०

सर्व्वादीनां गणे शब्दः पुनरिह च पठ्यते ।
भवेच्च सर्व्वनाम स सर्व्वनाम स उच्यते ॥ १८१
सर्व्वनाम यदा शब्दः "अव्ययये"ति प्रयुज्यते ।
प्रत्ययः स्याद् अकच् तत्र "उभकौ" स्यात् पदं तथा ॥ १८२
सर्व्वनाम यदा न स्यात् "अकच्" तदा भवेन्न च ।
"उभकौ" च तदा न स्यात् "उभकौ" च न लभ्यते ॥ १८३
अकच् भवेद् यथा तत्र यथा स्यादुभकौ पुनः ।
तथा तस्य गणे पाठः सन्निवेशस्तथा गणे ॥ १८४

पूर्व्वपक्षः

मास्तु गणे धृतः शब्दो मास्तु वा सर्व्वनामता ।
मास्तु पुनरकच् तत्र उभकौ मास्तु वा तथा ॥ १८५
"प्रागिवात् कः" स्थितं सूत्रं स्वार्थेऽपि को भवेदिह ।
प्रत्ययः को यदा तत्र उभकौ स्यात् पदं तदा ॥ १८६
नापि यदा भवेदकच् उभकौ स्यात् तदापि च ।
कः प्रत्ययो भवेत् स्वार्थे तेन सिध्येत् प्रयोजनम् ॥ १८७

उत्तरपक्षः

उभशब्दो यदा तत्र प्रत्ययः स्यादकच् यदा ।
वरीवर्त्ति तदा द्वित्वं द्वित्वं तदा न हन्यते ॥ १८८
अकजिह भवेन् मध्ये प्राक् टेः भवेदिति स्थितिः ।
"उभकौ" च पदं तद्वत् तथा कृते प्रसिध्यति ॥ १८९
मध्यपतितन्यायश्च पुनरिह प्रवर्त्तते ।
गृह्यते उभशब्दश्चेत् उभकौ चापि गृह्यते ॥ १९०
यथास्थितं स्थितं द्वित्वं द्वित्वमिह न हन्यते ।
उभशब्दो यथा द्वित्वे स्यादुभकौ तथैव च ॥ १९१

"कः" प्रत्ययो यदा तत्र द्वित्वं तदा विहन्यते ।
कः प्रातिपदिकाद् वाह्यो हन्ति द्वित्वं तथा च कः ॥ १९२
द्वित्वं यदा परित्यक्तमथ श्चान्यो भवेत्तदा ।
अवयवी भवेदर्थस्तदर्थोऽपि च दृश्यते ॥ १९३

उभयधी यदा चार्थः प्रत्ययः स्यादयच् तदा ।
"उभादि"ति स्थितं सूत्रं तयपः स्यादयच् तथा ॥ १९४
परे तसि यथा चायच् परे त्रे स्यादयच् यथा ।
"उभयतो" यथा सिध्ये "दुभयत्र" यथा पुनः ॥ १९५
इहापि स्यादयच् तद्वद् कप्रत्यये परे सति ।
"उभयकौ" पदं सिध्येदयच् यदि तथा भवेत् ॥ १९६
अयजिह परे स्याच्चेत् उभयकौ पदं भवेत् ।
"उभकौ" न तदा च स्यात् "उभकौ" च न लभ्यते ॥ १९७

"उभयोऽन्यत्र" वेतीह बाधकं च स्थितं पुनः ।
अन्यत्र च पुनर्द्वित्वाद् भवेदयच् यथोभयम् ॥ १९८

## (२) उभय

उभयं स्याद् यदा शब्दः जश् इह च परे तदा ।
"अयच्" स्यात् "तयपः" स्थाने स्थानिवच्च भवेदयच् ॥ १९९
"अयच्" स्यात् स्थानिवद् यदा "तयप्"वच्च भवेत्तदा ।
"तयपि" स्याद् यथा कार्य्यम्"अयचि" स्यात् तथैव च ॥ २००
"प्रथमे"ति स्थितं सूत्रं "तयप्" तत्र च तिष्ठति ।
जशि परे विभाषा च सर्व्वनाम भवेत्तदा ॥ २०१
"अयच्" यदा भवेदत्र अनारब्धो विधि र्भवेत् ।
नित्यं तस्मात् भवेत् संज्ञा "उभये" स्यात् पदं तथा ॥ २०२

## (३) इतर-इतम

यः खलु सर्व्वनाम स्यात् स इह पठितो गणे ।
ये सन्ति सर्व्वनामानि तेषां गणो भवेदयम् ॥ २०३
"इतरः" प्रत्ययस्तत्र स इह च गणे धृतः ।
"इतमः" प्रत्ययस्तत्र स चापि च धृतो गणे ॥ २०४
"इतरेण" इतमान्तः पुनरिह धृतो भवेत् ।
"इतमेन" इतमान्तो धृतो भवेत्तथैव च ॥ २०५
इतरान्तो भवेद् यश्च इतमान्तो भवेच्च यः ।
स इह सर्व्वनाम स्यात् स इह सर्व्वनाम च ॥ २०६

सर्व्वनामगणे पाठात् तयोः स्यात् सर्व्वनामता ।
तदन्तश्च तदन्तश्च सर्व्वनाम भवेदिह ॥ २०७

डतरेण डतरान्त इह खलु च गृह्यते ।
डतमेन डतमान्तो गृह्यते च तथैव च ॥ २०८
प्रत्ययग्रहणे तत्र तदन्तग्रहणं भवेत् ।
परिभाषा स्थिता शास्त्रे युज्यते सा च सर्व्वथा ॥ २०९

पूर्व्वपक्षः

डतरेण डतमान्तो यदि खलु धृतो भवेत् ।
डतरान्तः पुनः स्याच्चेत् सर्व्वनाम हि संज्ञया ॥ २१०
डतमेन डतमान्तो यदि धृतो भवेत् पुनः ।
डतमान्तः पुनश्चेत् स्यात् सर्व्वनाम च संज्ञया ॥ २११
"तरपा" च तरबन्त स्तदा धृतो भवेदिह ।
तरबन्तस्तदा शब्दो "घ" इह स्यात् च संज्ञया ॥ २१२
"तमपा" च तमबन्तः तद्वद् धृतो भवेदिह ।
तमबन्तः पुनः शब्दः "घ"स्तथा स्याच्च संज्ञया ॥ २१३
शुक्लतरस्तदा "घः" स्यात् कृष्णतरस्तदा च "घः" ।
दृढतरस्तदा "घः" स्यात् दीर्घतरस्तदा च "घः" ॥ २१४

( उत्तरपक्षः )

न च तथा भवेदत्र न स न्यायः प्रयुज्यते ।
परिभाषा स्थिता शास्त्रे सा हि मान्या भवेन्हि ॥ २१५

संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति (प)

संज्ञाविधौ च कर्त्तव्ये तदन्तग्रहणं न हि ।
प्रत्ययेन प्रत्ययान्तो न तत्र गृह्यते खलु ॥ २१६
न हि सुपा सुबन्तं स्यात् न तिङन्तं तिङा पुनः ।
सुबन्तं स्यात् तिङन्तं स्याद् "अन्त" शब्दो हि युज्यते ॥ २१७
"सुप्तिङन्तं पदं" सूत्रं तदिह ज्ञापकं मतम् ।
न "तदन्तो" भवेत् "तेन" "अन्त"शब्दो हि योजितः ॥ २१८

( पूर्व्वपक्षः )

इहापि च भवेत् संज्ञा संज्ञाविधिरिहापि च ।
तदन्तग्रहणं तस्मादिहापि च न शोभनम् ॥ २१९

( उत्तरपक्षः )

युक्ता हि भवतां युक्ति र्वाग् भवतां गरीयसी ।
संज्ञाविधि र्भवेदेष न तत्र संशयः स्थितः ॥ २२०
तथापि केवलं संज्ञा नेह शास्त्रे प्रयुज्यते ।
न संज्ञिनं विना संज्ञा न दिवा तपनं विना ॥ २२१
एक इह तरप् शास्त्रे न श्रूयते न दृश्यते ।
एक इह तमप् शास्त्रे न दृश्यते न युज्यते ॥ २२२
तदन्तग्रहणं तस्मादगत्या च भवेद् गतिः ।
तदन्तग्रहणं विना न गतिरन्यथा सखे ॥ २२३

(४) अन्यतर-अन्यतम

"अन्यतर" स्थितः शब्दः "अन्यतम" स्थितः पुनः ।
तौ द्वौ प्रकृतिभूतौ च न व्युत्पन्नौ मतौ हि तौ ॥ २२४
विषयः स्याद् यदा द्वित्वं बहुत्वं विषयो यदा ।
निर्धारणे तदा तौ द्वौ स्वभावाच्च तथा गतिः ॥ २२५

(५) त्व त्व

अदन्तौ समरूपौ तौ अन्यार्थे तौ समार्थकौ ।
उदात्तश्च भवेदकः अनुदात्तः परो भवेत् ॥ २२६
त्वत् इति च भवेच् शब्दः तान्तः शब्दो भवेच्च सः ।
स इह च पृथक् शब्दः इति प्राहुः परे पुनः ॥ २२७

(६) सम

"सम" तत्र स्थितः शब्दः "सर्व"वाची भवेच्च सः ।
यदा "सर्व" भवेदर्थो भवेच्च सर्वनामता ॥ २२८
"तुल्या"र्थश्चेत् तथा न स्यात् "भुवन"वत् भवेत्तदा ।
"यथासंख्यं" स्थितं सूत्रं "समानाम्" च पदं मुनेः ॥ २२९

१।४।७५-२७ श्लोकाः

( २०३-२२९ श्लोकाः )

२१८। पूर्व-पर-अवर-दक्षिण-उत्तर-अपर-अधराणि व्यवस्थायाम् असंज्ञायाम् । १।१।३४

यदा देशो यदा कालः पुनरिह प्रतीयते ।
एतानि सर्वनामानि तदा खलु भवन्ति च ॥ २३०

जशिह चेत् परे तत्र सा संज्ञा स्यात् विभाषया ।
"पूर्व्वाः" भवेद् यथाप्राप्तं "पूर्व्वे" भवेद् विकल्पतः ॥ २३१
देशः कालो न चेदर्थः न सा संज्ञा परे जशि ।
"दक्षिणा गाथका"स्तत्र न तदर्थस्तथा न ॥ २३२
संज्ञा यदि भवेदर्थः तदा सा न परे जशि ।
"उत्तराः कुरव"स्तत्र संज्ञा हि स्यात् ततश्च न ॥ २३३

२१९ । स्वमज्ञातिधनाख्यायाम् । १।१।३५

न ज्ञातिश्चेत् भवेदर्थो न चेदर्थो भवेद् धनम् ।
"स्व" इत्यस्य विभाषा स्यात् तथा संज्ञा परे जशि ॥ २३४
नित्या प्राप्ता भवेत् संज्ञा जशि परे विभाषया ।
"स्वे पुत्रा"श्च भवेदत्र "स्वाःपुत्रा"श्च तथा भवेत् ॥ २३५
"स्वे गाव"श्च भवेत्तद्वत् "स्वा गावश्च भवेत्तथा ।
"आत्मीया"श्च भवेदर्थ स्तस्मिन्नर्थे प्रयुज्यते ॥ २३६
ज्ञातिर्यदि तदा "स्वाः" स्यात् संज्ञा तदा न वर्त्तते ।
धनं यदि तदा "स्वाः" स्यात् न संज्ञा स्यात् तदापि च ॥ २३७
"धूमायन्ते इवाश्लिष्टा प्रज्ज्वलन्तीव संहताः ।
उल्मूकानीव मेऽमी स्वा ज्ञातयो भरतर्षभ ॥"
"प्रभूताः स्वा न दीयन्ते" धने भवेन्निदर्शनम् ।
"प्रभूताः स्वा न भुज्यन्ते" तथैव च भवेद्ध धने ॥ २३८

२२० । अन्तरं बहिर्योगोपसंव्यानयोः । १।१।३६

अर्थो यदा बहिर्योगः परिधानं यदा पुनः ।
"अन्तरं" सर्व्वनाम स्यात् विभाषा तु परे जशि ॥ २३९
नित्या प्राप्ता भवेत् संज्ञा जशि परे विभाषया ।
स्याद् "'अन्तरा' गृहा"स्तत्र स्याद् "'अन्तरे' गृहाः" पुनः ॥ २४०
"अन्तरे शाटका"श्च स्याद्द "अन्तरे शाटका"स्तथा ।

अपूरीति च वक्तव्यम् (वा)

"अन्तरायां पुरी"ति स्याद् इह संज्ञा न युज्यते ॥ २४१

२२१। पूर्व्वादिभ्यो नवभ्यो वा। ७।१।१६

यदा "ङसि" भवेत् "स्मात्" च यदा "ङे" "स्मिन्" भवेत्तदा।
पूर्व्वादिभ्यो नवभ्यो वा पदं भवेत् तथा पुनः॥ २४२
"पूर्व्वस्मात्" स्यात् पदं तत्र "पूर्व्वात्" पदं भवेदपि।
"पूर्व्वस्मिन्" च पदं तत्र पदं "पूर्व्वे" तथा भवेत्॥ २४३
बहुव्रीहिर्यदा कार्य्यो न सर्व्वनामता तदा।
यदा "त्वकं पिता यस्य" स्यात् "त्वत्कपितृक"स्तदा॥ २४४
समासात् प्रागेव वाक्ये निषिद्धा सर्व्वनामता।
अन्यथा प्रत्ययश्चाकच् वाक्येऽपि च भवेदिह॥ २४५
श्रूयेत स समासेऽपि पुनरकच् तदा खलु।
"अतिभवका"नित्यत्र समासे श्रूयते यथा॥ २४६
रूपं "त्वकत्पितृक"श्च बहुधा श्रूयते भुवि।
रूपं "मकत्पितृकश्च" पुनर्लोके प्रयुज्यते॥ २४७
एतद्रूपं भवेदिष्टमिति भाष्ये पतञ्जलिः।
भाष्यकार इदं सूत्रं प्रत्याचख्यौ ततः पुनः॥ २४८
यथोत्तरं मुनीनाञ्च प्रामाण्यं स्वीकृतं नये।
गृह्यते च पदं तस्मात् तथाविधमिति स्थितिः॥ २४९

संज्ञोपसर्जनीभूतास्तु न सर्व्वादयः (प)

यदा संज्ञा भवेदर्थस्तदा न सर्व्वनामता।
"सर्व्व" इति यदा नाम न सर्व्वनामता तदा॥ २५०
स्यादुपसर्जनं यत्र तत्र न सर्व्वनामता।
"अतिसर्व्व" स्तथा हि स्यात् तस्मान्न सर्व्वनाम सः॥ २५१
यदा संज्ञा भवेदर्थः यदा स्यादुपसर्जनम्।
अर्थभेदस्तदा तत्र अर्थभेदो न गृह्यते॥ २५२
भिन्नार्थे चेत् स्थितः शब्दः स इह च न गण्यते।
भिन्नार्थे च स्थितस्येह न भवेत् सर्व्वनामता॥ २५३

सर्व्वनाम महासंज्ञा मुनिनेह प्रयोजिता।
अगुणाः पुनः शब्दा गणे चापि निवेशिताः॥ २५४

यदर्थे सर्व्वनाम यः तदर्थे स गणे धृतः।
उपयोगो यथा यस्य तथा तस्य धृतिर्गणे॥ २५५
अर्द्धमिति यदा चार्थः "नेम" स्यात् सर्व्वनाम च।
तदर्थे च पुन"र्नेम" गणे तत्र प्रदर्शितः॥ २५६

भिन्नार्थे चेत् स्थितः शब्दो न गृह्यते पुनश्च सः।
न सर्व्वनामता तस्य कार्य्यकाले भवेदिह॥ २५७
"स्मिन्नि"त्यादि तदा न स्यात् "अड्डादि"न युज्यते।
संज्ञाकार्य्यं गणकार्य्यं तदा न स्यादिति स्थितिः॥ २५८

**२२३। तृतीया समासे। १।१।३०**

स्यात् तृतीयासमासश्चेत् तदा संज्ञा भवेन्न च।
भवेन्न मासपूर्व्वाय न संज्ञा च प्रवर्त्तते॥ २५९

**२२४। द्वन्द्वे च। १।१।३१**

समासश्चेद् भवेद् द्वन्द्वः संज्ञा पुनर्न युज्यते।
भवेत् पूर्व्वापराणाञ्च न च संज्ञा भवेदिह॥ २६०

**२२५। विभाषा जशि। १।१।३२**

नित्ये द्वन्द्वे निषेधः स्यात् परे जशि विभाषया।
कतरकतमे तत्र कतरेकतमास्तथा॥ २६१

**२२६। प्रथम-चरम-तय-अल्प-अर्द्ध-कतिपय-नेमाश्च। १।१।३३**

जशि परे विभाषा स्यात् संज्ञा चैषामिति स्थितिः।
"प्रथमाः" स्याद् यथा प्राप्तं "प्रथमे" स्याद् विभाषया॥ २६२

विभाषाप्रकरणे तीयस्य वा ङित्सु सर्व्वनामसंज्ञा (वा)

तीयस्य च भवेत् संज्ञा ङित् परे चेत् विभाषया।
"द्वितीयाय" पदं तत्र "द्वितीयस्मै" तथा भवेत्॥ २६३

इति—

सर्व्वनामसंज्ञाप्रकरणम्।

**२२७। जराया जरसन्यतरस्याम्। ७।२।१०१**

अजादिका विभक्तिश्चेत् परे तत्र प्रवर्त्तते।
"जरायाः" स्याद् "जरस्" तत्र स आदेशो विभाषया॥ २६४

निर्जर = निर्जरस्

उत्तरपक्षः

"जरा" यदा भवेत्तत्र तदा "जरस्" भवेद् यदि ।
"निर्जर" स्याद् यदा शब्दो "निर्जरस्" स्यात् तदापि च ॥ २६५
यथा यथा भवेत् "तस्य" "तदन्तस्य" तथा तथा ।
परिभाषा स्थिता शास्त्रे सा प्रमाणं भवेदिह ॥ २६६

पदाङ्गाधिकारे तस्य तदन्तस्य च (प)

पदं चेद् विषयस्तत्र अङ्गं चेद् विषयो भवेत् ।
"तस्मिन्" भवेद् यथा तत्र "तदन्ते"ऽपि भवेत्तथा । २६७

पूर्व्वपक्षः

"जरस्" यः स्यात् समादेश स चानेकाल् भवेदिह ।
"अनेकाल् शित्" स्थितं सूत्रं "सर्व्वादेशो" भवेत्तथा ॥ २६८
"सर्व्वंश"श्चेत् पुनः शब्द इह खलु धृतो भवेत् ।
"निर्जर" स्यात् तदा शब्दस्तस्यैवेह भवेद् "जरस्" ॥ २६९
"अंशस्य" न समादेशः "सर्व्वस्य" च भवेदिह ।
"जराया" न "जरस्" तत्र "निर्जर"स्य भवेद् "जरस्" ॥ २७०

उत्तरपक्षः

"निर्जर"स्य न "जरस्" स्यान "जराया" हि "जरस्" भवेत् ।
"समग्र"स्य न तावत् स्याद् "अंश"स्यैव भवेत् खलु ॥ २७१
यावानंशो निर्द्देशेन समाकृष्टो भवेदिह ।
तावानंशो भवेद् ग्राह्यो न चाल्पं नाधिकं ततः ॥ २७२
परिभाषा स्थिता शास्त्रे सा प्रमाणं भवेदिह ।
परिभाषा भवेदत्र यथा परे प्रदर्शिता ॥ २७३

निर्द्दिश्यमानस्यादेशा भवन्ति (प)

निर्द्दिष्टस्य समादेश इह शास्त्रे विधिर्भवेत् ।
स च विधिर्भवेद् योज्य इहापि प्रकृते पुनः ॥ २७४
इह "जर" भवेदंशः "अंशो" निर्द्दिश्यते खलु ।
"अंश"स्य स्यात् समादेशः "सर्व्व"स्य न भवेत् पुनः ॥ २७५
"जराया" हि "जरस्" तस्मात् "निर्जर"स्य "जरस्" तु न ।
"अंश"स्य हि समादेशः "समग्र"स्य भवेन्न च ॥ २७६

पूर्व्वपक्षः

सूत्रं च "जराया जरस्" आकारान्ता स्थिता "जरा"।
आकारान्ता स्थिता या सा तस्या एव तथा भवेत् ॥ २७७
"निर्जर" हि स्थितः शब्द आकारान्ता "जरा" च न।
कथं तर्हि समादेशो भवेद् "जरस्" मते एव ॥ २७८

उत्तरपक्षः

एकांशेन विकृतिश्चेत् शब्दस्येह भवेत् क्वचित्।
विकृतेन तदंशेन शब्दस्य स्याद् न चान्यता ॥ २७९
यः शब्दश्च स्थितः पूर्व्वं स शब्दश्च स्थितः परे।
एकांशेन विकृतः स्यात् न विकृतः समग्रतः ॥ २८०
परिभाषा स्थिता शास्त्रे सा प्रमाणं भवेदिह।
परिभाषा भवेद् ग्राह्या सा गृह्यते मया पुनः ॥ २८१

एकदेशविकृतस्यानन्यत्वात् (७)

एकदेशविकृतस्य न चान्यत्वं भवेदिह।
अविकृते गृहीतो यो विकृतेऽपि स गृह्यते ॥ २८२
"जरा" यदि विकारेण "जर" भवेद् इह क्वचित्।
"जरा" एव भवेद् "जर" "निर्जर" गृह्यते ततः ॥ २८३
सुतो यदि विकारेण खञ्जतां भजते क्वचित्।
स सुतः स सुतो हि स्यात् सुत एव स गृह्यते ॥ २८४

निर्जर स्याद् यदा शब्दः प्रत्यय औ परे यदा।
निर्जरस् स्यात् समादेशो निर्जरसौ पदं भवेत् ॥ २८५
निर्जर स्यात् यदा शब्दो प्रत्ययो जश् परे यदा।
निर्जरस् स्यात् समादेशो निर्जरसः पदं भवेत् ॥ २८६

निर्जर स्याद् यदा शब्दः प्रत्ययः टा परे यदा।
निर्जरस् स्यात् समादेशो निर्जरसा पदं भवेत् ॥ २८७
"इन" "आत्" च विधिः पूर्व्वो "जरस्" विधिः परो भवेत्
इनादिकं च बाधित्वा जरस् इह प्रवर्त्तते ॥ २८८
निर्जरसे पदं तद्वत् निर्जरसः पदं तथा।
हलादौ च परे तत्र "भुवन"वत् भवेत् पदम् ॥ २८९

पूर्व्वविप्रतिषेधेन "इन" 'आत्' च प्रवर्त्तते ।
सन्निपातपरिभाषा न च नित्या भवेत् पुनः ॥ २९०
इत्यपि च मतं तत्र केषाञ्चिन्न स्थितं पुनः ।
वृत्तिकृता स्ववृत्तौ तत् मतं पुनः समर्थितम् ॥ २९१
पदं स्याद् निर्जरसिन "इन" यदा परे भवेत् ।
निजरसात् पदं च स्याद् "आत्" परे चेत् प्रवर्त्तते ॥ २९२
निर्जरसा पदं न स्यात् निर्जरसः पदं च न ।
तेषां मते पदं तत् तत् न हि खलु प्रसिध्यति ॥ २०३
भिस् यदा स्यात् परे तत्र निर्जरसैः पदं भवेत् ।
रूपान्तरं तथाभूतं तैरिह च प्रदर्शितम् ॥ २९४
अन्यदपि पदं दत्तं तदनुसारिभिः पुनः ।
निर्जरस्य पदं षष्ठ्यां भवेत्तदनुसारिणाम् ॥ २९५
न रुचिरं भवेत् सर्व्वं सर्व्वं न सम्मतं भवेत् ।
तत् तद् भाष्यविरुद्धं स्यात् न सम्मतं ततो हि नः ॥ २९३

४।४।७५-३२ श्लोकाः
( २९५-२९६ श्लोकाः )
२९।१।७४-६८ श्लोकाः

२२८ । पद्-दत्-नस्-मास्-हृत्-निश्-असन्-यूषण्-दोषण्-यकन्-शकन्-उदन्-आसन्-शस्-प्रभृतिषु । ६।१।६३

पादस्य पद् भवेदत्र दन्तस्य "दत्" तथा भवेत् ।
मासस्य मास् भवेत्तद्वत् हृदयस्य भवेच्च हृत् ॥ २९७
निशायाः निश् भवेत्तद्वत् असृजः स्यादसन् तथा ।
यूषस्य च भवेद् यूषण् दोस् दोषणस्तथा भवेत् ॥ २९८
यकृतः स्यात् यकन् तद्वत् शकृतः स्यात् शकन् पुनः ।
उदन् स्यादुदकस्येह आस्यस्यासन् भवेत्तथा ॥ २९९
शसादिश्चेत् परे तत्र तथादेशो विभाषया ।
पदः पादान् भवेदत्र पादेन च पदा तथा ॥ ३००
पादाभ्यां स्यात् तथा पद्भ्यां पादैः पद्भिस्तथा भवेत् ।
अन्यत्रापि भवेदेवमूहनीयं यथायथम् ॥ ३०१

२२९। सुट् अनपुंसकस्य। १।१।४३

प्रत्याहारो भवेत् सुट् च पञ्चकं च धृतं भवेत्।
सर्व्वनामस्थानं तत् स्यात् क्लीवे तथा भवेन्न च॥ ३०२
सु औ जश् च त्रयं तत्र अम् औट् तत्र द्वयं पुनः।
पञ्चकं स्यात् तथा तत्र तत्पञ्चकं च गृह्यते॥ ३०३

२३०। स्वादिष्वसर्व्वनामस्थाने। १।४।१७

सर्व्वनामस्थानं स्याच्चेत् स्वादिकं चेत् परे स्थितम्।
यदिह च स्थितं पूर्व्वं तदुच्यते पदं खलु॥ ३०४
राजन् इति यदा पूर्व्वे भ्यमिह च यदा परे।
राजन् शब्दो भवेदत्र पदमिति च संज्ञया॥ ३०५

२३१। यचि भम्। १।४।१८

स्वादिषु यत् यकारादि स्वादिषु मदजादिकम्।
तदिह चेत् परे तत्र पूर्व्वं भः स्यादिति स्थितिः॥ ३०६

२३२। आकड़ाड़ादेका संज्ञा। १।४।१

कड़ाडाः कर्मधारेय इतः परं भविष्यति।
एकस्य स्यादेका संज्ञा ततः प्राक् स्यात् तथा पुनः॥ ३०७
"ह्रस्वं खलु" स्थितं सूत्रं ह्रस्वं लघु भवेदिह।
"संयोगे गुरु" सूत्रं स्यात् ह्रस्वस्य गुरता भवेत्॥ ३०८
एक एव स्वरस्तत्र लघु भंवेद्व भवेद्व गुरुः।
न युज्यते द्वयं तत्र संज्ञा चैका प्रवर्त्तते॥ ३०९
शमादिकं यदा स्यादच् द्वयं तत्र प्रयुज्यते।
भसंज्ञा पदसंज्ञा च द्वयं प्राप्ता भवेदिह॥ ३१०
एका संज्ञा भवेदत्र भसंज्ञा च प्रयुज्यते।
जश्त्वं तेन न तावत् स्यात् दतः दता तथा भवेत्॥ ३११
हलादि चेत् परे तत्र पदसंज्ञा प्रयुज्यते।
तदा पुनर्भवेत् जश्त्वं दद्भ्यां पदं तदा भवेत्॥ ३१२

२३३। भस्य। ६।४।१२९

इतः परं भवेद्-यद् यत् भस्य भवेदिति स्थितिः।
यावदन्तं तु षष्टस्य अधिकारः स्थितो भवेत्॥ ३१३

२३४। अल्लोपोऽनः। ६।४।१३४

अन्नित्यन्तो यदा भः स्यादकारश्च विलुप्यति।
पदं भवेद् यथा तत्र तथा परे प्रदर्शितम्॥ ३१४

२३५। रषाभ्यां नो णः समानपदे। ८।४।१

रेकारश्चेत् भवेत् पूर्व्वे षकारश्चेत् भवेत् पुनः।
एकपदे नकारस्य तदा णः स्यादिति स्थितिः॥ ३१५
षकारश्च स्थितः पूर्व्वे णत्वे पूष्णा भवेदिह।
षकारश्च स्थितः पूर्व्वे णत्वे पूष्णास्तथा भवेत्॥ ३१६

पूर्व्वपक्षः

"अच"श्चेति स्थितं सूत्रं तत्र "पूर्व्वविधौ" पदम्।
"पूर्व्वस्माद् विधि"रित्येवं व्याख्या तस्य स्थिता पुनः॥ ३१७
इह शब्दः स्थितो "पूषण्" अकारो विद्यते खलु।
"अल्लोपः—"युज्यते तत्र अकारो लुप्यते तथा॥ ३१८
स लोपः स्थानिवत् तावद् अकारो विद्यते ततः।
अकारः स्यात् यदा तत्र "रषाभ्याम्" च न युज्यते॥ ३१९
"रषाभ्यां" चेद् न युक्तं स्यात् णत्वमपि न लभ्यते।
पूषण्शब्दे णकारता तस्मात् तत्र न सिध्यति॥ ३२०

उत्तरपक्षः

भवतु वा तथा व्याख्या न तत्र विमतिर्मम।
न तथा चेद् भवेद् णत्वं भवतु नैव वा तथा॥ ३२१
एषः पक्षो न चेद् ग्राह्यः परः पक्षः स्थितः पुनः।
तस्मिन् पक्षे भवेत्तत्र णत्वं खलु यथायथम्॥ ३२२
परं तत्र स्थितं सूत्रं तत् तत्र च प्रयुज्यते।
सूत्रेण च पुनस्तेन णत्वं तत्र प्रवर्त्तते॥ ३२३
"अट्कुप्वाङ्नुम्व्यवाये"ऽपि सूत्रं योज्यं भवेदिह।
अकारस्य व्यवायेऽपि णत्वं तेन प्रवर्त्तते॥ ३२४
"रषाभ्यां" चेद् न योज्यं स्याद् "अट्कुप्वा" तु प्रयुज्यते।
पूर्व्वेण चेत् न णत्वं स्यात् नूनं स्यात् तत् परेण च॥ ३२५

वस्तुतः स्थानिवद्भावो न हि तत्र प्रवर्त्तते ।
न च पूर्व्वत्रासिद्धीये स्थानिवत्त्वं प्रयुज्यते ॥ ३२६
वार्त्तिकं च स्थितं तत्र तत् प्रमाणं भवेन्मम ।
वार्त्तिकं यत् भवेदत्र दर्शयामि परे च तत् ॥ ३२७

पूर्व्वत्रासिद्धीये न स्थानिवत् (वा)

पूर्व्वत्रासिद्धमित्येतत् शास्त्रं यत्र प्रवर्त्तते ।
न तत्र स्थानिवद्भाव आश्रियते विचक्षणैः ॥ ३२८

पूर्व्वपक्षः

न च पूर्व्वत्रासिद्धीये स्थानिवत्त्वं प्रयुज्यते ।
इति यद् भवता प्रोक्तं तन्न न्याय्यं भवेदिह ॥ ३२९
संयोगादेर्विलोपश्चेत् लत्वं णत्वं भवेद् यदि ।
स्थानिवत्त्वं भवेत् सिद्धं न च बाधा प्रवर्त्तते ॥ ३३०
वार्त्तिकं भवतां स्याच्चेत् वार्त्तिकं स्याद्द ममापि च ।
ममापि च प्रमाणं स्यात् वार्त्तिकं च यथा परम् ॥ ३३१

तस्य दोषः संयोगादि-लोप-लत्व-णत्वेषु (वा)

संयोगादेर्विलोपे च लत्वे णत्वे तथैव च ।
स्थानिवत्त्वनिषेधस्य पुनर्भवेत् निषेधनम् ॥ ३३२
निषेधस्य निषेधश्चेत् पुनस्तत्र प्रवर्त्तते ।
स्थानिवत्त्वं भवेत् सिद्धं स्थानिवत्त्वं प्रसिध्यति ॥ ३३३
निषेधेन निषेधश्चेत् भवेदिह समीक्षतः ।
निषेधो न तदा तिष्ठेत् स्थानिवत्त्वं च तिष्ठति ॥ ३३४
अपि पूर्व्वत्रासिद्धीये स्थानिवत्त्वं भवेत् सताम् ।
लत्वे णत्वे तथा तत्र संयोगादे विलोपने ॥ ३३५
प्रकृते विषयो णत्वं स्थानिवत्त्वं भवेत्ततः ।
अकारः स्थानिवत् तत्र "रषाभ्यां" च न युज्यते ॥ ३३६
"रषाभ्यां" चेद् न युक्तं स्यात् णत्वमपि न सिध्यति ।
मूषण् शब्दे पदं यत् स्यात् न तत्र स्यात् णकारता ॥ ३३७

उत्तरपक्षः

भवतु स्थानिवत्त्वं वा गृह्यते भवतां मतम् ।
"अट्कुप्वां" च स्थितं सूत्रं तेन गतिर्भवेदिह ॥ ३३८

अकारस्य व्यवायेऽपि शास्त्रं तत्र प्रवर्त्तते ।
पूर्व्वमेव मया प्रोक्तं पुनर्ब्रूमि तदेव हि ॥ ३३६

६।१ ७५-२३ श्लोकाः
(३१७-३३६ श्लोकाः)

२३६ । नलोपः प्रातिपदिकान्तस्य । ८।२।७

स्यात् प्रातिपदिकं यत्र नकारान्तं भवेच्च यत् ।
इह तस्य नकारस्य भवेल्लोप इति स्थितिः ॥ ३३८
असिद्धत्वात् नकारस्य न दीर्घता भवेदिह ।
एत्वमपि न तावत् स्यात् ऐत्वमपि भवेन्न च ॥ ३३९
यूषभ्यां स्यात् पदं तत्र यूषभिः च पदं भवेत् ।
यूषभ्यः स्यात् पदं तत्र पदयूह्यं परं बुधैः ॥ ३४०

२३७ । विभाषा ङिश्योः । ६।४।१३६

ङौ परे चेद् भवेदत्र शी परे चेद् भवेत् पुनः ।
अकारस्य तदा लोपो विभाषया भवेदिह ॥ ३४१
यूष्णि स्यात् च पदं तत्र यूषणि स्यात् तथा पदम् ।
"भुवन"वत् भवेच् शेषम् ऊह्यं बुधैर्यथायथम् ॥ ३४२

२३८ । संख्या-वि-साय-पूर्वस्य अह्नस्य अहन् अन्यतरस्यां ङौ । ६।३।११०

संख्या यदि भवेत् पूर्व्वे "वि" पूर्व्वे चेद् भवेदिह ।
"साय" यदि भवेत् पूर्व्वे "अह्नः" यदि परे स्थितः ॥ ३४३
अहन् तदा समादेशः ङौ परे स्याद् विभाषया ।
द्व्यहनि स्यात् पुनर्द्व्यह्नि विभाषा च पदद्वयम् ॥ ३४४
द्व्यह्ने चापि पदं तत्र पदत्रयं तथा भवेत् ।
द्व्यह्नि स्याद् द्व्यहनि स्याच्च पदं द्व्यह्ने भवेत्तथा ॥ ३४५
सायाह्नि स्यात् पदं तत्र सायाहनि तथा भवेत् ।
सायाह्ने च पदं तत्र सर्व्वत्रैव पदत्रयम् ॥ ३४६

इति—
अदन्ताः

## अथ आबन्तप्रकरणम्

### विश्वपा

"विश्वपाः" स्याद् यदा शब्दः प्रत्ययः "सु" यदा पुनः ।
विश्वपाः स्यात् पदं तत्र न विशेष इह स्थितः ॥ ३४७
विश्वपा औ यदा तत्र वृद्धिरेचि प्रवर्त्तते ।
इह खलु भवेद् वृद्धिः विश्वपौ स्यात् पदं तथा ॥ ३४८
विश्वपा जश् यदा तत्र "अकः" सूत्रं प्रयुज्यते ।
अकः सवर्णे दीर्घः स्यात् विश्वपाः स्यात् पदं तदा ॥ ३४९

**२३९ । दीर्घाज्जसि च । ६।४।१०५**

जश् इह चेत् परे दीर्घात् इजिह चेत् परे भवेत् ।
पूर्व्वसवर्णदीर्घो न प्रथमयोर्भवेत्तदा ॥ ३५०
यदा दीर्घः निषिद्धः स्यात् वृद्धिरेचि प्रवर्त्तते ।
विश्वपौ स्यात् पदं तत्र यथापूर्व्वं प्रदर्शितम् ॥ ३५१
गौर्य्यौ गौर्य्यः पदं तत्र तत्र सूत्रं प्रवर्त्तते ।
इह पुनरुपन्यस्तं निषेधो हि प्रयोजनम् ॥ ३५२

विश्वपा अम् यदा तत्र सूत्रम् "अमि" प्रयुज्यते ।
विश्वपाम् स्यात् पदं तेन तदेकवचनं भवेत् ॥ ३५३
विश्वपा औट् यदा तत्र विश्वपौ स्यात् पदं तदा ।
साधनं तु पुनस्तस्य पूर्व्ववत् स्यादिहापि च ॥ ३५४

**२४० । आतो धातोः । ६।४।१४०**

भस्याङ्गस्य भवेल्लोपो धातोः "आ" चेत् पदान्ततः ।
"अलोऽन्त्यस्य" स्थितं सूत्रं यकारश्च विलुप्यति ॥ ३५५
विश्वपाः शस् यदा तत्र विश्वपः स्यात् पदं तदा ।
आकारस्य भवेल्लोपः अस् शशश्च प्रयुज्यते ॥ ३५६
विश्वपा स्यात् यदा टा स्यात् तथैव च पदं भवेत् ।
अन्यत्रापि भवेदेवमूहनीयं यथायथम् ॥ ३५७

"हाहा शस्" स्यात् यदा तत्र "तस्माच्छसः" प्रयुज्यते ।
तथा तत्र भवेद् णत्वं हाहान् पदं तथा भवेत् ॥ ३५८
हाहा टा स्याद् यदा तत्र भवेत् सवर्णदीर्घता ।
हाहा पदं भवेतत्र "हाहै" वृद्धिर्यदा च ङे ॥ ३५९

ङसिङसोर्भवेद् दीर्घः पदं "हाहाः" तदा भवेत् ।
औसि वृद्धि भवेद् "हाहौ" ङौ "हाहे" स्याद् यदा गुणः ॥ ३६०
अधातोरपि क्वचिन्न आकारोपि विलुप्यते ।
"आतोः" योगविभागः स्यात् "क्तः" भवेन्न भवेत् "हनः" ॥ ३६१

इत्यादन्ताः

३०।१।७४-६५ श्लोकाः
रात्रिः ६ घटिकाः

## अथ इदन्तप्रकरणम्

यदा "हरि" यदा "सु" स्यात् "हरिः" स्यान्न पदं तदा ।
प्रक्रियायाः विशेषो न क्वचिदिह प्रवर्त्तते ॥ ३६२
यदा "हरि" यदा "औ" स्यात् "प्रथमयोः" प्रयुज्यते ।
पूर्व्वसवर्णदीर्घः स्यात् "हरी" स्यान्न पदं तदा ॥ ३६३
यदा "हरि" यदा "जश्" स्यात् सूत्रं परं प्रवर्त्तते ।
तेनैव च पदं सिध्येत् सूत्रं भवेत् यथा परम् ॥ ३६४

### २४१ । जसि च । ७।३।१०९

ह्रस्वान्तः स्याद् यदा शब्दः जश् इह चेत् परे भवेत् ।
गुणो भवेत्तदाङ्गस्य "हरयः" स्यात् पदं तदा ॥ ३६५

### २४२ । ह्रस्वस्य गुणः । ७।३।१०८

परं यदा सम्बुद्धिः स्यात् ह्रस्वस्य स्यात् तदा गुणः ।
"हे हरि सु" यदा तत्र गुणे "हरे" पदं भवेत् ॥ ३६६
एङ् ह्रस्वादिति सम्बुद्धौ सुलोपः स्यात् पुनर्विधिः ।
तेनैवेह सुलोपः स्यात् तदा "हरे" विना च "सुम्" ॥ ३६७
यदा हरि यदा स्यादम् पूर्व्वरूपं भवेदिह ।
"हरिम्" पदं तदा तत्र तदेव च पदं मतम् ॥ ३६८
यदा हरि यदा औट् स्यात् "प्रथमयोः" प्रयुज्यते ।
पूर्व्वसवर्णदीर्घः स्यात् "हरी" स्यान्न पदं तदा ॥ ३६९
यदा हरि यदा शस् स्यात् पूर्व्वसवर्णदीर्घता ।
"तस्माच्छसो—" भवेद् सत्वं "हरीन्" तदा पदं भवेत् ॥ ३७०

२४३। लोपे ख्यसधि। १।४।७

इकारान्तो यदा ह्रस्वः यदा स्त्री न भवेदिह ।
उकारान्तो यदा ह्रस्वः यदा स्त्री न भवेत् पुनः ॥ ३७१
भवेन्न स्त्री नदी न स्यात् एवं शब्दो यदा स्थितः ।
तदा तत्र घिसंज्ञा स्यात् सखिशब्दे तथा च न ॥ ३७२

२४४। आङोनास्त्रियाम्। ७।३।१११

आङो ना स्यात् घेः परस्य स्त्रियां तथा भवेन्न च ।
आङिह च प्राचां संज्ञा टा तथा च मता भवेत् ॥ ३७३
हरि टा स्याद्व यदा तत्र "हरि ना" स्यात् तदा पुनः ।
"अट्कुप्वाङ्" च भवेद् णत्वं हरिणा स्यात् पदं तदा ॥ ३७४
आदेशो न भवेद्व योज्यः स्त्रियां शब्दो यदा स्थितः ।
मति टा चेत् न "ना" तत्र मत्या भवेत् पदं तदा ॥ ३७५

२४५। घेर्ङिति। ७।३।१२०

ङिति परे गुणो घेः स्यात् इति विधिर्भवेदिह ।
हरि ङे चेत् गुणे तत्र हरये स्यात् पुनः पदम् ॥ ३७६
घिः यदा स्यात् तदेव स्यात् अन्यत्र न तथा भवेत् ।
यदा "सखि" न घिः प्राप्तः सख्ये भवेत् गुणो न च ॥ ३७७
ङकार इद्व भवेद् यत्र तत्र विधिः प्रयुज्यते ।
हरि भ्याम् चेत् तदा ङित् न हरिभ्याम् स्यात् गुणो न च ।
एवं यदा स्थितस्तत्र गुणस्तत्र स्थितो भवेत् ।
हरि यदा भवेत् शब्दः गुणे हरे भवेत् तदा ॥ ३७८

२४६। ङसिङसोश्च। ६।१।११०

एङिह चेत् स्थितः पूर्व्वे परे चेदस् ङसेङसः ।
आदेशः पूर्व्वरूपं स्यात् इति स्थितिर्भवेदिह ॥ ३७९
हरि ङसि हरेः स्याच्च हरि ङस् चेत् भवेत् हरेः ।
हरि ओस चेत् यणादेशः हर्य्योः पदं तदा भवेत् ॥ ३८०
हरि यदा यदा स्याद् आम् "ह्रस्व"-इति प्रयुज्यते ।
"नामि" पुनर्भवेत् योज्यम "अट्कुप्वाङ्" च प्रवर्त्तते ॥ ३८१
नुड़ागमो भवेत् तेन पश्चाद् दीर्घो भवेदिह ।
ततः परं भवेद् णत्वं हरीणां स्यात् पदं तदा ॥ ३८२

२४७। अच्च घेः। ७।३।११९

घिसंज्ञकात् परे ङिश्चेत् ङेरौद् भवेदिति स्थितिः।
यदिह टिसंज्ञं स्यात् तस्य स्यात् तदा पुनः॥ ३८३
यदा "हरि" यदा ङिःस्यात् हर औ स्यात् तदा पुनः।
वृद्धिश्चेति भवेद् दीर्घः "हरौ" भवेत् पदं तदा॥ ३८४
हरि ओस् चेत् यणादेशो हर्योः पदं तथा भवेत्।
हरि सु चेत् हरिषु स्यात् "आदेश-" स्यात् ततश्च षः॥ ३८५

सखि

२४८। अनङ् सौ। ७।१।९३

सौ परे स्याद् अनङ् सख्युः सम्बुद्धौ न तथा भवेत्।
सखिन् सु स्याद् यदा तत्र सखन् सु स्यात् तदा पुनः॥ ३८६
ङकार इद् भवेदत्र अन्तादेशो भवेत्ततः।
"अलोऽन्त्यस्य" स्थितं सूत्रं तदिह च प्रयुज्यते॥ ३८७

२४९। अलोऽन्त्यात् पूर्व्व उपधा। १।१।६५

अलोऽन्त्याच्च यः पूर्व्वं स्यात् स उपधा भवेदिह।
सखन् इति यदा शब्दः अकार उपधा तदा॥ ३८८

२५०। सर्व्वनामस्थानेऽसम्बुद्धौ। ६।४।८

यदा सर्व्वनामस्थानं नान्ते शब्दो यदा पुनः।
उपधा स्यात्तदा दीर्घः सम्बुद्धौ न तथा भवेत्॥ ३८९
"सखन् सु" च यदा तत्र तदा दीर्घो भवेदिह।
सखान् सु च भवेद् दीर्घे सूत्रं परं ततः पुनः॥ ३९०

२५१। अपृक्त एकाल्प्रत्ययः। १।२।४१

प्रत्ययश्चेद् भवेदेकाल् अपृक्तः स इहोच्यते।
सखान् सु स्यात् यदा तत्र अपृक्तः "सु" तदा भवेत्॥ ३९१

२५२। हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्। ६।१।६८

"सु""ति"-"सि"-चेदपृक्तं हल् हलन्तात् चेत् परे स्थितम्।
तदा तस्य भवेल्लोपः प्रत्येकन्तु विधिर्भवेत्॥ ३९२
"सु""ति""सि" चेत् अपृक्तं हल् ङ्याब्भ्यो दीर्घात् परे यदि।
तदा तस्य भवेल्लोपः एकत्र "सौ" विधिर्भवेत्॥ ३९३

आवन्तात् चेत् हलन्तात् चेत् ङ्यन्ताद् चेद् वा परे यदि।
तदैव च विधिर्योज्यः न चान्यथा तथा पुन ॥ ३९४
"ग्रामणीः" स्यात् पुनः शब्दः एषां परे न भवेत् "सु"।
न सुलोपो भवेत्तस्मात् इह च "सु" स्थितो भवेत् ॥ ३९५

दीर्घादेव विधिर्योज्यः न दीर्घाच्चेत् तथा तु न।
"निष्कौशाम्बिः" न दीर्घः स्यात् सुलोपो न भवेत्ततः ॥ ३९६

सुतिसि चेत् परे तत्र तदैव स्यात् न चान्यथा।
"अभैत्सीत्" स्यात् परे ते न लोपो नापि विधीयते ॥ ३९७
तिविह न भवेदेकः सिशब्दोऽपि भवेदिह।
सिजिह न भवेद् प्राप्त इति स्थितिर्भवेत् पुनः ॥ ३९८

सुतिसि चेदपृक्तं स्यात् तदैव स्यात् न चान्यथा।
"भिनत्ति" स्यात् पदं तत्र न चापृक्तं तथा च न ॥ ३९९
"ति" यद्यपि स्थितस्तत्र न चापृक्तं भवेच्च सः।
इकारः स्याद् यदा लुप्तः तकारः स्याद् विवक्षितः ॥ ४००

हल एव भवेल्लोपो नान्यस्य स्यात् तथा पुनः।
बिभेद स्यात् पदं तत्र हल् न स्याद् "अ" न लुप्यते ॥ ४०१
"हल्ङ्याब्भ्य"श्च पदं सूत्रे हल् इह च निवेशितम्।
इह हल् वा कथं प्रोक्तं किं वा तस्य प्रयोजनम् ॥ ४०२
हलन्ताच्चेत् भवेल्लोपः लोप इह न चान्यथा।
संयोगान्तस्य लोपस्तु स्यादसिद्ध इति स्थितिः ॥ ४०३
"सखान् सु" स्याद् यदा तत्र "सखान् स" स्यात् तदा पुनः।
अपृक्तस्य सकारस्य भवेल्लोपः "सखा" तथा ॥ ४०४

२५३। सख्युरसम्बुद्धौ। ७।१।९२

णिद्वत् सर्व्वनामस्थानं सख्युरङ्गात् परं यदि।
सम्बुद्धिश्चेत् तदा न स्तात् णिद्वत् कार्य्यं तदा तु न ॥ ४०५

२५४। अचो ञ्णिति। ७।२।११५

अजन्तं चेद् भवेदङ्गं तस्य वृद्धिर्भवेदिह।
ञिति णिति विधिर्योज्यः पदं स्याच्च यथा परम् ॥ ४०६

सखायौ स्यात् सखायः स्यात् औ जस् यदि भवेदिह ।
सखायम् स्यात् सखायौ स्यात् अम् औट् यदा परे पुनः ॥ ४०७
सख्या सख्ये पदं तत्र टा ङे भवेद् यदा परे ।
घिसंज्ञा न भवेदत्र न तत् कार्य्यं ततो भवेत् ॥ ४०८

"सखि ङसि" "सखि ङस्" चेत् न घिर्न च गुणो भवेत् ।
यणादेशो भवेत् सख्यम् सूत्रं परं प्रयुज्यते ॥ ४०९

२५५ । ख्यत्यात् परस्य । ६।१।११२

"खि" "खी" यदा भवेदत्र "ति" "ती" यदा भवेदिह ।
प्रक्रियायां भवेत् "ख्य" "त्य" यणादेशः कृतो यदा ॥ ४१०
ङसि यदि परे तत्र ङस् यदि वा परे भवेत् ।
तदा ख्यत्यात् अत उत स्यात् पदं सख्युर्भवेत् तथा ॥ ४११

२५६ । औत् । ७।३।११८

इदुद्भ्यां च भवेद् ङेरौत् पदं सख्यौ भवेत् यथा ।
उकारस्यानुवृत्तिः परार्था स्यादिति स्थितिः ॥ ४१२
शेषं च हरिवद् ज्ञेयं विशेषश्च न विद्यते ।
पदं यद् यद् भवेदत्र तत्तदूह्यं पुनर्बुधैः ॥ ४१३

शोभनः सखा यस्य स सुसखा स इति स्थितिः ।
अनङ् भवेत् भवेन् णित् च अङ्गकार्य्यं भवेदिह ॥ ४१४
सुसखा स्यात् पदं तस्मात् सुसखायौ तथा भवेत् ।
सुसखायो भवेत्तद्वत् समासे न व्यतिक्रमः ॥ ४१५
"सुसखि" च तथा सखि द्वयं समं भवेन्न च ।
सर्वतो न समं कार्य्यं तस्माद् भवेदिति स्थितिः ॥ ४१६
शेष इति ततः सूत्रं पुनरिह प्रयुज्यते ।
सुसखि स्याद् घिसंज्ञश्च घिकार्य्यं च प्रवर्त्तते ॥ ४१७
सुसखिना भवेत्तस्मात् सुसखये तथा भवेत् ।
घिकार्य्यं यत् भवेत् प्राप्तं तदिह च प्रयुज्यते ॥ ४१८
ङसिङसो गुणे यत्र यणादेशो न वर्त्तते ।
ख्यत्यादिति न युक्तं स्यात् उत्वं तस्माद् भवेन्न च ॥ ४१९

सुसखेः स्यात् पदं तत्र ङसिङसोः पदं भवेत् ।
सुसखौ स्यात् पदं तत्र यदा ङि च परे पुनः ॥ ४२०
अतिसखा यदा शब्दः सुसखावत् तदा भवेत् ।
न विशेषः स्थितः कश्चित् तस्मान्न विस्तरः कृतः ॥ ४२१

परमः सखा यस्येति विग्रहस्तु यदा भवेत् ।
स्यात् परमसखि तत्र सुसखिवत् इहापि च ॥ ४२२
यद्यपि च भवेद् गौणमनङ् नित्यं प्रवर्त्तते ।
परमसखायौ तत्र स्यात् परमसखा तथा ॥ ४२३
अतिक्रान्तः सखा यत्र अतिसखा पदं तदा ।
"लिङ्गे"ति स्यादनित्या च तस्मात् टच् न प्रवर्त्तते ॥ ४२४
हरिवच्च भवेद् रूपम् "अनङनिर" न युज्यते ।
लाक्षणिके भवेच् शब्दः "गोस्त्रियो"रिति च स्थितम् ॥ ४२५
प्रतिपदोक्तो यदा स्यात् लाक्षणिकः पुनर्यदा ।
प्रतिपदोक्तो गृह्यते न च लाक्षणिकः पुनः ॥ ४२६

### २५७ । पतिः समास एव । १।४।८

पतिशब्दो घिसंज्ञः स्यात् समासश्चेत् प्रवर्त्तते ।
भूपतिना भवेदत्र भूपतये तथा भवेत् ॥ ४२७
पत्या पत्ये तथा पत्युः तथा पत्ये भवेदिह ।
शेषं च हरिवद् ज्ञेयं विशेषश्च न विद्यते ॥ ४२८
कतिशब्दो बहुत्वे स्यात् कति स्यात् कतिभिस्तथा ।
कतिभ्यः कतीनां तत्र कतिषु स्यात् तथैव च ॥ ४२९

### २५८ । बहु-गण-वतु-डति-संख्या । १।१।२८

बहुशब्दो भवेत् संख्या गणशब्दस्तथा भवेत् ।
वत्वन्तश्च भवेत् संख्या डत्यन्तश्च तथा पुनः ॥ ४३०

### २५९ । डति च । १।१।२५

डत्यन्ता या भवेत् संख्या षट्संज्ञा सा भवेदिह ।
षट्संज्ञा च भवेद् यत्र विभक्तीनां भवेच्च लुक् ॥ ४३१

२६० । प्रत्ययस्य लुक्-श्लु-लुपः । १।१।६१

लुक् श्लु लुप् च भवेत् संज्ञा प्रत्ययादर्शनं यदा ।
पृथक् पृथक् कृता संज्ञा सङ्करो न यथा भवेत् ॥ ४३२

२६१ । षड्भ्यो लुक् । ७।१।२२

जश्शसोर्लुक् भवेत् षड्भ्यः कति भवेन्निदर्शनम् ।
जश्शसोस्तु लुकेऽपि स्यात् तत् कार्य्यन्तु यथायथम् ॥ ४३३

२६२ । प्रत्ययलोपे प्रत्ययलक्षणम् । १।१।६२

लुप्तेऽपि प्रत्यये तत्र कार्य्यं भवेद् तदाश्रितम् ।
कति शब्दो यदा तत्र "जशि चे"ति गुणो भवेत् ॥ ४३४
न भवेच्च गुणस्तावत् गुणो नेह विधीयते ।
गुणो न स्याद् यथा तत्र तथा सुत्रं परं भवेत् ॥ ४३५

२६३ । न लुमताङ्गस्य । १।१।६३

लुक् श्लु लुप् च भवेत् संज्ञा सर्व्वत्र न विराजते ।
प्रत्येकं स्यात् "लुमत्" संज्ञा प्रत्येकन्तु लुमत् भवेत् ॥ ४३६
शब्देन लुमता यत्र लोप इह विधीयते ।
अङ्गकार्य्यं तदा न स्यादिति स्थितिर्भवेदिह ॥ ४३७
कति स्यात् कतिभिः स्याच्च कतिभ्यः स्यात् तथा पुनः ।
कतीनां स्यात् पदं तत्र कतिषु स्यात् तथैव च ॥ ४३८
युष्मदस्मद् तथा च षट् स्वरूपाख्ये मतास्त्रिषु ।
नपुंसके स्त्रियां पुंसि प्रत्येकमेकरूपता ॥ ४३९
त्रिशब्दः स्याद् बहुत्वे च रूपं तस्य यथा परम् ।
त्रयः त्रीन् स्यात् त्रिभिः त्रिभ्यः परं भवेत् परे यथा ॥ ४४०

२६४ । त्रेस्त्रयः । ७।१।५३

आमि परे त्रिशब्दस्य एकादेशो भवेदिह ।
त्रयाणां स्यात् पदं तत्र यदा स्यादाम् परे पुनः ॥ ४४१
समासेऽपि त्रयादेशः पुनरपि प्रयुज्यते ।
स्यात् परमत्रयाणाञ्च तथा पदमिति स्थितिः ॥ ४४२
गौणत्वे न समादेश इत्यपि च मतं स्थितम् ।
तन्मते स्यात् प्रियत्रीणां पदं पुनः समासतः ॥ ४४३

इहापि प्रियत्रयाणां पदं भवेदिति स्थितिः।
त्रिषु भवेत् परे सुप् चेत् त्रिशब्दश्च प्रदर्शितः॥ ४४४

२६५। त्यदादीनामः।

अकारश्च भवेदेषां विभक्तिश्चेत् परे स्थिता।
अन्तादेशो भवेदत्र द्विपर्य्यन्तं तथा भवेत्॥ ४४५
द्वौ द्वाभ्याञ्च तथा तत्र द्वयोरपि भवेत्तथा।
सर्व्वासु च विभक्तिषु द्विशब्दो दर्शितो मया॥ ४४६
त्यदादीनां गणे चात्र द्विपर्य्यन्ताः स्थिताश्च ये।
तेषां भवेत् तथादेशः न चान्येषां तथा भवेत्॥ ४४७
भवत् शब्दो भवेद् बाह्यस्तस्मात् तस्य भवेन्न च।
भवान् भवेत् पदं तत्र नेह भवेदकारता॥ ४४८

संज्ञा यदि भवेत् शब्दो भवेच्चेदुपसर्ज्जनम्।
अकारो न तदा स्याच्च त्यदादीनामिति स्थितिः॥ ४४९
संज्ञा यदा तदा "द्वि" स्यात् हरिवच्च पदं भवेत्।
"अतिद्विः" स्यात् पदं तद्वत् भवेच्चेदुपसर्ज्जनम्॥ ४५०
समासे चेत् पदं मुख्यम् अकारः स्यात् तदा खलु।
परमद्वौ पदं तत्र मुख्यं पदं भवेदिदम्॥ ४५१
औडुलोमिः पदं तत्र औडुलोमी तथा भवेत्।
एकत्वे च पुनर्द्वित्वे हरिवच्च भवेत् पदम्॥ ४५२
औडुलोमा बहुत्वे स्यात् इह च वार्त्तिकं स्थितम्।

लोम्नोऽपत्येषु बहुषु अकारो वक्तव्यः (वा)

अपत्यं चेदकारः स्यात् बहुत्वे तु परे जशि॥ ४५३

"बाह्वादिभ्यश्च" सूत्रं स्यात् अपवादो भवेदिह।
इञ् प्रत्ययो यथाप्राप्तं पुनरिह निषिध्यते॥ ४५४
औडुलोमिम् परे चेद् अम् औडुलोमी यदौट् भवेत्।
उडुलोमान् परे शस् चेत् बहुषु स्यादकारता॥ ४५५

इति—

इदन्ताः

## ईदन्तप्रकरणम्

### वातप्रमी

वातं यः प्रमिमीने स वातप्रमी भवेदिह ।
औणादिको भवेद् ई च स किद् भवेदिति स्थितिः ॥ ४५६
वातप्रमी यदा तत्र यदा च सु प्रवर्त्तते ।
भवेद् रुत्वं विसर्गश्च "वातप्रमीः" पदं भवेत् ॥ ४५७
वातप्रमी यदा शब्दः यदा स्याद् औ परे पुनः ।
"दीर्घाज्जसि:" प्रवृत्तं स्यात् वातप्रमीम् भवेत्तथा ॥ ४५८
वातप्रम्यौ भवेत्तद्वत् विशेषश्च न विद्यते ।
सम्बुद्धौ हे वातप्रमी रूपं भवेदिति स्थितिः ॥ ४५९
वातप्रमी यदा तत्र यदा स्याद् अम् परे पुनः ।
"अमि पूर्व्वम्" वातप्रमीम् इति पदं भवेदिह ॥ ४६०
वातप्रम्यौ वातप्रमीन् वातप्रम्या भवेत् परे ।
भवेत् वातप्रमीभ्याम च वातप्रम्ये भवेत्तथा ॥ ४६१
वातप्रम्यः वातप्रम्योः ततः परं भवेदिह ।
वातप्रम्याम् वहुत्वे स्यात् दीर्घत्वान्नुट् न युज्यते ॥ ४६२
ङौ तु सवर्णदीर्घः स्यात् वातप्रमी तथा भवेत् ।
सुपि वातप्रमीषु स्यात् सर्व्वं मया प्रदर्शितम् ॥ ४६३
यात्यनेन भवेद् ययी पाति लोकं पपी भवेत् ।
"यापो कित् च" स्थितं सूत्रं प्रत्यय ई भवेत्तथा ॥ ४६४
एषां रूपे विशेषो न कश्चिदिह च दृश्यते ।
वातप्रमी यथा स्याच्च तथैव स्युः पुनश्च ते ॥ ४६५

वातप्रमी पुनः शब्दः क्विवन्तोऽपि च दृश्यते ।
अमि शशि विशेषश्च विशेषो वर्त्तते ङयि ॥ ४६६
वातप्रम्यम् यदा स्याद् अम् वातप्रम्यः यदा च शस् ।
वातप्रम्ये यदा ङे स्यात् विशेषाश्च स्थितास्त्रिषु ॥ ४६७
वातप्रमी यदा तत्र यदा स्याद् अम् परे पुनः ।
"एरनेकाच्" तदा स्याद् यण् प्रयोवश्च पदं भवेत् ॥ ४६८

बहुश्रेयसी

बहुः श्रेयस्यो यस्य च स बहुश्रेयसी मतः ।
समासः स्याद् बहुव्रीहिः पुंसि पदं प्रवर्त्तते ॥ ४६९
यदा बहुश्रेयसी स्यात् यदा सु स्यात् परे पुनः ।
हल्ङ्याब्भ्योऽत्र भवेद् योज्यं सुलोपः स्यात् तथा खलु ॥ ४७०
भवेद् बहुश्रेयसी च तदा पदं परे च सौ ।
औ चेद् बहुश्रेयस्यौ स्यात् सन्धिर्भवेद् यथायथम् ॥ ४७१
जस् चेत् बहुश्रेयस्यः स्यात् यदा सन्धिर्भवेदिह ।
सम्बुद्धौ तु विशेषः स्यात् सूत्रमन्यत् प्रयोजनम् ॥ ४७२

२६६ । यू स्त्र्याख्यौ नदी । १।४।३

ईकारान्तं यदा स्त्री च नदीसंज्ञा प्रवर्त्तते ।
ऊकारान्तं यदा स्त्री च संज्ञा भवेत् तथा पुनः ॥ ४७३
ईकारान्ते कुमारी स्यात् गौरी स्याच्च निदर्शनम् ।
ऊकारान्ते यवागूः स्यात् निदर्शनं तथैव च ॥ ४७४

प्रथमलिङ्गग्रहणं च (वा)

प्रथमे यत् स्थितं लिङ्गं तदेवेह च गृह्यते ।
गौणे लिङ्गं द्वितीयं चेत् न तत् ग्राह्यं भवेदिह ॥ ४७५
आदौ नदी परे सा न आदौ वा सा भवेदिह ।
आदौ स्त्री श्रेयसी नदी परे नदी तथैव च ॥ ४७६
तेन बहुश्रेयसीति नदीसंज्ञा प्रयुज्यते ।
सम्बुद्धौ तु पदं साध्यं सूत्रं परं प्रयोजनम् ॥ ४७७

२६७ । अम्बार्थनद्योर्ह्रस्वः । ७।३।१०७

अम्बार्था ये स्थिताः शब्दा नद्यन्ता ये स्थिताः पुनः ।
सम्बुद्धिश्चेत् परे तेषां भवेद् ह्रस्व इति स्थितिः ॥ ४७८
"हे बहुश्रेयसि" तत्र सम्बुद्धौ च पदं भवेत् ।
नदी चात्र भवेत् शब्दः भवेद् ह्रस्वो यथायथम् ॥ ४७९
"अमि" बहुश्रेयसीम् स्यात् विशेषस्तु न विद्यते ।
औटि बहुश्रेयस्यौ स्यात् इहापि न विशेषता ॥ ४८०
शसि बहुश्रेयसीन् स्यात् विशेषश्च न दृश्यते ।
टा भ्याम् भिस् न विशेषश्च ङे यदा स्यात् परं तदा ॥ ४८१

२६८ । आण् नद्याः । ७।३।११२

नद्यन्तश्चेत् भवेत् शब्दः ङित्प्रत्ययः परे यदि ।
आडागमो ङितां तत्र वृद्धिरपि यथा परे ॥ ४८२

२६९ । आटश्च । ६।१।९०

आडिह चेत् स्थितः पूर्व्वे अजिह चेत परे स्थितः ।
एकादेशो भवेद् वृद्धिरिति भवेद् विधिः पुनः ॥ ४८३
पदं बहुश्रेयस्यै स्यात् यदा ङे स्यात् परे खलु ।
पदं बहुश्रेयस्याश्च ङसिह चेत् परे स्थितः ॥ ४८४
नद्यन्तश्च भवेच्च शब्दः तस्माच्च नुट् प्रयुज्यते ।
पदं बहुश्रेयसीषां तस्माद् भवेदिति स्थितिः ॥ ४८५
यदा बहुश्रेयसी स्यात् यदा ङि स्यात् परे पुनः ।
तदा सूत्रं भवेद् योज्यं यथा परे प्रदर्शितम् ॥ ४८६

२७० । ङेराम् नद्याम्नीभ्यः । ७।३।११६

नद्यन्तश्चेद् भवेत् शब्द आमन्तश्चेत् भवेत् पुनः ।
नीशब्दश्चेद् भवेदत्र ङेराम् भवेदिति स्थितिः ॥ ४८७
ङेरामिह भवेद् यत् च तस्माद् नुट् न प्रयुज्यते ।
आटा नुट् च परेणेह बाधितः स्यादिति स्थितिः ॥ ४८८
पदं बहुश्रेयस्याम् स्यात् ङेरामिह यदा भवेत् ।
शेषं वातप्रमीवत् स्यात् विशेषश्च न विद्यते ॥ ४८९

अतिलक्ष्मी

अतिलक्ष्मी यदा शब्दः सुलोपो न विधीयते ।
अङ्न्तात्तु सुलोपो न प्रत्ययः स्यादुणादिके ॥ ४९०
अतिलक्ष्मीः यदा सु स्यात् विसर्गश्च भवेदिह ।
अन्यत्र च समं रूपं विशेषश्च न दृश्यते ॥ ४९१

कुमारी

कुमारी स्यात् पदं तत्र क्वचि क्विपि पदं भवेत् ।
सुलोपश्च भवेदत्र "हलङ्याब्भ्यश्च" प्रयुज्यते ॥ ४९२
कुमारी स्यात् यदा शब्दः सुप्रत्ययो यदा पुनः ।
कुमारी स्यात् पदं तत्र सुलोपे स्यात् पदं तथा ॥ ४९३
कुमारी स्यात् यदा शब्दः प्रत्यय औ भवेद् यदा ।
तदा सूत्रं भवेद् योज्यं यथा परे प्रदर्शितम् ॥ ४९४

२७१। अचि श्नुधातुभ्रुवां य्वोरियङुवङौ। ६।४।७७

विकरणं यदा श्नु स्यात् अजिह च परे यदा।
उवङ् भवेदकारस्य समादेशस्तदा खलु॥ ४९५
इवर्णान्त उवर्णान्तो यदा धातुश्च पूर्ववतः।
परे तत्र यदा स्यादच् इयङुवङ् तदा भवेत्॥ ४९६
भ्रू इति च यदा शब्दः पुनः पूर्व्वं प्रवर्त्तते।
परे भवेत् पुनश्चेदच् आदेशः स्यादुवङ् तदा॥ ४९७
भवेत्तयो ङकार इत् अन्तादेशस्ततो भवेत्।
इयङ् भवेदिकारस्य उकारस्य भवेदुवङ्॥ ४९८
आन्तरतम्यता तावत् पुनरिह प्रयुज्यते।
यत्र यथा भवेद् योग्यं युज्यते तत्र तत् तथा॥ ४९९

कुमारी स्याद् यदा तत्र भवेद् औ च यदा पुनः।
कुमार् ईय् तदा च स्यात् औ परे च पुनर्भवेत्॥ ५००
एवं यदा स्थितं तत्र यथाप्राप्तं भवेन्न च।
इह तावत् परे सूत्रं प्रवर्त्तते निषेधने॥ ५०१

२१२। एरनेकाचोऽसंयोगपूर्व्वस्य। ६।४।८२

संयोगो न स्थितः पूर्व्वं धातुरेकाज् भवेन्न न।
इवर्णास्त तदाङ्गस्य परे चेदच् भवेन्न यण्॥ ५०२
इयङ् न स्यात् ततश्चात्र यणादेशः प्रवर्त्तते।
कुमारी औ यदा तत्र कुमार्य्यौ स्यात् पदं तदा॥ ५०३
कुमार्य्यः स्यात् पदं तद्वत् हे कुमारि तथा भवेत्।
अमि शसि कुमार्य्यं स्यात् कुमार्य्यः स्यात् यथाक्रमम्॥ ५०४
कुमार्य्यै स्यात् यदा ङे स्यात् कुमार्य्याः स्यात् ङसौ ङसि।
कुमारीणां यदा स्यादाम् कुमार्य्यां स्याद् परे च ङौ॥ ५०५

प्रधी

प्रधीः प्रध्यौ भवेत्तत्र प्रध्यः प्रध्यं भवेत्तथा।
प्रध्यौ प्रध्यः पदं तत्र ऊहनीयं परं बुधैः॥ ५०६

उन्नी

उत् पूर्व्वं स्यात् परे च नी शब्द उन्नी तथा भवेत्।
न संयोगो भवेत् पूर्व्वं धातुः पूर्व्वं न च स्थितः॥ ५०७

उन्नी भवेद् भवेद् उन्न्यौ भवेदुन्न्यस्तथैव च ।
हे उन्नीः स्यात् पदं तत्र उन्न्यम् उन्न्याम् तथा भवेत् ॥ ५०८

ग्रामणी स्याद् यदा शब्दः उन्नीवच्च पदं भवेत् ।
विशेषो न स्थितः कश्चित् ऊहनीयं यथायथम् ॥ ५०९

एकाज् यदा तदा यण् न भवेदियङुवङ् तदा ।
नीः नियौ स्याद् नियस्तत्र नियं नियौ नियस्तथा ॥ ५१०
संयोगश्चेत् भवेत् पूर्व्वे तदा न यण् भवेदिह ।
इयङुवङ् तदा तत्र सुश्रियौ स्यात् पदं यथा ॥ ५११
गतिकारकेतरपूर्व्वपदस्य यण् नेष्यते (वा)
यदा परे गतिर्नास्ति कारकं न परे यदा ।
तदा यण् न भवेत्तत्र भवेदियङुवङ् तदा ॥ ५१२
शुद्धधियौ पदं तत्र भवेत् खलु निदर्शनम् ।
स्यात् परमधियौ चापि निदर्शनं तथैव च ॥ ५१३

यदा परे गतिस्तत्र यदा परे च कारकम् ।
तदा यण् स्यादवश्यञ्च इत्येवं फलितं भवेत् ॥ ५१४
एवं यदा स्थितिस्तत्र पृच्छा भवेदियं तदा ।
"दुर्धियः" वा कथं तत्र "वृश्चिकभीः" कथं पुनः ॥ ५१५
दुःस्थिता धीः पुनर्येषामिति वाक्यं भवेदिह ।
दुरिह न गतिस्तावत् गतिर्नात्र पुनः स्थिता ॥ ५१६
प्रादयश्चेत् क्रियायुक्ता तदा संज्ञा भवेद् गतिः ।
इह क्रिया न तावत् स्यात् गतिसंज्ञा न युज्यते ॥ ५१७

"वृश्चिकभीः" यदा तत्र कारकं न तदा भवेत् ।
अपायो बुद्धिकृतश्च नेह पुनः प्रसिध्यति ॥ ५१८
वृश्चिकसम्बन्धिनी भीरित्यपि च भवेदिह ।
शाकपार्थिवादिवच्च समासः स्यादिति स्थितिः ॥ ५१९
२७३ । न भूसुधियोः । ६।४।८५
भूशब्दः स्याद् यदा तत्र सुधीशब्दो यदा पुनः ।
अचि परे न यण् तत्र सुधियौ स्यात् पदं तदा ॥ ५२०

सखी ( क्यच्+क्विप् )

सखायमिच्छतीति चेत् सखीयति पदं भवेत् ।
"सखीय" च भवेद् धातुः पश्चात् क्विप् च प्रयुज्यते ॥ ५२१
अकारस्य भवेल्लोप "अतः" इति विधिर्भवेत् ।
यकारस्य भवेल्लोपः "लोप" इति विधिः पुनः ॥ ५२२
पदं सखी तथा सिध्येत् पुंसि पदं प्रवर्त्तते ।
पदमिह भवेत् साध्यं प्रक्रिया स्याद् यथा परे ॥ ५२३

अल्लोपः स्थानिवत् स्याच्च एरनेकाच् प्रवर्त्तने ।
तस्माद् यण् च भवेत् प्राप्तः प्राप्ते पुनश्च वार्त्तिकम् ॥ ५२४

क्वौ लुप्तं न स्थानिवत् (वा)

क्वौ परे यद् भवेल्लुप्तं न स्थानिवत् भवेच्च तत् ।
अकारश्च भवेल्लुप्तः तस्माद् अः स्थानिवत् न च ॥ ५२५

सखी

सखिशब्दो मया पूर्व्वं विस्तरेण प्रदर्शितः ।
सखीशब्दः सखिवत् स्यात् विशेषश्च न विद्यते ॥ ५२६
एकदेशविकृतस्य न चान्यता भवेन्मता ।
यथा "सखि" भवेदत्र तथा "सखी" भवेत् पुनः ॥ ५२७
सखा स्याच्च पदं तत्र सखायौ स्यात् पदं तथा ।
सखायः स्यात् पदं तद्वत् हे सखीः स्यात् पुनः पदम् ॥ ५२८

यदा सखी यदा स्याद् अम् सखायम् च पदं भवेत् ।
"अमि" न "एरनेकाच्" न "स्वयु"रिति प्रवर्त्तते ॥ ५२९
सखायौ स्यात् यथापूर्व्वं विशेषश्च न विद्यते ।
शसि परे भवेद् यण् च "सख्यः" पदं तथा भवेत् ॥ ५३०

सखी-सखी-सुती

सह खेन वर्त्तते यः स सखः स्यादिति स्थितिः ।
तमिच्छति यदा तत्र तदा "सखी" भवेत् पुनः ॥ ५३१
यदा सुखमिच्छतीति तदा सुखी पदं भवेत् ।
यदा सुतमिच्छतीति तदा सुती पदं मतम् ॥ ५३२

सख्यौ सुख्यौ सुत्यौ स्याच्च मध्ये इ औ चेत् परे पुनः ।
सख्युः सुख्युः तथा सुत्युः "ख्य त्या"दिति पदं मतम् ॥ ५३३

लूनी-क्षामी-प्रस्तीमी

लूनमिच्छतीति लूनी यथापूर्व्वं पदं भवेत् ।
क्षाममिच्छतीति क्षामी पदं भवेत् तथैव च ॥ ५३४
प्रस्तीममिच्छतीति च प्रस्तीमी स्यात् पदं पुनः ।
लून्युः क्षाम्युः प्रस्ताम्युः स्यात् ङसौ ङसि पदं तथा ॥ ५३५
ङसि-ङसोर्भवेद् यण् च -"ख्यत्याद्" उत्वं तथा भवेत् ।
णत्वं मत्वमसिद्धं स्यात् "ख्यत्या"देति प्रवर्त्तते ॥ ५३६

शुष्की

शुष्कीयते यदा क्विप् स्यात् "शुष्की" पदं तदा भवेत् ।
शुष्कीः स्यात् शुष्कियौ स्याच्च शुष्कियं स्यादियं पुनः ॥ ५३७
शुष्कियः स्यात् पदं तत्र ङसौ ङसि तथा खलु ।
एवं पदं भवेदत्र भवेदूह्यं यथायथम् ॥ ५३८

३।१।७४-
३।२।७४-१७३ श्लोकाः

इति —
ईदन्ताः

४-२-७४

उदन्तप्रकरणम्

"शम्भुः" स्यात् हरिवत् तत्र भवेत् शम्भुः परे च सौ ।
भवेद् विष्णुर्भवेत् वसुर्भवेत् भानुस्तथैव च ॥ ५३९
क्रोष्टुशब्दः स्थितोलोके विशेषस्तस्य वर्त्तते ।
क्रोष्टुशब्दे विशेषा ये ते च परे प्रदर्शिताः ॥ ५४०

२७४ । तृज्वत् क्रोष्टुः । ७।१।९५

सर्व्वनामस्थानं चेत् स्यात् पदं साध्यं भवेद् यदि ।
तृजन्तवत् भवेत् क्रोष्टु सम्बुद्धौ न तथा भवेत् ॥ ५४१
क्रोष्टुशब्दो यदा तत्र क्रोष्टृशब्दः प्रयुज्यते ।
क्रोष्टुशब्दे विशेषा ये ते च परे प्रदर्शिताः ॥ ५४२

**२७५। ऋतो ङि-सर्व्वनामस्थानायाः। ७।३।११०**

ऋदन्तं चेद् भवेदङ्गं गुणस्तस्य विधीयते।
सर्व्वनामस्थानं स्याच्चेत् ङि परे चेद् भवेदिह ॥ ५४३
एवं तत्र गुणे प्राप्ते सूत्रं परं प्रवर्त्तते।
अनङ् भवेद् यथा तत्र तथा सूत्रं परे पुनः ॥ ५४४

**२७६। ऋद्-उशनस्-पुरुदंशस्-अनेहसां च। ७।१।९४**

ऋदन्तश्चेत् स्थितः शब्द उशनस् चेत् स्थितः पुनः।
पुरुदंशस् स्थितः शब्दः अनेहस् चेत् पुनः स्थितः ॥ ५४५
परे सु चेदनङ् तत्र सम्बुद्धौ न तथा भवेत्।
एवमनङ् यदा प्राप्तं सूत्रं परं प्रवर्त्तते ॥ ५४६

**२७७। अप्-तृण्-तृच्-स्वसृ-नप्तृ-नेष्टृ-त्वष्टृ-क्षत्तृ होतृ-पोतृ-प्रसास्तृ़णाम्। ६।४।११**

अजन्तश्चेद् भवेच् शब्दस्तृन्नन्तश्चेद् भवेदिह।
तृजन्तश्चेद् भवेच् शब्दः स्वसृ नप्तृ यदा भवेत् ॥ ५४७
नेष्टृ त्वष्टृ पुनः क्षत्तृ होतृ पोतृ भवेद् यदा।
प्रशास्तृ स्याद् यदा शब्द उपधादीर्घता तदा ॥ ५४८
सर्व्वनामस्थानं चेत् स्यात् विधिर्भवेत् प्रयोजितः।
सम्बुद्धिश्चेत् तदा तत्र न युज्यते विधिः पुनः ॥ ५४९
तृण् तृजिह स्थितं सूत्रे सिध्येन् होत्रादिकं तथा।
नियमार्थं तथापीह पुनः शब्दाः प्रदर्शिताः ॥ ५५०
स स यदा स्थितः शब्दस्तदा विधिः प्रयुज्यते।
अन्य-शब्दो यदा तत्र तदा विधिर्न युज्यते ॥ ५५१
उद्गातृ च पुनः शब्दः नेह खलु प्रदर्शितः।
भाष्ये शब्दः स्थितो दीर्घं अत एव स गृह्यते ॥ ५५२

क्रोष्टु यदा यदा सु स्यात् क्रोष्टा भवेत् पदं तदा।
क्रोष्टु यदा यदा स्याद् औ क्रोष्टारौ च पदं भवेत् ॥ ५५३
यदा क्रोष्टु यदा जश् स्यात् क्रोष्टारश्च पदं तदा।
यदा क्रोष्टु यदा स्याद् अम् क्रोष्टारम् च पदं भवेत् ॥ ५५४
यदा क्रोष्टु यदा स्याद् औट् क्रोष्टारौ स्यात् पदं तदा।
यदा क्रोष्टु यदा शस् स्यात् पदं क्रोष्टॄन् तदा भवेत् ॥ ५५५

तृतीया च यदा तत्र परा चापि यदा पुनः ।
क्रोष्टु क्रोष्टृ द्वयं तत्र द्वये सूत्रं परं यथा ॥ ५५६

**२७८ । विभाषा तृतीयादिषु अचि । ७।१।९७**

अजादिश्चेद् विभक्तिः स्यात् तृतीयादिः परे यदा ।
क्रोष्टु क्रोष्टृ द्वयं तत्र सममेव प्रयुज्यते ॥ ५५७
ऋदन्तश्चेन् भवेत् क्रोष्ट्रा उदन्ते क्रोष्टुना भवेत् ।
अन्यत्रापि भवेदेवं क्रोष्ट्रे क्रोष्टवे यथा पुनः ॥ ५५८
ङसि यदा परे तत्र ङस् परे वा स्थितो यदि ।
तदा सूत्रं परं योज्यम् उकारश्च यथा भवेत् ॥ ५५९

**२७९ । ऋत उत् । ६।१।१२१**

ऋदन्तश्चेत् भवेत् शब्दः ङसिङ्स चेत् परे भवेत् ।
एकादेश उकारः स्यात् रकारश्च प्रवर्त्तते ॥ ५६०

**२८० । रात् सस्य । ८।२।२४**

संयोगान्तो यदा शब्द रेफात् परो यदा च सः ।
सकारस्य भवेल्लोपः नान्यस्य च तथा भवेत् ॥ ५६१
यदा क्रोष्टु स्थितः शब्दः प्रत्ययो ङस् परे यदा ।
क्रोष्टु र् स् स्याच्च तदा तत्र लोपे क्रोष्टुः पदं भवेत् ॥ ५६२

यदा क्रोष्टु यदा स्याद् आम् "विभाषा" च प्रयुज्यते ।
ऋदन्तः स्याद् भवेद् क्रोष्टृ तृज्वद्भावः प्रपद्यते ॥ ५६३
तृज्वद्भावो यदा प्राप्तो वार्त्तिकं च परं तदा ।

नुमचिरतृज्वद्भावेभ्यो नुट् पूर्व्वप्रतिषेधेन (वा)

पूर्व्वेषां प्रतिषेधेन नुम नुडिह प्रवर्त्तते ॥ ५६४

यदा क्रोष्टु यदा स्यादम् नुडिह च प्रसज्यते ।
क्रोष्टूनां स्यात् पदं तस्मात् न क्रोष्टॄणां भवेदिह ॥ ५६५

यदा क्रोष्टु यदा ङि स्यात् क्रोष्टरि च पदं भवेत् ।
यदा क्रोष्टु यदा स्याद् ओस् क्रोष्ट्रोः पदं भवेत्तदा ॥ ५६६
पदमन्यत् च शम्भुवत् जशादौ च भवेदिह ।
यथायथं भवेद् योज्यम् ऊहनीयं यथा यथम् ॥ ५६७

इति —

उदन्ताः

## अथ ऊदन्त प्रकरणम्

### हूहू

ऊदन्ते च स्थितो हूहू पुंसि पदं प्रवर्त्तते ।
हूहूः हूह्वौ भवेत् तत्र हूह्वः भवेत् तथैव च ॥ ५६८

हूहूम् हूह्वौ भवेत् तद्वत् हूहून् भवेत् तथा पुनः ।
पदमन्यद् भवेत् यत् यत् ऊहनीयं च तत् च तत् ॥ ५६९

### अतिचमू

अतिचमू यदा शब्दो नदीकार्य्यं प्रवर्त्तते ।
सम्बुद्धौ अतिचमु स्यात् ह्रस्वः उश्च भवेदिह ॥ ५७०

अतिचम्वै यदा ङे स्यात् अतिचम्वाः ङसौ ङसि ।
भवेदतिचमूनाश्च अतिचम्वां यदा च ङिः ॥ ५७१

### खलपू

खलपू स्यात् यदा शब्दः प्रत्ययः "सु" यदा पुनः ।
पदं स्यात् खलपूस्तत्र विशेषस्तु न विद्यते ॥ ५७२

खलपू स्याद् यदा शब्दो यदास्याद् औ परे पुनः ।
विशेषस्तु स्थितस्तत्र सूत्रं परं प्रवर्त्तते ॥ ५७३

### २८१ । ओः सुपि । ६।४।८३

उवर्णान्तो यदा धातुः संयोगश्च न पूर्व्वतः ।
तथाविधो यदा धातुः शब्दस्यान्ते प्रवर्त्तते ॥ ५७४

स शब्दश्चेदनेकाच् स्यात् अजादि सुप् परे यदि ।
उवर्णस्य तदा तस्य यणादेशो भवेदिह ॥ ५७५

खलपू स्याद् यदा शब्दः प्रत्यय उ परे यदा ।
खलप्वौ स्यात् पदं तत्र खलप्वः स्यात् तथा जसि ॥ ५७६

एवं सुलू यदा शब्दः प्रत्ययः सु परे यदा ।
सूलूः पदं तदा तत्र पदमन्यत् तथा भवेत् ॥ ५७७

अनेकाच् चेद् भवेदङ्गं तदेव स्यान्न चान्यदा ।
"लूः" "लुवौ" स्यात् न चानेकाच् न यण् भवेत्ततः पुनः ॥ ५७८

संयोगश्चेत् भवेद् धातौ तदैव स्यात् न चान्यदा ।
उल्लूर्यदा न धातौ स्यात् उपसर्गे ततो न यण् ॥ ५७९

संयोगश्चेत तदा न स्यात् न तदा यणिति स्थितिः ।
कटप्रुवौ संयोगश्च तस्माद् यण् न भवेदिह ॥ ५९०
सुबिह चेत् तदैव स्यात् अन्यत्र न तथा भवेत् ।
"लुलुवतुः" न सुप् तावत् तस्माद् यण् न भवेदिह ॥ ५९१

स्वभू

स्वभू यदा भवेत् तत्र तदा सूत्रं न युज्यते ।
तदा "न भू"—भवेद् योज्यं स्वभुवौ स्यात् पदं तदा ॥ ५९२

वर्षाभू

वर्षाभु "सु" यदा तत्र वर्षाभूः स्यात् पदं तदा ।
वर्षाभू औ यदा तत्र सूत्रमन्यत् तदा भवेत् ॥ ५९३

२८२ । **वर्षाभ्वश्च** । ६।४।८४

वर्षाभू स्यात् यदा शब्दः सुप् अजादि परे यदा ।
उवर्णस्य तदा यण् स्यात् वर्षाभ्वौ स्यात् पदं तदा ॥ ५९४

अन्दू-दृम्भू-जम्बू-कफेलु-कर्कन्धू-दिधिषूः (उ ९३)

अन्दूः भवेत् पदं तत्र पदं दृम्भूः तथा भवेत् ।
जम्भूः भवेत् कफेलुः च कर्कन्धुः स्यात् पदं तथा ॥ ५९५
दिधिषूः स्यात् पदं तत्र सर्व्वत्र "कू" भवेदिह ।
उणादिके पदं सिद्धं यत् यदिह प्रदर्शितम् ॥ ५९६

[ दृम्भूं (ममब्नः) — दृभी + कू ]

दृम्भू भवेत् यदा शब्दः रूपं भवेत् यथा परम् ।
दृम्भूः दृम्भ्वौ पुनः दृम्भ्वः दृम्भ्वम् दृम्भ्वौ तथा पुनः ॥ ५९७
दृम्भून् भवेत् तथैवात्र हूहूवत् स्यात् पदं परम् ।
विस्तरो न पुनर्दत्त ऊहनीयं यथायथम् ॥ ५९८

दृन्भू ( नमध्यः ) = दृन् + भू + क्विप्

पृथक् "दृन्भू" स्थितः शब्दः "दृन्"-अव्ययात् भुवः क्विपि ।
यदा दृन्भु यदा सु स्यात् पदं दृन्भुस्तदा भवेत् ॥ ५९९
यदा दृन्भु यदा स्याद् औ वार्त्तिकं च परं यथा ।
दृन्-कर-पुनर्-पूर्व्वस्य भुवो यण् वक्तव्यः (वा)
यणादेशो भवेदत्र दृन्भ्वौ दृन्भ्वस्तथा पदम् ॥ ६००

दृन्भू भवेत् "खलपू"वत् विशेषस्तु न विद्यते ।
वार्त्तिके तु "करः" शब्दः "कार"श्चापि च पठ्यते ॥ ६०१
करभ्वौ स्यात् कारभ्वौ स्यात् द्वयमपि भवेदिह ।
करभ्वः स्यात् कारभ्वश्च "कार" इति यदा भवेत् ॥ ६०२

पुनर्भू (पुंसि)

पुनर्भूः यौगिकः पुंसि तस्येह ग्रहणं मतम् ।
पुनर्भ्वौ स्यात् पदं तत्र पदमूह्यं परं बुधैः ॥ ६०३

दृग्भू-काराभू

दृग्भू यदा भवेत्तत्र स्वयंभूवत् पदं भवेत् ।
काराभूश्च यदा शब्द स्वयंभूवत् तदापि च ॥ ६०४

इति ऊदन्ताः

**अथ ऋदन्तप्रकरणम्**

धातृ

धातृशब्दः ऋदन्तः स्यात् तस्य रूपं परं यथा ।
धाता स्यात् धातारौ स्याच्च धातारः स्यात् तथा पुनः ॥ ६०५

ऋवर्णात् नस्य णत्वं वाच्यम् (वा)

ऋवर्णाच्चेत् भवेत् पूर्व्वो नकारस्य णकारता ।
धातृणां स्यात् पदं तत्र णत्वमिह प्रयुज्यते ॥ ६०६
नप्त्रादिकं च धातृवत् उद्गातृ च तथा भवेत् ।
विशेषो न स्थितः कश्चित् न विस्तरस्तथोच्यते ॥ ६०७

पितृ

इह पितृ भवेत् शब्द उणादौ प्रत्यये परे ।
अप्तृन्निति न दीर्घः स्यात् न हि शब्दो धृतो भवेत् ॥ ६०८
पिता भवेत् पितारौ च पितरः स्यात् पदं तथा ।
धातृवच्च भवेच् शेषे विशेषन्तु न वर्त्तते ॥ ६०९

जामातृ च स्थितः शब्द भ्रातृशब्दः स्थितः पुनः ।
एवं ये ये स्थिताः शब्दा रूपं तेषां तथैव च ॥ ६१०

नृ

नृशब्दश्च स्थितस्तत्र ना नरौ च पदं भवेत् ।
नरः भवेत् पदं तत्र "हे नः" स्याच्च तथैव हि ॥ ६११

आम् इह चेत् परे तत्र विशेषस्तु प्रवर्त्तते ।
विशेषे च पुनः सूत्रं परमिह प्रदर्शितम् ॥ ६१२

२८३ । नृ च । ६।४।६

नामि परे भवेद् दीर्घः दीर्घविधिर्विभाषया ।
नृनां नृणां भवेदत्र विभाषया पदद्वयम् ॥ ६१३

इति ऋदन्ताः

## अथ ॠदन्तप्रकरणम्

इह कॄ तॄ भवेद् धातुः स्यादनुकरणे यदा ।
स्यात् प्रातिपदिकमपि रूपं भवेद यथा परम् ॥ ६१४
धातुवच्च भवेत् कार्य्यं "प्रकृतिवत्" इति स्थितम् ।
किर् भवेच्च भवेत् तिर् च ततः परं यथा पुनः ॥ ६१५
कीः किरौ च किरस्तत्र तीः तिरौ च तिरस्तथा ।
गीर्व्वदत्र भवेद् रूपं इत्वं रत्वं प्रयुज्यते ॥ ६१६
इत्वं रत्वं यदा न स्यात् क्रीः क्रौ क्रः स्यादिति स्थितिः ।
क्राम् क्रौ क्रन् स्यात् तथा तत्र क्रा क्रे भवेत्तथैव च ॥ ६१७
सूत्रम् "ऋतः" सूत्रं "ङि" च पुनरिह न युज्यते ।
ह्रस्वे तौ च विधी तत्र दीर्घे तौ न मतौ खलु ॥ ६१८

इति ॠदन्ताः

## अथ ऌदन्तप्रकरणम्

गमॢ शकॢ भवेद् धातुरिहानुकरणं यदा ।
स्यात् प्रातिपदिकं चापि रूपं भवेद् यथा परम् ॥ ६१९
यदा गमॢ यदा सु स्यात् "ऋदुशन"-प्रवर्त्तते ।
अनङ् भवेत् तदादेशः गमा शका तदा भवेत् ॥ ६२०
यदा गमॢ यदा स्याद औ "ऋत" इति प्रयुज्यते ।
गुणे स्यात् गमलौ तत्र शकलौ च लकारतः ॥ ६२१
यदा गमॢ यदा टा स्यात् गम्ला तदा पदं भवेत् ।
यदा गमॢ यदा ङे स्यात् गम्ले भवेत् तदा पुनः ॥ ६२२
यदा गमॢ यदा ङस् च "ऋत उत्" प्रवर्त्तते ।
उत्वे च लपरत्वे च गमुल् पदं भवेत्तदा ॥ ६२३

इति ऌदन्ताः

## अथ एदन्तप्रकरम्

### से

"अ" तत्र च स्थितः शब्दः विष्णुरिति प्रतीयते ।
तस्यापत्यं यदार्थः स्यात् "अतः इञ्" च प्रयुज्यते ॥ ६२४
"यस्येति च" स्थितं सूत्रं पश्चात् तत्र प्रयुज्यते ।
अकारस्य भवेल्लोपः शब्द "इ" च तदा भवेत् ॥ ६२५
"इ"ना सह वर्त्तते यः इति स्याद् विग्रहो यदा ।
"तेन सह" भवेद् योज्यं बहुव्रीहिस्तदा भवेत् ॥ ६२६
सूत्रं "वोपसर्ज्जनस्य" पश्चात् तत्र प्रयुज्यते ।
"स"भावः स्यात् तदा तत्र "स इ" रूपं तदा भवेत् ॥ ६२७
"आद् गुणः"श्च स्थितं सूत्रं प्रयुज्यते पुनश्च तत् ।
"से" तदा च भवेच् शब्दः स इह प्रकृतिर्भवेत् ॥ ६२८
"से" यदा च स्थितः शब्दः "सु"प्रत्ययः पुनर्यदा ।
सेः सयौ स्यात् सयः स्याच्च भवेद रूपं यथायथम् ॥ ६२९

### स्मृते

"इ" तत्र च स्थितः शब्द काम इति प्रतीयते ।
"इः स्मृतो येन" तत्र च विग्रहे वचनं भवेत् ॥ ६३०
"अनेकमन्यपदार्थे" सूत्रमिह प्रयुज्यते ।
समासस्तु बहुव्रीहिः पुनरिह तथा भवेत् ॥ ६३१
"निष्ठे"ति च स्थितं सूत्रं तत् पश्चाच्च प्रयुज्यते ।
"स्मृते"ति च भवेत् पूर्व्वं "स्मृत इ" स्यात् तदा पुनः ॥ ६३२
"आद्गुणः"श्च स्थितं सूत्रं पश्चात् तत्र प्रयुज्यते ।
"स्मृते" भवेत् तदा शब्दः स इह प्रकृतिर्भवेत् ॥ ६३३
यदा "स्मृते" पुनः शब्दः प्रत्ययः "सु" पुनर्यदा ।
स्मृतेः स्यात् स्मृतयौ स्याच्च स्मृतयः स्यात् पदं पुनः ॥ ६३४

इति एदन्ताः

## अथ ओदन्तप्रकरणम्

"गो" शब्दश्च यदा तत्र प्रत्ययः "सु" पुनर्यदा ।
सूत्रमिह भवेद् योज्यं यथा परे प्रदर्शितम् ॥ ६३५

२८४। गोतो णित्। ७।१।९०

सर्व्वनामस्थानं यत्र गोतो णिद्वद् भवेदिह।
णिद्वत्कार्य्यं भवेद् वृद्धिः पदानि स्युर्यथापरम्॥ ६३६
गौः पदं स्यात् पदं गावौ पदं गावो भवेदिह।
सर्व्वत्रैव भवेद् वृद्धि वृद्धौ पदं तथा मतम्॥ ६३७

२८५। औतोऽम्शसोः। ६।१।९३

ओकारान्तो यदा शब्दः पूर्व्वं इह प्रवर्त्तते।
अमिह चेत् परे तत्र शमिह चेत् परे भवेत्॥ ६३८
आकारः स्यादेकादेशः पदं परं यथा पुनः।
गो अम् यदा भवेद् गाम् च गो शम् यदा भवेच्च गाः॥ ६३९
अम् इह स्यात् सुपो यत्र तत्रैव च विधिर्भवेत्।
अम् इह चेद् भवेद् धातोः विधिरत्र न युज्यते॥ ६४०
"अचिनवम्" पदं तस्मात् निर्व्वाधं स्यादिति स्थितिः।
"असुनवम्" पदं तद्वत् निर्व्वाधं स्यात् तथैव च॥ ६४१
गवा गवे पदं तद्वत् पदं गोश्च भवेदिह।
अन्यत्रापि भवेदेवमूहनीयं यथायथम्॥ ६४२

ओतो ङिदिति वाच्यम् (वा)
विहितविशेषणां च (वा)

"ओतो णित्" च भवेत् सूत्रं "गोतो णित्" न भवेदिह।
"विहितविशेषणं" च भवेद् ग्राह्यमिति स्थितिः॥ ६४३
तेन "सुद्यौ" भवेदत्र सुद्यावौ च तथा भवेत्।
सुद्यावश्च भवेत्तद्वत् विशेषणमिह स्थितम्॥ ६४४
सर्व्वनामस्थानं चेत् स्यात् तदेव हि तथा भवेत्।
इत्यपि च पुनर्व्याख्या केश्चिदिह प्रदर्शिता॥ ६४५
तेन सम्बोधने न स्यात् तथाभाव इति स्थितिः।
"हे भानु" चेत् तथा न स्यात् "हे भानव" स्तथा च न॥ ६४६

स्मृतो

"उ" तत्र च स्थितः शब्दः शम्भुरिति प्रतीयते।
"उ स्मृतः येन" तत्र स्यात् भवेत् स्मृती च पूर्व्ववत्॥ ६४७
स्मृतोः स्मृतावौ स्मृताव इत्यादिकं पदं भवेत्।
स्मृताव् भवेत् स्मृतावौ च स्मृताः भवेत् तथैव च॥ ६४८

इति ओदन्ताः

## अथ ऐदन्तप्रकरणम्

२८६। रायो हलि। ७।२।८५

रै

अकारः स्यात् यदा च रैं हलिह चेत् परे भवेत् ।
अचि परे पुनस्तत्र रायादेशः प्रयुज्यते ॥ ६४९
"राः" भवेच्च भवेद् "रायौ" "रायो" भवेदिति स्थितिः ।
रायं रायौ तथा रायः राया राभ्यां तथा भवेत् ॥ ६५०

इति उदन्ताः

## अथ औदन्तप्रकरणम्

ग्लौ

पदं ग्लौः स्यात् पदं ग्लावौ पदं ग्लावस्तथा भवेत् ।
ग्लावं ग्लावौ पुनः ग्लावः पदं पुनर्भवेदिह ॥ ६५१
"औतः" इति स्थितं सूत्रं तदिह न प्रयुज्यते ।
ओकारान्तो यदा शब्दः केवलं तत् तदेव हि ॥ ६५२
"ओ" "औ" तावत् सवर्णौ न ऐऔजिति च सूत्रितम् ।
सावर्ण्यं न यदा तत्र विधिः "औतः" न युज्यते ॥ ६५३

४।१।७४-११५ श्लोकाः

इति औदन्ताः

इति अजन्तपुंलिङ्गप्रकरणम्

---

भूवनो जनको यस्य जननी च मृणालिनी ।
खुकी च भगिनी यस्य भगिनी च मनोरमा ॥
वाङ्लादेशे ढाकामध्ये हरिणायामभूच्च यः ।
रामपुरहाटे येन वसतिश्च कृता परे ॥
सोऽहं हरिपददत्तः करोमि कारिकामिह ।
शकादष्टादशशते षण्णवत्यधिके खलु ॥

इति—

श्रीभूवनमोहन-मृणालिनी-सुत

श्रीहरिपददत्त विरचितायां व्याकरणकारिकायाम्

अजन्तपुंलिङ्गशब्दप्रकरणम् ।

# अजन्त-स्त्रीलिङ्ग-प्रकरणम्

## आबन्तप्रकरणम्

### मनोरमा

मनोरमा यदा तत्र यदा च सु परे पुनः ।
मनोरमा पदं तत्र "हल्ङ्याब्भ्यः" सु विलुप्यते ॥ १
मनोरमा यदा तत्र यदा स्याद् औ परे पुनः ।
सूत्रं परं तदा योज्यं सूत्रं परं भवेद् यथा ॥ २

### २८७ । औङ आपः । ७।१।१८

आकारान्तो यदा शब्द औ औट् यदा परे भवेत् ।
ईकारः स्यादाकारस्य मनोरमे तथा भवेत् ॥ ३
मनोरमा यदा तत्र यदा च जश् परे पुनः ।
मनोरमाः तदा तत्र विशेषस्तु न विद्यते ॥ ४
संबुद्धिश्चेत् परे तत्र सूत्रं परं प्रवर्त्तते ।
एकारः स्यादकारस्य यथा सूत्रं भवेत् परे ॥ ५

### २८८ । संबुद्धौ । ७।३।१०६

एकारः स्यादिहापस्तु संबुद्धिश्चेत् परे भवेत् ।
एङ्ह्रस्वादिति लोपश्च संबुद्धेः स्यात् तदा पुनः ॥ ६
पदं स्याद् हे मनोरमे द्वित्वेऽपि हे मनोरमे ।
बहुत्वे हे मनोरमाः अयमेव प्रदर्शितम् ॥ ७
मनोरमां यदा स्यादम् यदा स्याद् औट् मनोरमे ।
मनोरमा यदा शस् स्यात् अम् औट् शस् चेत् भवेत् अयम् ॥ ८

यदा मनोरमा तत्र यदा च टाप् परे पुनः ।
सूत्रं परं भवेद् योज्यं सूत्रं परं भवेद् यथा ॥ ९

### २८९ । आङि चापः । ७।३।१०५

आङ् परे चेद् परे चेद् ओस् आकार ऐ भवेत्तदा ।
भवेत् मनोरमया च टाप् इह च परे यदा ॥ १०
भवेच्च मनोरमाभ्यां भ्यामिह चेत् परे भवेत् ।
भवेत् मनोरमाभिश्च भिसिह चेत् परे स्थितः ॥ ११

यदा मनोरमा तत्र यदा च ङे परे भवेत्।
सूत्रं परं भवेद् योज्यं सूत्रं परं यथा पुनः ॥ १२

२९०। याडापः। ७।३।११३

प्रत्ययो ङित् परे यत्र याडागमो विधीयते।
आबन्तस्य भवेद् विधिः पदं परे प्रदर्शितम् ॥ १३
भवेद् मनोरमायै च वृद्धिरेचि परे यदा।
भवेत् "मनोरमायाः" च सवर्णदीर्घता तदा ॥ १४
भवेत् "मनोरमयोः" च स्यादोम् यदि परे पुनः।
भवेत मनोरमाणाम् च यदा स्यादाम् पुनः परे ॥ १५
मनोरमा यदा तत्र यदा च ङि परे भवेत्।
भवेत् मनोरमायाञ्च "ङेराम्" भवेत् तदा पुनः ॥ १६
मनोरमा यदा तत्र सुप्प्रत्ययो यदा परे।
भवेत् मनोरमासु च विस्तरेण प्रदर्शितम् ॥ १७
एवं दुर्गादयस्तत्र पदं साध्यं यथायथम्।
मनोरमा यथा च स्यात् भवन्ति ते तथैव च ॥ १८

४।२।७४-१८ श्लोकाः
रात्रिः १० घटिकाः
५।२।७४

सर्व्वनाम
सर्व्वा

प्रथमायां द्वितीयायां तृतीयायां तथैव च।
पदं मनोरमावत् स्यात् विशेषस्तु न वर्त्तते ॥ १९
परासु च विभक्तिषु विशेषो वर्त्तते खलु।
विशेषे च स्थितं सूत्रं यथा परे प्रदर्शितम् ॥ २०

२९१। सर्व्वनाम्नः स्याड् ह्रस्वश्च। ७।३।११४

आबन्तं सर्व्वनाम चेत् आदेशः स्याड् भवेदिह।
आपश्चापि भवेद् ह्रस्वः "याडि"ह च निषिध्यते ॥ २१
सर्व्वस्यै स्यात् पदं तत्र सर्व्वस्याः स्यात् तथा पुनः।
सुट् "आमि सर्व्वनाम्न"श्च सर्व्वासां स्यात् तथैव च ॥ २२
सर्व्वस्याम् स्यात् सर्व्वयोः स्यात् सर्व्वासु स्यात् तथा पुनः।
विश्वादयस्तथैव स्युराबन्ताश्च पुनर्यदा ॥ २३

२९२। विभाषा दिक्समासे बहुव्रीहौ। १।१।२८

दिक्समासे बहुव्रीहौ सा संज्ञा स्याद् विभाषया।
प्रतिषेधे स्थिते नित्ये विभाषार्थमिदं भवेत्॥ २४
भवेद् उत्तरपूर्व्वायै न चेत् संज्ञा भवेदिह।
भवेद् उत्तरपूर्व्वस्यै यदा संज्ञा विभाषया॥ २५

"दिङ्नामानि" स्थितं सूत्रं तत्र हि यः स्थितो भवेत्।
स एव स्यादिह ग्राह्यः नान्यो ग्राह्यो भवेदिह॥ २६
शब्द "उत्तरपूर्व्वा" चेत् उन्मत्ता चेत् प्रतीयते।
सर्व्वनाम तदा न स्यात् तत्कार्य्यं न भवेदिह॥ २७
भवेत् उत्तरपूर्व्वायै पदमिह यथायथम्।
आवन्तवद् भवेद् रूपं विशेषस्तु न विद्यते॥ २८
पदं सूत्रे "बहुव्रीहौ" स्पष्टार्थं च भवेदिदम्।
अन्यथापि बहुव्रीहिः स्पष्टमेव प्रतीयते॥ २९
यदा "बाह्यः" भवेदर्थः अन्तरस्मै तदा भवेत्।
नगरी चेद् भवेदर्थः अन्तरायै तदा पुनः॥ ३०

२९३। विभाषा द्वितीयातृतीयाभ्याम्। ७।३।११५

द्वितीया चेद् भवेच्च् शब्दः तृतीया चेद् भवेदिह।
ङिति परे विभाषा "स्याड्" आङो ह्रस्वो भवेदपि॥ ३१
द्वितीयस्यै तृतीयस्यै तस्माद् भवेदिति स्थितिः।
द्वितीयायै तृतीयायै तद्वत् भवेत् पदं पुनः॥ ३२
"द्वितीयस्याः" "तृतीयस्याः" तद्वद् भवेद् यदा च ङस्।
"द्वितीयायाः" "तृतीयायाः" पदं भवेत् तथैव च॥ ३३
द्वितीयस्यां तृतीयस्यां पदं भवेत् परे च ङौ।
द्वितीयायां तृतीयायां तद्वत् पदं भवेदिह॥ ३४

शेषं मनोरमावत् स्यात् विशेषश्च न विद्यते।
यथायोग्यं भवेद् योज्यम् ऊहनीयं यथायथम्॥ ३५

अम्बार्थनद्योर्ह्रस्वः

अम्बार्थानां भवेद् ह्रस्वो नद्यन्तानां तथा भवेत्।
सम्बुद्धिश्चेत् परे तत्र निदर्शनं यथा परम्॥ ३६

हे अम्ब स्यात् पदं तत्र हे अक्क स्यात् पदं तथा ।
हे अल्ल स्यात् पदं तद्वत् पुनरिह निदर्शनम् ॥ ३७
असंयुक्ता डलकाश्चेन्न तदा ह्रस्वो भवेन्न च ।
हे अम्बाडे भवेदत्र हे अम्बाले भवेत्तथा ॥ ३८

जरा

यदा जरा यदा सु स्यात् भवेद् जरा यथायथम् ।
यदा जरा यदा स्यात् औ जरसौ स्यात् पदं तदा ॥ ३९
शीभावस्तु भवेदादौ "औङ् आपः" प्रयुज्यते ।
"जरा चे"ति स्थितं सूत्रं तच्च पश्चाद् भवेदिह ॥ ४०
यदा जरा यदा स्याद् आम् सर्व्वादौ स्यात् तदा च नुट् ।
पश्चाद् जरस् समादेशः "जरसाम्" स्याद् पदं तदा ॥ ४१
हलादौ मनोरमावत् पक्षे रूपं भवेदिह ।
विशेषो न स्थितः कश्चित् तस्मात् मया न चोच्यते ॥ ४२

यदा जरा यदा स्याद् औ जरसी च तदा भवेत् ।
इत्यपि च मतं तावत् केषाञ्चिदिह दृश्यते ॥ ४३
जरस् यदा समादेश औ लुप्ते भवेच्च शी ।
सन्निपातपरिभाषा न नित्येति वदन्ति ते ॥ ४४

पूर्व्वपक्षः

जरायाः स्यात् जरस् यत्र जरावच्च भवेत्तदा ।
आदेशः स्थानिवज् ज्ञेयः इति विधिर्विराजते ॥ ४५
पञ्चसूत्री प्रवृत्ता या प्रवर्त्तते इहापि सा ।
जरस् यदा तदापि स्यात् जराकार्य्यं यथायथम् ॥ ४६
नासिकायाः यदा नस् स्यात् निशायाः स्याद् यदा च निश् ।
पृतनाया यदा पृत् स्यात् पञ्चसूत्री तदापि च ॥ ४७

उत्तरपक्षः

अनल्विधौ पुनः सूत्रे निषेधश्च प्रवर्त्तते ।
अल्विधिश्च भवेदत्र तस्मात् तथा न युज्यते ॥ ४८
आबन्ताश्च यदा शब्दा पञ्चसूत्री तदा भवेत् ।
आदेशे न तथा कार्य्यं न चात्र सा प्रयुज्यते ॥ ४९

आप् इति तु यदा प्रोक्तं "आ आप्" तदा भवेत् खलु।
यदा ङी स्यात् तदा ङी ई इत्येव च प्रतीयते ॥ ५०
आकाररूपस्यैव हि ग्रहणं स्यात् तदा पुनः।
इकाररूपस्यैव हि ग्रहणं स्यात् तथैव च ॥ ५१
"अतिखट्व" पदं यत्र निष्कौशाम्बि पदं यदा।
न तानि च प्रयोज्याणि प्रश्लिष्टस्य विधिर्यतः ॥ ५२
जरा यदा भवेच्च शब्दः प्रत्यय औ यदा पुनः।
जरसी तु तदा सिध्येदित्यपि च मतं स्थितम् ॥ ५३
जरस् अपि यदा तत्र शीभावः स्यात् तदापि च।
सन्निपातपरिभाषा न नित्येति मतं सताम् ॥ ५४
एषः पक्षः न युक्तः स्यात् जरसी तु न दृश्यते।
न प्रयोगः स्थितो लोके तस्मात् पदं न गृह्यते ॥ ५५

पूर्व्वपक्षेः

जरायाः स्यात् जरस् तत्र जरावच्च भवेत्तदा।
आदेशः स्थानिवज्ज्ञेय इति विधिः स्थितः खलु ॥ ५६
जरायाः स्याद् यदा जरस् पञ्चसूत्री प्रवर्त्तते।
शीभावश्च तथा तत्र भवेदेव यथायथम् ॥ ५७
नासिकाया यदा नस् स्यात् निशायाः स्यात् यदा च नस्।
पृतनाया यदा पृत् स्यात् तानि पञ्च तदापि च ॥ ५८

उत्तरपक्षः

आदेशः स्थानिवद् ग्राह्य इति विधिः स्थितः खलु।
अल्विधिश्चेत् तदा न स्यात् इत्यपि च स्थितं पुनः ॥ ५९
अल्विधिश्च भवेदत्र जरावन्न ततो जरस्।
जरायाश्च यथा कार्य्यं जरसि न तथा भवेत् ॥ ६०
पञ्चसूत्री स्थिता या सा सदारम्भे प्रवर्त्तते।
आदेशश्चेत् स्थितस्तत्र तदा तु सा न युज्यते ॥ ६१
आप् इति च यदा प्रोक्तम् आ आप् इति च छिद्यते।
आकारः प्रत्ययात् प्राक् चेत् स गृह्यते इति स्थितिः ॥ ६२
"ङी" यदा च स्थितस्तत्र "ङि ई" तदा च छिद्यते।
इकारः प्रत्ययात् प्राक् चेत् स गृह्यते इति स्थितिः ॥ ६३

आकाररूपस्यैव हि सर्व्वत्र ग्रहणं भवेत् ।
ईकाररूपस्यैव हि सर्व्वत्र ग्रहणं मतम् ॥ ६४
"अतिखट्ट" यदा तत्र "निष्कौशाम्बि" यदा पुनः ।
"अः" ह्रस्वः स्यात् इः ह्रस्वः स्यात् तस्मात् तानि भवन्ति न ॥ ६५
"अतिखट्ट" यदा तत्र यदा च टा परे परे भवेत् ।
याडापः न लगेत् सूत्रम् आङिह न प्रवर्त्तते ॥ ६६

नासिका

नासिकाया यदा नस् स्यात् यदा च शस् परे भवेत् ।
"नसः" तदा पदं तत्र टा यदा च तदा नसा ॥ ६७
यदा "नस्" स्याद् यदा भ्याम् स्यात् नोभ्याम् पदं तदा भवेत् ।
पक्षे मनोरमावच्च पदं भवेत् परे सुटि ॥ ६८

निशा

निशायाश्च निसादेशः पुनरिह प्रयुज्यते ।
यदा शस् च यदा टा च निशः निशा तदा भवेत् ॥ ६९
यदा निशा यदा भ्याम् च विशेषो विद्यते खलु ।
विशेषे च स्थितं सूत्रं यथा परे प्रदर्शितम् ॥ ७०

२९४। **व्रश्च-भ्रसज-सृज-मृज-यज-राज-भ्राज-च्छसां षः । ८।२।३६**

व्रश्च भ्रसज यदा तत्र सृज मृज यदा पुनः ।
यज राज यदा तत्र भ्राज दश पुनर्यदा ॥ ७१
अन्तादेशस्तदा तत्र भवेत् सदा षकारता ।
झलि परे पदान्ते च पुर्नविधिः प्रयुज्यते ॥ ७२
यदा निश् च यदा भ्याम् च तदा निभ्भ्याम् भवेदिह ।
षकारस्य डकारः स्यात् पदं निड्भ्यां तदा भवेत् ॥ ७३
यदा निश् स्यात् यदा भिस् च निड्भिः पदं तदा भवेत् ।
इह चापि विशेषो न यथापूर्व्वं भवेत् पदम् ॥ ७४
यदा निश् च यदा सुप् च निट्त्सु पदं भवेत् तदा ।
प्रक्रिया च विस्तरेण परं मया प्रदर्शिता ॥ ७५
"व्रश्च" इति षकारः स्यात् ततो भवेत् डकारता ।
"ङसि धुट्" च धुडागमः चर्त्वं पुनः प्रसज्यते ॥ ७६

असिद्धत्वात् टतयोर्न टथौ पुन मताविह ।
"न पदान्तात्" न ष्टुत्वं स्यात् निट्त्सु पदं तथा भवेत् ॥ ७७
यदा घुट् न यदा "निश् सु" "व्रश्च" इति षकारता ।
षकारश्चेत् ककारः स्यात् तत्र सूत्रं परं भवेत् ॥ ७८

२९५। षढोः कः सि। ८।२।४१

सकारश्चेत् परे तत्र षस्य तस्य ककारता ।
यदा निश् सुप् तदा निक् सुप् इति पुनः प्रसज्यते ॥ ७९
ककारस्तु न तावत् स्यात् जश् असिद्धं मतं भवेत् ।
"झलां जश्" च स्थितं पूर्व्वे "षढो कः सि" परे स्थितम् ॥ ८०

"दादेर्धातोः" स्थितं सूत्रं तस्मात् "धातोः" प्रवर्त्तते ।
तेन जश्त्वं जकारः स्यात् इत्यपि च मतं स्थितम् ॥ ८१
तेन निज्भ्याम् भवेदत्र जकारस्तु यदा भवेत् ।
निजभिर्भवेत् तथैवेह जकारस्तु भवेद् यदा ॥ ८२
"चोः को"रिति न कुत्वं स्यात् जशसिद्धं भवेदिह ।
जश्त्वं श्चुत्वं ततः चर्त्वं निच्शु निच्छु पदं भवेत् ॥ ८३

मांस-पृतना-सानूनां मांस्-पृत्-स्नवो वाच्यः
शसादौ वा (वा)

"मांस" "सानु" न स्त्रियां स्यात् पृतना च स्त्रियां भवेत् ।
एका स्त्री पृतना चात्र सा चोदाह्रियते पुनः ॥ ८४
यदा पृत् च यदा शस् च पृतः पदं तदा भवेत् ।
यदा पृत् च यदा टाप् च तदा पृता पदं पुनः ॥ ८५
यदा पृत् च यदा भ्याम् च पदं पृद्भ्याम् तदा भवेत् ।
पक्षे मनोरमावच्च रूपं भवेदिति स्थितिः ॥ ८६
विश्वपावत् भवेद् गोपाः न सुलोपो भवेदिह ।
आवन्तो न भवेत् शब्दः सुलोपश्च न लभ्यते ॥ ८७

५।२ ७४-६९ श्लोकाः

इति आदन्ताः

६।२।७४

## अथ इदन्तप्रकरणम्

### मति

प्रायेण हरिवच्चात्र भवेद् मतिरिति स्थितिः ।
शसि तस्य विशेषः स्यात् इह स उच्यते तथा ॥ ८८
यदा "मति" यदा शस् च पदं "मतीः" तदा भवेत् ।
"तस्मात् शसोः" भवेत् पुंस्त्वे तदिह च न युज्यते ॥ ८९
यदा मति यदा टा च तदा मत्या पदं भवेत् ।
अस्त्रियां स्यात् आङो नेति तस्मात् सूत्रं न युज्यते ॥ ९०

यदा "मति" यदा ङे च विशेषस्तु भवेत् तदा ।
तदा नदी भवेत् संज्ञा सूत्रं परं यथा पुनः ॥ ९१

२९५ । ङिति ह्रस्वश्च । १।४।६

ङकार इद् भवेद् यस्य स प्रत्ययः परे यदि ।
ई ऊ दीर्घौ नदी वा स्यात् इयङ्‌वङ् यदापि च ॥ ९२
ङकार इद् भवेद् यस्य सः प्रत्ययः परे यदि ।
इ उ ह्रस्वो नदी वा स्याद् स्त्रियां शब्दः स्थितो यदा ॥ ९३

इयङ्‌वङ्‌स्थानयोश्च संज्ञा पूर्व्वमपाकृता ।
ङिदिह चेत् परे तत्र विभाषा सा प्रवर्त्तते ॥ ९४
वाक्यद्वयं चकारेण संपद्यते इति स्थितिः ।
प्रथमं प्रथमे श्लोके द्वितीयस्तु द्वितीयके ॥ ९५
नित्यं नदी भवेत् स्त्री च न विभाषा भवेदिह ।
इयङ् तस्य भवेद् वापि नदीत्वं न विहन्यते ॥ ९६
यदा मति यदा ङे स्यात् "आन् नद्याश्च" प्रवर्त्तते ।
आड् भवेच्च भवेद् वृद्धि र्यणादेशस्ततो भवेत् ॥ ९७
मत्यै भवेत् पदं तत्र नदीत्वे च पदं भवेत् ।
अन्यथा मतये तत्र "घेर्ङिति" च गुणे पदम् ॥ ९८
"मति ङसि" "मति ङस्" चेत् मत्याः मतेः पदं भवेत् ।
यदा नदी भवेत् "मत्याः" नदी न चेद् भवेत् "मतेः" ॥ ९९

मति यदा यदा स्यादाम् ह्रस्व इति प्रवर्त्तते ।
नुड़ागमः पुनर्दीर्घः मतीनां स्यात् पदं तदा ॥ १००
यदा मति यदा ङि स्यात् सूत्रम् "औठ्" च प्रवर्त्तते ।
केवलम् औत् भवेदत्र सूत्रं परं ततो भवेत् ॥ १०१

२९७। इदुद्भ्याम्। ७।१।११७

इकारश्चेद् उकारश्चेद् यदा नदी भवेदिह ।
ताभ्यां परे यदा स्यात् "ङि" तस्य स्याद् आम् इति स्थितिः ॥ १००
एवं मत्यां पदं तत्र नदीत्वे च प्रजायते ।
"अच्च घेः" स्यात नदी चेत् न पदं मत्यौ भवेत् तदा ॥ १०३
श्रुतिः स्मृतिर्भवेदेवं मतिवच्च भवेद् गतिः ।
विशेषो न स्थितः कश्चिद् आरभ्यते परं पुनः ॥ १०४

त्रि चतुरः

२९८। त्रिचतुरोः स्त्रियां तिसृचतसृ। ७।२।९९

विभक्तिश्चेत् परे तत्र स्त्रियां शब्दो भवेद् यदि ।
तिसृ भवेत् त्रिशब्दस्य चतसृ चतुरो भवेत् ॥ १०५

२९९। अचि र ऋतः। ७।२।१००

अचि परे ऋकारस्य रेफादेशो भवेदिह ।
चतस्रः स्यात् तदा तत्र तिस्रः स्याच्च तदा पुनः ॥ १०६
यदा तिसृ यदा स्याद् आम् तिसृणाम् स्यात् पदं तदा ।
वार्त्तिक"मचिरेने"ति नुड़ागमो भवेत्तथा ॥ १०७
तिसृणाम् स्याद् यदा तत्र दीर्घस्तदा न वर्त्तते ।
दीर्घस्य प्रतिषेधे तु सूत्रं परं भवेदिह ॥ १०८

३००। न तिसृ-चतसृ। ६।४।४

यदा तिसृ भवेदत्र चतसृ च यदा पुनः ।
नामि परे न दीर्घः स्यात् इति स्थितिर्भवेदिह ॥ १०९
यदा "त्रि" च भवेच् शब्दः यदा सुप् च परे भवेत् ।
तिसृषु स्यात् पदं तदा विशेषो न स्थितः पुनः ॥ ११०
तिसृ भवेत् स्त्रियां तत्र चतसृ स्यात् स्त्रियां पुनः ।
स्त्रियां यदा न शब्दः स्याद् तिस्रादेशस्तदा च न ॥ १११

(१) त्रिशब्दः पुंसि क्लीवे—प्रियत्रि स्त्रियाम्

प्रियास्त्रयस्त्रीणि यस्याः सा "प्रियत्रि" यदा भवेत् ।
यदा "त्रि" न स्त्रियां तत्र तिस्रादेशो न युज्यते ॥ ११२
"प्रियत्रिः" स्यात् पदं तत्र मतिवच्च पदं भवेत् ।
आमि प्रियत्रयाणां स्यात् विशेषः स भवेदिह ॥ ११३

पुंसि यदा भवेदङ्गम् अङ्गं नपुंसके यदा ।
त्रि चतुर चेत् स्त्रियां तत्र समादेशस्तदापि च ॥ ११४

(२) त्रिशब्दः स्त्रियाम्—प्रियत्रि पुंसि

"प्रियाः तिस्रः यस्य स" चेत् पुंसि यदि पदं भवेत् ।
प्रियतिसा प्रियतिस्रौ प्रियतिस्रो भवेत्तदा ॥ ११५

(३) त्रिशब्दः स्त्रियाम्—प्रियत्रि क्लीवे

"प्रियाः तिस्रः यस्य तत्" चेत् पदं स्यात् चेत् नपुंसके ।
"प्रियत्रि" स्यात् पदं तत्र तिस्रादेशो न वर्त्तते ॥ ११६
स्वमोर्लुक् च भवेदत्र प्रत्ययता तदा च न ।
प्रत्ययता न यस्मात् स्यात् तिस्रादेशस्तथा च न ॥ ११७
"न लुमता" स्थितं यत् तत् यदानित्यं मतं भवेत् ।
तदा तिस्र समादेशो भवेदत्र सतां मते ॥ ११८
प्रियतिस्थ तदा शब्दः पदं भवेत् तथैव च ।

वादेशात् पूर्व्वविप्रतिषेधेन नूम् (वा)

वादेशात् प्राक् भवेन्नुम् च पूर्व्वस्य प्रतिषेधतः ॥ ११९
स्यात् प्रियतिसृणी तत्र स्यात् प्रियतिसृणीति च ।
तृतीयादौ पर्य्यायेन नुम् भवेच्च भवेच्च रः ॥ १२०
पदं भवेत् तदा पुंसि पदं भवेत् नपुंसके ।
प्रियतिस्रा भवेत्तत्र स्यात् प्रियतिसृणा तथा ॥ १२१

द्वि (स्त्रियाम्)

द्विशब्दः स्यात् स्त्रियां यत्र पदं भवेद् यथा परम् ।
"त्यदादीनाम्" भवेद् अत् च पश्चाद् आप् च प्रयुज्यते ॥ १२२
"द्वा" तदा तु प्रकृतिः स्यात् तस्मात् पदं प्रवर्त्तते ।
"द्वे" भवेच्च भवेद् द्वाभ्याम् द्वयोर्भ चेत् तदा पदम् ॥ १२३

इति इदन्ताः

## अथ ईदन्तप्रकरणम्

### मृणालिनी

मृणालिनी यदा शब्दो भवेत् पदं यथापरम् ।
मृणालिनी मृणालिन्यौ मृणालिन्यो यथाक्रमम् ॥ १२४
सम्बुद्धौ हे मृणालिनि "अम्बार्थे"ति प्रयुज्यते ।
पदं मृणालिनीम् च स्यात् अमि पूर्व्वं भवेदिह ॥ १२५
मृणालिन्या पदं च स्यात् यदा टा च प्रयुज्यते ।
भवेत् मृणालिनीभ्याञ्च स्याद् मृणालिनिभिस्तथा ॥ १२६
मृणालिनी यदा ङे स्यात् मृणालिन्यै पदं तदा ।
"आन् नद्याश्च" भवेत् सूत्रम् "आटश्चे"ति प्रयुज्यते ॥ १२७
मृणालिन्याः मृणालिन्यां पदं भवेत् तथैव च ।
मृणालिन्योः भवेद् ओसि सन्धिर्भवेद् यथोचितम् ॥ १२८
पदं मृणालिनीनाम् स्यात् आमि परे नुडागमे ।
पदं मृणालिनीषु स्यात् सुप् इह चेत् परे भवेत् ॥ १२९

### खुकी

एवं खुकी यदा शब्दः पदं भवेत् यथायथम् ।
खुकी खुक्यौ तथा खुक्यः पदानि स्युः यथायथम् ॥ १३०
हे खुकि स्यात् च सम्बुद्धौ "अम्बार्थे"ति प्रयुज्यते ।
खुकीम भवेत् यदा स्याद् अम् "अमि पूर्व्वं" प्रयुज्यते ॥ १३१
पदं खुक्या भवेदत्र टाप्रत्ययो यदा परे ।
खुकीभ्यां स्यात् खुकिभिः स्यात् भ्याम् भिस् यदा परे भवेत् ॥ १३२
खुक्यै खुक्याः ङे ङस् यत्र खुक्याम् भवेत् ङि चेत् परे ।
खुक्योः भवेद् यदा स्याद् ओस् खुकीनाम् स्यात् नुड़ागमे ॥ १३३
खुकीषु स्यात् यदा सुप् च विस्तरेण प्रदर्शितम् ।
एव वाण्यादयश्च स्युरूहनीयं यथायथम् ॥ १३४

६।२।७४-४७ श्लोकाः
प्रातः ६ घटिका वृहस्पतिवारः

### सखी (स्त्रियाम्)

यदा सखी स्त्रियां शब्दः पदं साध्यं भवेद् यदा ।
संशयस्तु भवेदत्र अनङ् इह भवेन्न वा ॥ १३५

प्रातिपदिकमाश्रित्य विधानं चेत् प्रवर्त्तते ।
लिङ्गमपि भवेद् ग्राह्यं परिभाषा तथा स्थिता ॥ १३६
यदा "सखि" भवेत् शब्दः "सखी" चापि च गृह्यते ।
पुंसश्चेद् ग्रहणं तत्र स्त्रियाश्च ग्रहणं भवेत् ॥ १३७
"अनङ् सौ" च स्थितं सूत्रं पुंसि तत्र प्रयुज्यते ।
"अनङ् सौ" च पुनः सूत्रं यदा "सखी" तदापि च ॥ १३८
"सखि"शब्दात् यतः पुंसः सूत्रमनङ् प्रवर्त्तते ।
सखीशब्दात् स्त्रीलिङ्गाच्च तस्मादनङ् भवेदिह ॥ १३९
अनङ् यदा भवेत्तत्र ङिद्वत् कार्य्यं तदा भवेत् ।
सख्युरिति स्थितं सूत्रं तत् तदा च प्रवर्त्तते ॥ १४०
एवं ङिद्वत् यदा प्राप्तं परिभाषा पुनस्तदा ।
विभक्तिश्चेत् परे तत्र लिङ्गं तत्र न गृह्यते ॥ १४१
"सखि" शब्दात् यथा स्याच्च "सखी" शब्दात् तथा च न ।
सखी मृणालिनीवत् स्यात् तद्वत् रूपं भवेदिह ॥ १४२
सखी सख्यौ भवेदत्र सख्यः भवेत् तथा पुनः ।
अन्यद् यच्च भवेद्रूपमूहनीयं बुधैश्च तत् ॥ १४३

लक्ष्मीः

यदा लक्ष्मीः भवेच् शब्दः सुलोपो न विधीयते ।
ई स्त्रियां न भवेदत्र "हलङ्याब्भ्य"श्च न युज्यते ॥ १४४
एवं लक्ष्मीः बिसर्गः स्यात् सुलोपो न भवेदिह ।
अवी तन्त्री तरी तद्वत् सर्व्वत्रैव विसर्ज्जनम् ॥ १४५
यदा ङीषि भवेल्लक्ष्मी सुलोपस्तु तदा भवेत् ।
लक्ष्मी तदा पदं तत्र विसर्गो न प्रवर्त्तते ॥ १४६

स्त्री

यदा स्त्री स्यात् यदा सु स्यात् पदं स्त्री तु तदा भवेत् ।
सम्बुद्धिश्चेत् भवेत् हे स्त्रि विशेषो न स्थितः पुनः ॥ १४७
यदा स्त्री स्याद् यदा स्याद् औ यदा स्त्री च यदा च जश् ।
सूत्रं परं भवेद् योज्यं सूत्रं परं भवेद् यथा ॥ १४८

३०१ । स्त्रियाः । ६।४।७९

अजादि सुप् परे स्याच्चेत् स्त्रीशब्दस्य भवेदियम् ।
स्त्रियौ स्त्रियः पदं तत्र भवेदियङिति स्थितिः ॥ १४९

यदा स्याद् औट् यदा शस् स्यात् सूत्रं परं प्रवर्त्तते ।
इयमत्र विभाषा स्यात् सूत्रमिह परं यथा ॥ १५०

३०२ । वाऽम्शसोः । ६।४।८०

अमि शसि परे तत्र भवेदियङ् विभाषया ।
स्त्रियम् स्त्रीम् स्यात् स्त्रियः स्त्रीः स्याद् अमि परे परे शसि ॥ १५१
यदा स्त्री स्याद् यदा टाप् स्यात् पदं स्त्रिया तदा भवेत् ।
यदा स्त्री स्याद् यदा ङे स्यात् स्त्रियै पदं तदा पुनः ॥ १५२
यदा स्त्री स्याद् यदा ङसि यदा स्त्री स्याद् यदा च ङस् ।
स्त्रियाः पदं भवेदादौ स्त्रियाः पदं भवेत् परे ॥ १५३
यदा स्त्री स्याद् यदा स्याद् आम नुड़ागमो भवेदिह ।
नुटि स्त्रियाम पदं तत्र न तावत् स्यादियङ् पुनः ॥ १५४
स्त्रियां स्त्रियोः पुनः स्त्रीषु ङि ओस् सुप् चेत् परे भवेत् ।
स्त्रीशब्दस्य भवेद् यत् यत् तत् तत् मया प्रदर्शितम् ॥ १५५

अतिस्त्रि (पुंसि)

अतिक्रान्तः स्त्रियं यः स स्याद् अतिस्त्रि तदा हि सः ।
अतिस्त्रिः स्यात् पदं तत्र अतिस्त्रियौ पदं भवेत् ॥ १५६
"गुण-नाभाव-औत्व नुड्भिः परत्वात् पुंसि बाध्यते ।
क्लीवे नुमा च स्त्रीशब्दस्येयमित्यवधार्य्यताम् ॥"
भवेद् गुणो भवेत् ना च भवेद् औत्वं भवेन्न नुम् ।
परत्वाच्च भवन्त्येते पूर्व्वत्वान्न भवेदियम् ॥ १५७
"अतिस्त्रि" स्याद् यदा शब्दः प्रत्ययो जश् यदा पुनः ।
"जशि चे"ति गुणः स्याच्च अतिस्त्रयः पदं भवेत् ॥ १५८
"अतिस्त्रि" स्याद् यदा शब्दः टाप्रत्ययः पुनर्यदा ।
आङो ना स्यात् तदा तत्र अतिस्त्रिणा पदं भवेत् ॥ १५९
"अतिस्त्रि" स्याद् यदा शब्दः प्रत्ययो ङि यदा पुनः ।
"अच्च घेः" स्यात् भवेद् औत्वं अतिस्त्रौ स्यात् पदं तदा ॥ १६०
"अतिस्त्री" स्याद् यदा शब्दः प्रत्यय आम् पुनर्यदा ।
"ह्रस्वे"ति स्यात् पुनः नुट् च अतिस्त्रिणां पदं भवेत् ॥ १६१
भवेद् गुणो भवेद् ना च भवेद् औत्वं भवेन्न नुम् ।
परत्वाच्च भवन्त्येते पूर्व्वत्वान्न भवेदियम् ॥ १६२

"हे अतिस्त्रि" पदं तत्र अतिस्त्रिया पदं तथा ।
अतिस्त्रयः पदं तद्वत् सम्बुद्धौ च भवेत् त्रयम् ॥ १६३
अतिस्त्रियम् अतिस्त्रिं स्यात् अतिस्त्रियौ अतिस्त्रियः ।
अतिस्त्रीन् च भवेच् शब्दो द्वितीयायां प्रदर्शितम् ॥ १६४
अतिस्त्रि स्याद् यदा शब्द यदा ङे च भवेदिह ।
अतिस्त्रये पदं तत्र गुणे पदं भवेदिह । १६५
अतिस्त्रि स्याद् यदा शब्दो ङसि यदा भवेन् परे ।
अतिस्त्रेः स्यात् तदा रूपं ङस् परे चेत् तथैव च ॥ १६६
अतिस्त्रि स्याद् यदा शब्दः प्रत्यय ओस् परे यदा ।
अतिस्त्रियोः पदं तत्र प्रायशश्च प्रदर्शितम् ॥ १६७
अतिस्त्रि स्याद् यदा शब्द भिस् भ्याम् यदा परे भवेत् ।
अतिस्त्रिभिः अतिस्त्रिभ्याम् पदं तदा भवेदिह ॥ १६८
"औस्यौकारे च नित्यं स्यात् अमृशसोस्तु विभाषया ।
इयादेशोऽचि नान्यत्र न स्त्रियाः पुंस्युपसर्ज्जने ॥"
स्त्रीशब्दः स्याद् यदा गौणः समासश्च भवेद् यदा ।
इयमचि भवेन्नित्यम् अमि शसि विभाषया ॥ १६९

## अतिस्त्रि (न पुंसके)

अतिस्त्रि स्यात् पदं तत्र अतिस्त्रियी पदं भवेत् ।
अतिस्त्रीणि पदं च स्यात् भवेदिह नुड़ागमः ॥ १७०
अतिस्त्रिणा यदा टा स्यात् अतिस्त्रिणे यदा च ङे ।
ङेप्रभृतौ पुनः पक्षे प्राग्वद् रूपं भवेदिह ॥ १७१
अतिस्त्रये यदा ङे स्यात् अतिस्त्रिणे तथैव च ।
अतिस्त्रेः स्याद् ङसौ तत्र अतिस्त्रिणां पदं तथा ॥ १७२
अतिस्त्रियो भवेद् रूपमतिस्त्रियोः तथा भवेत् ।
पुंसि यथा तथा रूपं पुनरिह प्रवर्त्तते ॥ १७३

## अतिस्त्रि (स्त्रियाम्)

अतिस्त्रि स्यात् स्त्रियां यत्र पुंसीव च पदं भवेत् ।
इह ये च विशेषाः स्युस्ते च परं प्रदर्शिता ॥ १७४
अतिस्त्रीः स्याद् यदा शस् स्यात् अतिस्त्रिया यदा च टा ।
अतिस्त्रै स्याद् यदा ङे स्यात् ङिति ह्रस्वः प्रयुज्यते ॥ १७५

नदी संज्ञा विभाषा स्यात् अतिस्त्रियै अतिस्त्रिये ।
अतिस्त्रियाः अतिस्त्रेः स्यात् अतिस्त्रीणां तथा पुनः ॥ १७६
अतिस्त्रियाः अतिस्त्रौ च ङौ परे च पदं भवेत् ।
इह ये ये विशेषाः सूत्रे च मया प्रदर्शिताः ॥ १७७

७-२-७४-४३ श्लोकाः
रात्रिः १० घटिकाः

श्री

श्री यदा च भवेच् शब्दः सु औ जस् च परे यदा ।
श्रीः भवेच्च भवेत् श्रियौ श्रियः भवेत् पदं तदा ॥ १७८
सम्बुद्धिश्चेत् परे तत्र न युज्यते इयङ् तदा ।
निषेधे च भवेत् सूत्रं यथा परे प्रदर्शितम् ॥ १७९

३०३। नेयङुवङ्स्थानावस्त्री। १।४।४

गतिर्भवेदियङ् यस्य यस्य गतिर्भवेदुवङ् ।
नदी तस्य न संज्ञा स्यात् श्री नित्यन्तु भवेन्नदी ॥ १८०
"हे श्री सु" च यदा तत्र हे श्रीः पदं भवेत्तदा ।
इयङत्र न सिध्येच्च इयमत्र निषिध्यते ॥ १८१
यदा श्री स्यात् यदा ङे च पदं श्रियै तदा भवेत् ।
यदा श्री स्याद् यदा ङसि पदं श्रियाः पदं श्रियः ॥ १८२
"ङिति ह्रस्वः" भवेत् सूत्रं तदिह च प्रयुज्यते ।
ङिति परे नदी संज्ञा प्रवर्त्तते विभाषया ॥ १८३
यदा श्री स्याद् यदा स्यादाम् पदं साध्यं भवेद् यदा ।
प्रयोजनं भवेत् सूत्रं यथा परे प्रदर्शितम् ॥ १८४

३०४। वामि। १।४।५

गतिर्भवेदियङ् यस्य गतिर्यस्य भवेदुवङ् ।
आमि नदी विभाषा सा श्री नित्यन्तु भवेन्नदी ॥ १८५
यदा श्री स्याद् यदा स्यादाम् श्रियाम् पदं तदा भवेत् ।
नदी भवेत् विभाषा श्री भवेद् आमि तथा पदम् ॥ १८६
यदा श्री स्याद् यदा स्याद् आम् श्रीणाम् पदं तदा भवेत् ।
नुडागमो भवेदत्र णत्वे पदं भवेत् यथा ॥ १८७
यदा श्री स्यात् यदा ङि स्यात् श्रियि श्रियां पदं तदा ।
प्रधीशब्दे विशेषो य स उच्यते परं मया ॥ १८८

### प्रधी

लक्ष्मीवत् स्यात् प्रधी तत्र वृत्तिकारमतं हि तत् ।
नित्यं स्त्रियां स्थितः शब्दः शब्दान्तरं विनापि च ॥ १८९
लिङ्गान्तरे न शब्दः स्यात् पुंस्येव हि प्रवर्त्तते ।
पुंवद्रूपं भवेत्तस्य कैयटस्य मतं पुनः ॥ १९०
प्रकृष्टा धी यदा वाक्यं लक्ष्मीवत् च भवेत् यदा ।
अमि शसि विशेषः स्यात् प्रध्यम् प्रध्यस्तथा भवेत् ॥ १ १
सुष्ठुधी यस्य सुधी स इति वाक्यं भवेद् यदि ।
श्रीशब्दवद् भवेद् रूपं वृत्तिकारमतं हि तत् ॥ १९२
सुष्ठु ध्यायति या सेति पुनर्व्वाक्यं भवेद् यदि ।
तदापि च पदं श्रीवत् इत्यपि वृत्तिकृत् पुनः ॥ १९३
पुंवद् रूपं भवेत्तस्य परेषां च मतं स्थितम् ।
सुष्ठु धी श्चेत् भवेद् वाक्यं श्रीवत् स्यात् कर्मधारये ॥ १९४
ग्रामणी च स्त्रियां शब्दः पुंवदेव पदं भवेत् ।
खलपूश्चेत् कटप्रूश्चेत् पुंवदेव भवेत् पदम् ॥ १९५
इति ईदन्ताः

## अथ उदन्तप्रकरणम्

### धेनुः

मतिवच्च भवेद् "धेनु" विशेषश्च न दृश्यते ।

### क्रोष्टु

क्रोष्टुशब्दे विशेषो यस्तस्मिन् सूत्रं परं भवेत् ॥ १९६

### ३०५ । स्त्रियां च । ७।१।९६

स्त्रीवाची च यदा शब्दः तृजन्तवद् भवेद् गतिः ।
क्रोष्ट्री तदा भवेद् रूपम् ङीविह स्यात् परेण च ॥ १९७

### ३०६ । ऋन्नेभ्यो ङीप् । ४।१।५

ऋकारान्तो यदा शब्दो नकारान्तो यदा पुनः ।
प्रत्ययः ङीप् तदा योज्यः स्त्रियामिष्टं पदं यदा ॥ १९८
एवं पदं भवेत् क्रोष्ट्री रूपं भवेत् यथा परम् ।
क्रोष्ट्री क्रोष्ट्र्यौ पुनः क्रोष्ट्र्यः सु औ जश् चेत् परे भवेत् ॥ १९९

## अथ ऊदन्तप्रकरणम्

यथा मृणालिनी तत्र तथा वधू भवेत् पुनः ।
श्रीवत् भ्रूश्च भवेत् शब्दः विशेषो न स्थितः खलु ॥ २००
खलपू चेत् स्त्रियां तत्र पुंवदेव गतिर्भवेत् ।
पुनर्भूः स्याद् यदा शब्दः तदा रूपं यथा परे ॥ २०१

पुनर्भू

उकारस्य वकारः स्याद् दृणभुः स्याद्धि च वार्त्तिकम् ।
उवङ् तस्मात् न सिध्येच्च नेयमिति न युज्यते ॥ २०२
नदी संज्ञा भवेत्तस्मात् हे पुनर्भू पदं भवेत् ।
पुनर्भूः स्यात् पुनर्भ्वौ च पुनर्भ्वः स्यात् पदं तदा ॥ २०३
पुनर्भूः स्याद् यदा शब्दः यदा स्याद् आम् परे पुनः ।
नकारस्य भवेत् णत्वं सूत्रं परं प्रवर्त्तते ॥ २०४

**३०७ । एकाजुत्तरपदे णः । ८।४।१२**

समासश्चेद् भवेदत्र पदमेकाच् परे यदा ।
पूर्व्वे यदि निमित्तं स्यात् परस्य "न" भवेच्च णः ॥ २०५
"न" परे चेत् पदान्ते स्यात् अथवा नुम् भवेत् परे ।
विभक्तौ चेत् परे न स्यात् तदैव हि भवेद् विधिः ॥ २०६
सूत्रमिह समारब्धं तेनैव नित्यता भवेत् ।
पुनर्णग्रहणं चात्र स्पष्टार्थं स्यादिति स्थितिः ॥ २०७
टनिति वार्त्तिकं स्याच्च यणिह च तथा भवेत् ।
परं यण् बाधितं चात्र परत्वात् नुट् प्रवर्त्तते ॥ २०८
वर्षाभू स्याद् यदा शब्दः स्याद आमिह परे यदा ।
भवेद् नुम च भवेद् णत्वं वर्षाभूणां पदं भवेत् । २०९

वर्षाभू

भेके यदा स्थितः शब्दः पुंसि भवेत् भवेत् स्त्रियाम् ।
सम्बुद्धिश्चेत् हे वर्षाभूः कैयटस्य मते भवेत् ॥ २१०
हे वर्षाभू पदं भवेत् परेषां च मते पुनः ।
भेके पुनर्नवायां स्त्री भेके तु केवलं पुमान् ॥ २११

इति ऊदन्ताः

### अथ ऋदन्तप्रकरणम्

३०८। न षट् स्वस्रादिभ्यः। ४।१।१०

न च षट् संज्ञकेभ्यः स्यात् ङीप् टाविह सतां मते।
स्वस्रादिकं भवेत् सप्त गणे मया प्रदर्शितम्॥ २१२
"अप्तृन्नि"ति भवेद् दीर्घः पदं परं यथा भवेत्।
स्वसा स्यात् स्वसारौ स्याच्च स्वसारः स्यात् तथैव च॥ २१३

मातृ

मातृशब्दः स्थितो लोके पितृवच्च भवेत् पदम्।
शसि पदं भवेत् मातॄः विशेषः स भवेदिह॥ २१४

इति ऋदन्ताः

### अथ ऐदन्तप्रकरणम्

रैशब्दश्चेत् स्त्रियां तत्र पुंसीव च पदं भवेत्।

इति ऐदन्ताः

### अथ ओदन्तप्रकरणम्

द्योशब्दश्च स्थितस्तत्र गोशब्दवत् प्रवर्त्तते॥ २१५

इति ओदन्ताः

### अथ औदन्तप्रकरणम्

नौशब्दश्च स्त्रियां तत्र ग्लौशब्दवत् पदं भवेत्।
स्त्रियां ये ये स्थिताः शब्दाः ते ते मया प्रदर्शिताः॥ २१६

इति औदन्ताः

८।२।७४-३९ श्लोकाः

शुक्रवारः द्विप्रहरः (२-३०) घटिकाः

इति अजन्तस्त्रीलिङ्गप्रकरणम्

---

श्रीभुवनमोहन-मृणालिनी-सुत
श्रीहरिपददत्तविरचितायां व्याकरणकारिकायाम्
अजन्तस्त्रीलिङ्गप्रकरणम्।

## अथ अजन्तनपुंसकलिङ्गप्रकरणम्

### अदन्तप्रकरणम्

#### ज्ञान

ज्ञानमिति यदा शब्दः सु परे च भवेद् यदा।
इह सूत्रं भवेद् योज्यं सूत्रं परं यथा भवेत्॥ १

**३०९। अतोऽम्। ७।१।२४**

अदन्तं चेत् भवेत् क्लीवं स्वमोरम् स्यादिति स्थितिः।
यदा ज्ञान यदा सु स्यात् ज्ञानं पदं तदा भवेत्॥ २
यदा ज्ञान यदा स्यादम् ज्ञानं भवेत् तदापि च।
"अमि पूर्व्वः" स्थितं सूत्रं तदिह च प्रयुज्यते॥ ३

**३१०। नपुंसकाच्च। ७।१।१९**

औ परे चेद् परे चेद् औट् क्लीवात् शी स्यादिति स्थितिः।
प्रकृतेश्च तदा तत्र भसंज्ञापि प्रयुज्यते॥ ४

**३११। यस्येति। ६।४।१४८**

इकारश्चेत् परे तत्र तद्धितश्चेत् परे भवेत्।
इकारस्य उकारस्य भवेत् तदा विलोपनम्॥ ५
यदा ज्ञान यदा शी स्यात् ज्ञान ई स्यात् तदा पुनः।
ज्ञानी भवेत् पदं तत्र अकारः लुप्यते तदा॥ ६
परं लोपः न तावत् स्यात् लोप इह न युज्यते।
वार्त्तिकं च स्थितं तत्र तेन लोपो निषिध्यते॥ ७

ओङः श्यां प्रतिषेधो वाच्यः (वा)

ओङः शी चेत् परे तत्र लोपो नेह विधीयते।
ज्ञान ई च यदा तत्र पदं ज्ञाने तदा भवेत्॥ ८
ज्ञान यदा पुनः शब्दः जश् शस् इह परे यदा।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते॥ ९

**३१२। जश्शसोः शिः। ७।१।२०**

जश्शसोः शि भवेदत्र क्लीवे शब्दो यदा भवेत्।
ज्ञान जश् शस् यदा तत्र ज्ञान शि स्यात् तदा पुनः॥ १०
ज्ञान शि स्यात् यदा तत्र सूत्रं परं प्रयुज्यते।
सर्व्वनामस्थानं भवेत् तदा संज्ञा परेण च॥ ११

**३१३। शि सर्व्वनामस्थानम्। १।१।४२**

इह शि यः समादेशः क्लीवात् परे विधीयते।
सर्व्वनामस्थानं तत् स्यात् तत् कार्य्यं च प्रवर्त्तते॥ १२

**३१४। नपुंसकस्य झलचः। ७।१।७२**

अजन्तं चेद् भवेदङ्गं झलन्तं चेत् भवेत् पुनः।
सर्व्वनामस्थाने तत्र भवेत् खलु नुमागमः॥ १३
यदा ज्ञान यदा शि स्यात् ज्ञान नुम् शि भवेत्तदा।
उपधाया भवेद् दीर्घः ज्ञानानि स्यात् पदं तदा॥ १४
अम् ओट् शस् चेत् परे तत्र तथैव च पदं भवेत्।
विशेषो न स्थितश्चात्र रामवत् स्यात् पदं परे॥ १५
धनं वनं फलं तत्र सममेव गतिर्भवेत्।
विस्तरो न मया दत्त ऊहनीयो बुधैरिह॥ १६

कतर

**३१५। अद्ड्डतरादिभ्यः। ७।१।२५**

पञ्चभ्यः डतरादिभ्यः स्वमोरदड् भवेदिह।
डतरो डतमश्चान्यत् अन्यतरस्तथेतरत्॥ १७

**३१६। टेः। ६।४।१४३**

भस्य च टेर्भवेल्लोपः ङिदिह चेत् परे भवेत्।
कतरत् कतरे तत्र कतमानि तथा पुनः॥ १८
सूत्रञ्च "वावसाने" स्यात् कतरत् च तथा भवेत्।
कतरत् कतरद् तत्र पदद्वयं भवेत्तथा॥ १९
सम्बुद्धेर्नलोपस्तत्र सवर्णदीर्घता न च।
प्रथमयोः एङिति न भस्य टेश्च विलोपनम्॥ २०
हे कतरत् भवेत्तस्मात् हे कतरे तथैव च।
भवेत् हे कतराणि च शेषे पुंवत् पदं भवेत्॥ २१
कतमत् स्यात् पदं तत्र स्यादन्यश्च पदं तथा।
अन्यतरत् भवेत्तद्वत् इतरत् स्यात् तथैव च॥ २२

एकतरात् प्रतिषेधो वाच्यः (वा)

एकतरो यदा शब्दः प्रतिषेधो भवेत्तदा।
एकतरम् भवेदत्र न स्यादेकतरत् पुनः॥ २३

अजर (नपुंसके)

अजर सु यदा च स्याद् अजर् औम् च तदा भवेत् ।
सन्निपातपरिभाषाबलाद् जरस् न युज्यते ॥ २४
अजर् यदा यदा स्यादम् अजरञ्च पदं भवेत् ।
अजरसी भवेद् द्वित्वे स्यादजरे तथैव च ॥ २५
अजर स्याद् यदा तत्र जश् इह च यदा पुनः ।
प्रत्ययः शि भवेदत्र भवेद् जरस् भवेच्च नुम् ॥ २६
जरसिह भवेदादौ पश्चात् नुम् च प्रवर्त्तते ।
एवं यदा स्थितं तत्र सूत्रं परं भवेदिह ॥ २७

३१७। सान्तमहतः संयोगस्य। ६।४।१०

सान्तो यः संयोगस्तत्र तस्य "म" चेद् भवेदिह ।
महतो यो नकारः स्यात् स चेदिह परे भवेत् ॥ २८
सर्व्वनामस्थाने परे उपधादीर्घता तदा ।
सम्बुद्धिश्चेत् तदा न स्यादुपधादीर्घता पुनः ॥ २९
अजरांसि पदं तस्मात् जसि परे भवेदिह ।
अजराणि पदं तद्वत् न चेद् भवेद् पुनर्जरस् ॥ ३०
अजर अम् यदा तत्र सूत्रत्रयं प्रवर्त्तते ।
"स्वमोः" च स्याद् "अतोऽम्" स्यात् "जरायाः" स्यात् तथैव च ॥ ३१
आद्यं द्वयं तु बाधित्वा परत्वाद् स्याद् जरस् तदा ।
सन्निपातपरिभाषा भवेदिह न लुक् ततः ॥ ३२
अजर-स्-अम् तदा तत्र अजरसम् पदं तदा ।
यदा तत्र जरस् न स्यात् अजरम् स्यात् पदं तदा ॥ ३३
इह नास्ति विशेषस्तु फलवच्च पदं भवेत् ।
अजरसी अजरे स्यात् यदा स्यादौट् परे पुनः ॥ ३४
अजरांसि पदं च स्यात् अजराणि परे शसि ।
परं पदं भवेद् यद् यत् तत्तद्बूह्यं पुनर्बुधैः ॥ ३५

हृदय ( पद्दन्.... ६।१।६३ )

हृदयस्य भवेद् हृद् च उदकस्य भवेदुदन् ।
आसनस्य भवेदासन् समादेशा भवन्ति ते ॥ ३६
शसि परे भवेद् हृन्ति परे टा चेद् भवेद् हृदा ।
हृद्भ्यां भवेत् परे चेद् भ्याम् पदं तद्वत् प्रवर्त्तते ॥ ३७

परे सस् चेद् उदानि स्यात् उद्ना भवेत् परे च टा।
उद्भ्यां भवेत् परे चेद् भ्याम् पदमेवं प्रवर्त्तते॥ ३८

आसानि स्यात् यदा स्यात् शस् आस्ना भवेत् यदा च टा।
आसभ्यां स्यात् यदा च भ्याम् पूर्व्ववच्च पदं भवेत्॥ ३९

एवं शसि भवेन्मांसि भवेत् मासा यदा च टा।
माभ्यां भवेत् परे भ्याम् चेत् पूर्व्ववत् स्यादिहापि च॥ ४०

"पद्दन्" इति स्थितं सूत्रं "प्रभृतिषु" च तत्र च।
यत् स्थितं तत् भवेद् ग्राह्यं ग्राह्यं च तत् स्थितं न यत्॥ ४१

उक्तस्य ग्रहणं न्यायम् अनुक्तस्य तथैव च।
"मास्पचन्यां" पदं भाष्ये अनुक्तं च धृतं भवेत्॥ ४२

पदन्निति स्थितं यत् तत् वैदिके हि न केवलम्।
लौकिकेऽपि पुनर्योज्यं पदं दृष्टं हि लौकिके॥ ४३

छन्दसीति चानुवृत्ति वृत्तौ यद्यपि दर्शितम्।
छन्दस्येव भवेत् पद्दन् यद्यपि तत्र सूचितम्॥ ४४

तथापि लौकिके तेषां प्रयोगः स्यात् सुसम्मतः।
वार्त्तिकसम्मतिश्चात्र प्रमाणं तु भवेदिह॥ ४५

"अपोभीश्च" स्थितं सूत्रं वैदिके वत् प्रवर्त्तते।
"मासश्छन्दसि" तत्रैव वार्त्तिकं च पुनर्धृतम्॥ ४६

वैदिकं तु समाश्रित्य यत्र सूत्रं प्रवर्त्तते।
पुनस्तत्र छन्दसीति वार्त्तिकं न निरर्थकम्॥ ४७

लौकिकेऽपि भवेच् शब्द इति तेन प्रतीयते।
कैयटेन पुन र्व्याख्या तथैवेह प्रदर्शिताः॥ ४८

कैयटदर्शितदिशा शब्दा ग्राह्या ततश्च ते।
यथा यथा प्रयोगः स्यात् गृह्यते च तथा तथा॥ ४९

इति अदन्ताः

## अथ आदन्तप्रकरणम्

### श्रीपा

**३१८। ह्रस्वो नपुंसके प्रातिपदिकस्य। १।२।४७**

अजन्तस्य पुनः क्लीवे भवेद् ह्रस्व इति स्थितिः।
श्रीपं पदं भवेद् ह्रस्वे ज्ञानवच्च पदं भवेत्॥ ५०

यदा श्रीपा यदा ङे च श्रीपाय स्यात् पदं तदा ।
आलोपो न भवेदत्र "सन्निपाते"ति नात्र च ॥ ५१

इति आदन्ताः

## अथ इदन्तप्रकरणम्

वारि

यदा वारि यदा सु स्यात् सूत्रं परं प्रयोजनम् ।
प्रत्ययः सु भवेल्लुप्तः लोपे सूत्रं परं यथा ॥ ५२

### ३१९ । स्वमोर्नपुंसकात् ।

अङ्गात् क्लीवात् स्वमोर्लुक् स्यात् तथा वारि भवेदिह ।
यदा वारि यदा स्याद् औ सूत्रं परं प्रयुज्यते ॥ ५३

### ३२० । इकोऽचि विभक्तौ । ७।१।७३

अजादि सुप् परे यत्र पुनरिह प्रवर्त्तते ।
इगन्तस्य तु क्लीवस्य नुमागमो भवेत्तदा ॥ ५४
वारि नुम् औ तदा स्याच्च नुमः शी स्यात् तदा पुनः ।
वारिनी स्यात् तदा तत्र वारीणि स्यात् पुनर्जशि ॥ ५५
हे वारि सु यदा तत्र हे वारि स्यात् तदा पुनः ।
हे वारे स्यात् तथैवात्र गुणा इह प्रवर्त्तते ॥ ५६
"न लुमताः"- निषेधो यो न स नित्यो भवेदिह ।
सम्बुद्धौ तु गुणस्तस्मात् प्राप्नोतीति स्थितिर्भवेत् ॥ ५७
यदा वारि यदा टा स्यात् वारिणा स्यात् पदं तदा ।
यदा वारि यदा ङे स्यात् वारिणे स्यात् तदा पुनः ॥ ५८
"घेर्ङिति" च स्थितं सूत्रं गुणस्तेन च लभ्यते ।
परं गुणो न तावत् स्यात् वार्त्तिकेन स बाध्यते ॥ ५९

वृद्ध्यौत्व-तृज्वद्भावगुणेभ्यो नुम् पूर्व्वविप्रतिषेधेन (वा)

न वृद्धिः स्यात् न स्याद् औ च न तृज्भावो गुणश्च न ।
तान् च सर्व्वान् बाधित्वैव नुमागमो भवेदिह ॥ ६०
यदा वारि यदा ङसि यदा ङस् च भवेत् परे ।
वारिणः स्यात् पदं तत्र वारिणोः स्यात् तथैव च ॥ ६१
यदा वारि यदा स्यादाम् नुमिह च भवेत्तदा ।
"नुमचि"—वार्त्तिकं योज्यं वारीणां स्यात् च दीर्घता ॥ ६२

यदा वारि यदा स्यादाम् नुमचि च प्रयुज्यते ।
नुमागमस्ततो दीर्घः वारीनां स्यात् पदं तदा । ६३
यदा वारि यदा ङि स्यात् वारिणोः स्यात् तदा पुनः ।
यदा वारि यदा स्याद् ओस् वारिणोः स्यात् तदा पुनः ॥ ६४
यदा वारि यदा स्यात् सुप् वारिषु स्यात् पदं तदा ।
हरिवच्च भवेद् रूपं सर्व्वं मया प्रदर्शितम् ॥ ६५

अनादि

"अनादि" च स्थितः शब्दः भवेत्तस्य द्विलिङ्गता ।
नपुंसके भवेच्च शब्दः पुंसि भवेत् तथैव च ॥ ६६
अनादि स्यात् यदा शब्द प्रत्ययो "ङे" पुनर्यदा ।
पुंवद्रूपं विभाषा स्यात् विभाषया परं यथा ॥ ६७

**३२१ । विभाषादौ भाषितपुंस्कं पुंवद् गालवस्य । ७।१।७४**

इगन्तं चेद् भवेत् क्लीवं पुंस्यपि चेत् पदं स्थितम् ।
अचि पुंवद् पदं वा स्यात् गालवस्य मते पुनः ॥ ६८
अनादि स्याद् यदा शब्दः यदा च ङे परे भवेत् ।
"अनादये" पदं च स्यात् अनादिने पदं तथा ॥ ६९
वारिवच्च भवेत् रूपं विस्तरो न प्रयोजनम् ।
"पीलु" शब्दे विशेषो यो दर्शयामि परं च तम् ॥ ७०
पीलु यदा स्थितो वृक्षे पुंसि पदं तदा भवेत् ।
पीलु यदा फले स्याच्च पदं भवेत् नपुंसके ॥ ७१
यदा पीलु फले तत्र यदा ङे च परे भवेत् ।
पीलुने स्यात् तदा तत्र पुंवेद् रूपं न युज्यते ॥ ७२
पीलु यदा भवेच्च शब्द फलमेव मतं भवेत् ।
पुनस्तेन न शब्देन वृक्षोऽपि च भवेत् मतः ॥ ७३
न शब्दो भाषितपुंस्कः विभाषा न ततो भवेत् ।
भिन्नमिह निमित्तं स्यात् न तत् वृक्षः पुनः फलम् ॥ ७४

दधि

**३२२ । अस्थि-दधि-सक्थ्यक्ष्णाम् अनङुदात्तः । ७।१।७५**

अचि टादौ भवेदेषामनङिति स्थितिर्भवेत् ।
उदात्तः स पुनश्चानङ् तत्र तत्र प्रवर्त्तते ॥ ७५

दधि यदा भवेच् शब्दः टा यदा च परे भवेत् ।
अकारस्य भवेल्लोपः पदं दध्ना भवेद् तदा ॥ ७६
दध्ने भवेत् भवेत् दध्नः दध्नो दध्नि तथा भवेत् ।
दधनि च पदं तत्र वारिवच्च पदं परम् ॥ ७७
अस्थि भवेत् तथैवेह सक्थि भवेत् तथैव च ।
अक्षि भवेत् पुनस्तद्वत् विशेषस्तु न वर्त्तते ॥ ७८
स स शब्दो यदाग्रे स्यात् तथा तथा भवेत् पुनः ।
अतिदध्ना पदं च स्यात् तथा तथा भवेत् पुनः ॥ ७९

इति इदन्ताः

## अथ ईदन्त प्रकरणम्

### सुधी – सुधि

सुधि स्यात् सुधिनी स्याच्च सुधीनि स्यात् तथैव च ।
हे सुधि स्यात् हे सुधे स्यात् पदमिह समं पुनः ॥ ८०
सुधिना स्यात् पदं तत्र सुधिनः स्यात् पदं तथा ।
प्रधिशब्दे विशेषः स्यात् प्रध्या स्यात् प्रधिना पुनः ॥ ८१

इति ईदन्ताः

## अथ उदन्तप्रकरणम्

### मधु

यदा मधु भवेच् शब्दः पदं साध्यं भवेद् यदा ।
मधु स्यात् मधुनी स्याच्च मधूनि स्यात् तथैव च ॥ ८२
हे मधो स्यात् हे मधु स्यात् सम्बुद्धिश्चेत् स्थिता परे ।
मधुने स्यात् पदं तत्र मधवे तु कदापि न ॥ ८३

सममेव भवेदम्बु समं रूपं प्रवर्त्तते ।
सानु यदा भवेत् स्नु च स्नूनि सानूनि चापि च ॥ ८४

### प्रियक्रोष्टु

प्रियक्रोष्टु भवेदत्र स्यात् प्रियक्रोष्टुनी तथा ।
भवेत् प्रियक्रोष्टूनि च न तृज्वत् स्यात् भवेच्च नुम् ॥ ८५
स्यात् प्रियक्रोष्टुने तत्र यदा च ङे प्रवर्त्तते ।
टादौ पुंसि प्रियक्रोष्टा स्यात् प्रियक्रोष्टुना तथा ॥ ८६

प्रियकोष्ट्रे तथैव स्यात् स्यात् प्रियक्रोष्ट्रो तथा ।
अन्यत्र केवलं नुम स्यात् स्यात् प्रियकोष्टुना नुमि ॥ ८७
स्यात् प्रियकोष्टुनां तत्र यदा स्यादाम् परे पुनः ।
नुड़ागमो भवेदत्र नुमेति वार्त्तिकं स्थितम् ॥ ८८

इति उदन्ताः

अथ ऊदन्तप्रकरणम्

मुलू

मुलू भवेत् मुलुनी च मुलूनि स्यात् पदं तथा ।
मुलुना च तथा मुल्वा पुनर्भवेदिति स्थितिः ॥ ८९

इति ऊदन्ताः

अथ ऋदन्तप्रकरणम्

धातृ

धातृ स्याद् धातृनी स्याच्च धातृनी स्यात् तथैव च ।
हे धातः स्यात् हे धातृः स्यात् सम्बुद्धौ च पदं पुनः ॥ ९०
धात्रा स्यात् धातृनी स्याच्च यदा टा च परे भवेत् ।
ज्ञातृ कर्त्तृ भवेदेवम् विशेषश्च न दृश्यते ॥ ९१

इति ऋदन्ताः

अथ ओदन्तप्रकरणम्

प्रद्यो यदा स्थितः शब्दः पदं साध्यं भवेद् यदा ।
ओकारस्य भवेद् "उ" च नपुंसके पदं यदा ॥ ९२

३२३ । एच इक् ह्रस्वादेशे । १।१।४८

ह्रस्वो यदा भवेद् योज्य एच इक् स्यात् न चापरः ।
प्रद्यु स्यात् प्रद्युनि स्याच्च प्रद्यूनि स्यात् ततः परम् ॥ ९३
प्रद्युने स्यात् पदं ङे चेन् पुंवन्नेह प्रवर्त्तते ।
नेह भाषितपुंस्कत्वं प्रद्यु यदा भवेदिह ॥ ९४
अग्रे चापि भवेदेवम् सर्व्वत्रैव विधिर्भवेत् ।

इति ओदन्ताः

अथ एदन्तप्रकरनम्

प्ररि

प्ररि स्यात् प्ररिणी स्याच्च प्ररीणि स्यात् तथैव च ॥ ९५

प्ररिणा स्यात् तथैवात्र यदा च टा परे भवेत् ।
प्रराभ्याम् च पदं भ्यामि रैवद् गतिर्भवेदिह ॥ ९६
एकदेशविकृतस्य भिन्नधा न गतिर्भवेत् ।
"रायो हलि" भवेद् योऽयं रैशब्दाच्च भवेत् "प्ररि" ॥ ९७
प्ररामिश्च पदं तत्र "रायो हलि" प्रयुज्यते ।
"नुमचिर"—भवेदात्वं प्रराणामिति माधवः ॥ ९८
नुटि चात्वं भवेन्नैव "सन्निपातो" न युज्यते ।
परिभाषा न नित्या स्यात् प्ररीणां तु भवेदिह ॥ ९९

इति औदन्ताः

अथ औदन्तप्रकरणम्

सुनौ = सुनु

सुनु भवेत् सुनुनि स्यात् सुनूनि स्यात् तथैव च ।
सुनुना स्यात् सुनुने स्यात् पदं परं यथायथम् ॥ १००

इति औदन्ताः

१०।२।७४-१०० श्लोकाः
मध्याह्नः (१२ घटिका)
रविवारः

इति अजन्तनपुंसकलिङ्गप्रकरणम्

---

| | |
|---|---|
| अजन्तपुंलिङ्गप्रकरणे— | ६५३ श्लोकाः |
| अजन्तस्त्रीलिङ्गप्रकरणे— | २१६ श्लोकाः |
| अजन्तनपुंसकलिङ्गप्रकरणे— | १०० श्लोकाः |
| | ९६९ श्लोकाः |

---

सूवनो जनको यस्य माता यस्य मृणालिनी ।
खुकी च भगिनी यस्य भगिनी च मनोरमा ॥
वाङ्लादेशे ढाकामध्ये हरिणायामभूच्च यः ।
रामपुरहाटे येन वसतिश्च कृता परे ॥
सोऽहं हरिपदो दत्तः करोमि कारिकामिह ।
शकादष्टादशशतात् षण्णवत्यधिके खलु ॥

---

## अथ हलन्तपुंलिङ्गप्रकरणम्
## हकारान्तप्रकरणम्
### लिह्

लिह् यदा च भवेद् धातुः प्रत्ययः क्विप् परे यदा ।
लिह् तदा च भवेच् शब्दः स इह प्रकृतिर्भवेत् ॥ १

लिह् यदा च भवेच् शब्दः प्रत्यय सु परे यदा ।
"हल्ङ्याब्भ्योश्च" भवेद् योग्यं प्रत्ययः सु विलुप्यति ॥ २
लिह् तदा च स्थितस्तत्र हकारः स्यात् पदान्ततः ।
एवं यदा स्थितं तत्र सूत्रं परं प्रयुज्यते ॥ ३

### ३२४ । हो ढः । ८।२।३१

हकारस्य ढकारः स्यात् पदान्ते च तथा झलि ।
हकारस्य ढकारश्चेत् लिढ् तदा च भवेदिह ॥
एवं यदा स्थितं तत्र "झलांजश्" च प्रयुज्यते ।
ढकारस्य डकारः स्यात् पदं लिड् च तदा भवेत् ॥ ४
"वावसाने" स्थितं सूत्रं तदपि च प्रयुज्यते ।
डकारस्य टकारः स्यात् पदं लिट् च भवेत्तदा ॥ ५

लिह् यदा च भवेच् शब्दः प्रत्ययः सु परे यदा ।
लिड् भवेच्च पदं तत्र लिट् भवेच्च पदं तदा ॥ ६
लिह् यदा च भवेच् शब्दः प्रत्यय औ परे यदा ।
लिहौ भवेत् पदं तत्र विशेषश्च न विद्यते ॥ ७
लिह् यदा च भवेच् शब्दः प्रत्ययोजश् परे यदा ।
पदं लिहः भवेत्तत्र न विशेषः पुनः स्थितः ॥ ८
लिहम् लिहौ लिहः तत्र परे तत्र पदानि च ।
लिहा भवेद् भवेद् लिड्भ्याम् लिड्भिः भवेत् परे पुनः ॥ ९
लिह् यदा च भवेच् शब्दः प्रत्ययः सुप् परे यदा ।
लिट्सु भवेत् पदं तत्र विशेषो न स्थितः पुनः ॥ १०
लिह् यदा च भवेच् शब्दः प्रत्ययः सुप् परे यदा ।
"ङः सि धुट्" च भवेद् वापि लिट्त्सु स्याच्च पदं तदा ॥ ११

दुह्

दुह् यथा च भवेद् धातुः प्रत्ययः क्विप् परे यदा ।
दुह् भवेच्च तदा शब्दः स इह प्रकृतिर्भवेत् ॥ १२
दुह् यदा च भवेच् शब्दः प्रत्ययः सु परे यदा ।
"हल्ङ्याब्भ्योश्च" भवेद् योज्यं प्रत्ययः सु विलुप्यते ॥ १३
दुह् तदा च स्थितस्तत्र हकारः स्यात् पदान्ततः ।
हकारस्य ढकारः स्यात् "हो ढ" इति स्थितं खलु ॥ १४
हकारस्य ढकारस्तु पुनरिह न वर्त्तते ।
अपवादे स्थितं सूत्रं यथा परे प्रदर्शितम् ॥ १५

३२५ । दादेर्धातोर्घः । ८।२।३२

उपदेशे दकारादि र्यदि धातुर्भवेदिह ।
हकारस्य घकारः स्यात् पदान्ते च तथा झलि ॥ १६

दुह् तत्र च स्थितः शब्दः हकारश्च पदान्ततः ।
हकारस्य घकारः स्यात् रूपं दुघ् च तदा भवेत् ॥ १७

पूर्व्वपक्षः

दामलिहमात्मनं चेदिहच्छतीति भवेदिह ।
यदि दामलिह्यतीति धातुर्भवेत् पुनः क्वचि ॥ १८
तथाभूतात् पुनर्धातोः प्रत्ययः क्विप् भवेद् यदि ।
दामलिह् स्यात् तदा शब्दः स इह प्रकृतिर्भवेत् ॥ १९
प्रकृतिः स्याद् यदा तत्र प्रत्ययोऽपि तदा भवेत् ।
स्वादिकं प्रत्ययस्तत्र प्रयुज्यते यथायथम् ॥ २०
दामलिह् स्याद् यदा शब्दः प्रत्ययः सु परे यदा ।
"हल्ङ्याब्भ्योश्च" भवेद् योज्यं प्रत्ययः सु विलुप्यति ॥ २१
सुलोपः स्याद् यदा तत्र दामलिह् स्यात् तदा पुनः ।
हकारश्च तदा तत्र पदान्ते स्यादिति स्थितिः ॥ २२
दामलिह् च स्थितो धातुः दामलिह् स्यात् ततः पदम् ।
दामलिह् च यदा तत्र दकारादिः स्थितस्तदा ॥ २३
दकारादि र्यदा धातुः सूत्रमिदं प्रयुज्यते ।
हकारस्य घकारः स्याद् दामलिघ् स्यात् पदं तदा ॥ २४

दामलिघ् स्यात् पदं तत्र न तदिष्टं पदं पुनः ।
अनिष्टं ते महत् तत्र पूर्वतः समुपस्थितम् ॥ २५

उत्तरपक्षः

दामलिह् स्याद् यदा धातुः दकारादिर्भवेत्तदा ।
विषये तु पुनस्तस्मिन् संशयो वर्त्तते न हि ॥ २६
तथापि च पुनः सूत्रं "दादे"रिह न युज्यते ।
हकारस्य घकारोपि नेह पुनः प्रसज्यते ॥ २७
उपदेशे यदा धातोर्दकार आदितो भवेत् ।
तस्मिन् काले यदादौ च दकारः श्रूयते पुनः ॥ २८
धातुपाठे तथाभूतो धातुर्यदा च दृश्यते ।
तदैव च विधिर्योज्यः नान्यदा च विधिर्भवेत् ॥ २९
दामलिह् च पुनर्धातुरुपदेशे न विद्यते ।
धातुपाठे पुनर्धातु न हि तत्र च दृश्यते ॥ ३०

उपदेशे यदा धातु र्न विद्यते न दृश्यते ।
कथं पुनर्दकारो वा स्यादादितस्तदा पुनः ॥ ३१
दामलिह् स्याद् यदा धातुस्तदा सूत्रं न युज्यते ।
दामलिघ् च पदं तस्मात् नेह पुनश्च लभ्यते ॥ ३२
"हो ढ" इति स्थितं यत् तत् पुनरिह प्रसज्यते ।
दामलिड् स्यात् पदं तत्र दामलिट् च पदं भवेत् ॥ ३३
रूपं दुघ् च स्थितं तत्र यथा मया प्रदर्शितम् ।
ततः परं पुनः सूत्रं भवेत् प्रयोजनम् यथा ॥ ३४

**३२६ । एकाचो बशो भष् झषन्तस्य स्ध्वोः । ८।१।३७**

अवयवो यदा धातोरेकाजिह च दृश्यते ।
अवयवः पुनश्च स झान्तोपि भवेद् यदि ॥ ३५
अवयवस्य तस्य च वशः स्थाने भवेच्च भष् ।
सकारे च ध्वशब्दे च पदान्ते च विधिर्भवेत् ॥ ३६

पूर्व्वपक्षः

एकाज् धातुरिति व्याख्या कथमिह न युज्यते ।
धातुरिति विशेष्यं स्यात् एकाजिति विशेषणम् ॥ ३७

सामानाधिकरण्येन व्याख्या यदा भवेदिह ।
न वैयधिकरण्येन व्याख्या न्याय्या भवेत्तदा ॥ ३८

उत्तरपक्षः

सामानाधिकरण्येन व्याख्या न युज्यते खलु ।
सामानाधिकरण्ये च पदमिष्टं न सिध्यति ॥ ३९
यदा गर्दभ् यदा सु स्यात् पदं गधप् तदा भवेत् ।
सामानाधिकरण्यं चेत् पदं हि तत् न सिध्यति ॥ ४०
गर्दभ् यदा भवेच्च शब्दः अनेकाच् स भवेत् तदा ।
एकाच् न स्यात् पुनः शब्दः भष्भावो न भवेत्ततः ॥ ४१
भष्भावो न यदा तत्र धकारोऽपि तदा च न ।
गर्धभिति धमध्यत्र पदं तदा न लभ्यते ॥ ४२
धातोरवयवः यः स्यात् स चेदेकाच् भवेदिह ।
इति वैयधिकरण्ये व्याख्या यदि प्रयुज्यते ॥ ४३
इष्टसिद्धिस्तदा च स्यात् गर्धप् इति पदं भवेत् ।
गर्धप् इति धमध्यत्र पदमिष्टं भवेदिह ॥ ४४
गर्दभ् यदा भवेच्च शब्दः अवयवो भवेच्च "दभ्" ।
एकाजपि भवेच्च "प" झषन्तोपि पुनर्भवेत् ॥ ४५
एवं यदा स्थितं तत्र व्याख्या दत्ता प्रयुज्यते ।
बशोभष् स्यात् तदा तत्र दकारस्य धकारता ॥ ४६
सामानाधिकरण्यं चेत् गर्धप् इति न लभ्यते ।
व्याख्या वैयधिकरण्ये तत इह समाश्रिता ॥ ४७

पूर्व्वपक्षः

"झलो झलि" स्थितं पूर्व्वं "झली"ति चानुवर्त्तते ।
व्याख्यायाञ्च पुनस्तत्र अनुवृत्तिर्न दर्शिता ॥ ४८

उत्तरपक्षः

"सध्वो"रिति पदं सूत्रे मुनिनेह निवेशितम् ।
"झली"ति च निवृत्तं स्यात् अनुवृत्तिर्न वर्त्तते ॥ ४९
"सध्वो"रिति ग्रहणात् तत्र झलीति च निवर्त्तते ।
व्याख्यायाञ्च पुनस्तस्मात् झलीति न धृतं भवेत् ॥ ५०

झलीति चेदनुवृत्तम् अनिष्टं तु महद् भवेत् ।
दुग्धं दोग्धा इत्यादौ च धकारः स्यात् तदा पुनः ॥ ५१
झलीति च निवृत्तं स्याद् अनिष्टं न तथा भवेत् ।
दुग्धं दोग्धा इत्यादौ च धकारो न प्रवर्त्तते ॥ ५२

पूर्व्वपक्षः

"अवयव" इतिवच्च व्याख्या यदा विधीयते ।
अनिष्टं च तदापि स्यात् न निस्तारस्तदापि च ॥ ५३
रूपं दुघ् भवता पूर्व्वम् इह खलु प्रदर्शितम् ।
दुघ् तत्र च भवेद् धातुः धातोरवयवो न सः ॥ ५४
अवयवो यदा न स्यात् भष्भावोऽपि तदा च न ।
भष्भावो न यदा तत्र धकारो न तदा पुनः ॥ ५५
धकारो न यदा तत्र 'पदामिष्टं न सिध्यति ।
इष्टं तत्र न सिध्येत् चेत् अवयव इतीह किम् ॥ ५६

उत्तरपक्षः

धातोरवयवो दुघ स्यात् स्याद् व्यपादशिवत् गतिः ।
भष्भावश्च भवेदित्र दकारस्य धकारता ॥ ५७
दकारस्य धकारश्च यदा तत्र प्रपद्यते ।
धुघ् भवेच्च तदा रूपं घकारश्च स्थितः पुनः ॥ ५८
"झलां जश्" च स्थितं सूत्रं तदिह च प्रयुज्यते ।
धुग् भवेच्च तदा रूपं पदमिष्टं तदेव च ॥ ५९
"वावसाने स्थितं सूत्रं तदापि च प्रयुज्यते ।
गकारस्य ककार स्यात् पदं धुक् च भवेत् पुनः ॥ ६०
दुहौ भवेत् पदं तत्र पदं दुहः भवेत्तथा ।
धुक्षु भवेत् पदं तत्र जश्त्वं चर्त्वं भवेत्तदा ॥ ६१

द्रुह

द्रुह् यदा च भवेत् शब्दः प्रत्ययः सु परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ ६२

३२७ । **वा द्रुह-मुह-ष्णुह-ष्णिहाम् ।** ८।२।३३

झल् यदि स्यात् परे तत्र पदान्तो वा भवेद् यदि ।
एषां हस्य घकारः स्यात् पक्षे "ढ" श्च भवेदपि ॥ ६३

द्रुह् यदा स्यात् यदा सु स्यात् घ्रुघ् तदा च तथा भवेत् ।
जश्त्वे चर्त्वे भवेद् ध्रुग् ध्रुक् पदद्वयं भवेत्तथा ॥ ६४
पक्षे यदा ढकारः स्यात् रूपं ध्रुढ् च तदा भवेत् ।
जश्त्वे चर्त्वे भवेद् ध्रुड् ध्रुड् पदद्वयं भवेत्तथा ॥ ६५
द्रुहौ भवेत् पदं तत्र द्रुहः भवेत् पदं पुनः ।
ध्रुग्भ्याम् ध्रुड्भ्याम् भवेत्तत्र विशेषश्च न विद्यते ॥ ६६
द्रुह् यदा च भवेच् शब्दः प्रत्ययः सुप् परे यदा ।
ध्रुट्सु ध्रुट्त्सु तथा ध्रुक्षु पदत्रयं तदा भवेत् ॥ ६७

मुह् यदा च यदा ष्णुह् च यदा ष्णिह् च भवेदिह ।
रूपं भवेत् यथापूर्व्वमूहनीयं यथायथम् ॥ ६८

विश्ववाह्

विश्ववाह् स्याद् यदा शब्दः प्रत्ययः सु परे यदा ।
विश्ववाड् स्याद् तदा रूपं विश्ववाट् च भवेदपि ॥ ६९
विश्ववाहौ भवेत्तत्र विश्ववाहः पदं भवेत् ।
विश्ववाहं भवेत्तत्र विश्ववाहौ भवेत् पदम् ॥ ७०

विश्ववाह् स्याद् यदा शब्दः प्रत्ययः शस् परे यदा ।
पदं यदा भवेत् साध्यं प्रसारणं विधीयते ॥ ७१

प्रसारणं न विज्ञातं संज्ञा तस्य प्रयोजनम् ।
संज्ञायाश्च भवेत् सूत्रं यथापरे प्रदर्शितम् ॥ ७२

**३२८ । इग्यणः संप्रसारणम् । १।१।८**

प्रयुज्यते यणः स्थाने य इग् इह च सर्व्वदा ।
संप्रसारणसंज्ञः स भवेदिह सतां मते ॥ ७३

एवं यदा प्रसारणं भवेदिह व्यवस्थितम् ।
प्रकृते च विधायकं सूत्रं तदा भवेत् परे ॥ ७४

**३२९ । वाह ऊठ् । ६।४।१३२**

शसादिके भसंज्ञा च यदा तत्र प्रवर्त्तते ।
वाह्यस्तदा वकारस्य भवेद् ऊठ् च प्रसारणम् ॥ ७५

विश्ववाह् स्याद् यदा तत्र प्रत्ययः शस् परे यदा।
विश्व ऊ आह् तदा स्याच्च शस्प्रत्ययः परे पुनः ॥ ७६

एवं यदा स्थितं तत्र सूत्रमन्यत् प्रयुज्यते।
सूत्रमन्यद् भवेदत्र यथा परे प्रदर्शितम् ॥ ७७

**३३०। संप्रसारणाच्च। ६।१।१०८**

अच इह यदा तत्र स्यात् संप्रसारणात् परे।
पूर्व्वरूपम् एकादेशस्तदा खलु प्रयुज्यते ॥ ७८

विश्व ऊ आह् यदा तत्र विश्व ऊह् स्यात् तदा पुनः।
प्रत्ययः शस् परे तत्र यथा पूर्व्वं स्थितो हि सः ॥ ७९

"विश्व ऊह् शस्" यदा तत्र तथा खलु प्रजायते।
"एत्ये"ति च स्थितं सूत्रं तत् तदा च प्रयुज्यते ॥ ८०
सूत्रं यदा प्रयुक्तं स्यात् वृद्धिस्तदा भवेदिह।
विश्वौहः स्यात् पदं तत्र पदमिष्टं तदेव हि ॥ ८१

विश्ववाह् टा यदा तत्र विश्वौहा च पदं भवेत्।
परं पदं बुधैरूह्यं न च मया प्रदीयते ॥ ८२

अनडुह्

अनडुह् स्याद् यदा शब्दः प्रत्ययः सु परे यदा।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ ८३

**३३१। चतुरनडुहोरामुदात्तः। ७।१।९८**

सर्व्वनामस्थानं यदि परे तत्र प्रवर्त्तते।
अनयोराम् भवेत्तत्र स उदात्तो भवेत् पुनः ॥ ८४

अनडुह् स्याद् यदा शब्दः प्रत्ययः सु परे यदा।
आम् अनेन तदा तत्र अनड्वाह् स् स्यात् तदा पुनः ॥ ८५

एवं यदा स्थितं तत्र सूत्रमन्यत् प्रयुज्यते।
सूत्रमन्यद् भवेदत्र यथा परे प्रदर्शितम् ॥ ८६

३३२। सौ अनडुहः। ७।१।८२

अनडुह् स्याद् यदा शब्दः प्रत्ययः "सु" परे यदा।
अनडुहस्तदा तत्र भवेत् खलु नुमागमः॥ ८७

"अनड्वाह् स्" यदा तत्र नुमागमो भवेद् यदा।
तदा तत्र भवेद् रूपम् "अनड्वान् ह् स्" च नुमा सह॥ ८८

पूर्व्वपक्षः

सामान्येन विहितं स्याद् आम् यदा च विधीयते।
विशेषेण विहितं स्यात् विधीयते यदा च नुम्॥ ८९
विशेषेण सामान्यं च वाधितं स्यादिति स्थितिः।
नुमा तस्माद् विशेषेण सामान्यम् आम् च वाध्यते॥ ९०
नुम् तदा च भवेत्तत्र न तावत् आम् तदा भवेद्।
अनड्वन् स्यात् तथा तत्र अनड्वान् न भवेत् पुनः॥ ९१

सम्बुद्धौ च यदा तत्र "अनडु ह् स्" च भवेत् स्थितम्।
"अम् सम्बुद्धौ" प्रयुक्तम् स्यात् अमागमस्तथा भवेत्॥ ९२
सूत्रं "सावनडुह"श्च पुनस्तत्र प्रयुज्यते।
सूत्रं यदा प्रयुक्तं स्याद् नुमागमो भवेत्तदा॥ ९३
सामान्येन विहितं स्याद् नुम् यदा च विधीयते।
विशेषेन विहितं स्यात् आमिह च भवेद् यदा ९४
विशेषेण सामान्यं च वाधितं स्यादिति स्थितिः।
आमा तस्माद् विशेषेण सामान्यं नुम् च वाध्यते॥ ९५
हे अनड्वन् पदं तस्मात् सम्बुद्धौ न भवेदिह।
हकारस्य ढकारः स्यात् हे अनड्वट् वरं भवेत्॥ ९७

उत्तरपक्षः

अच्चीनद्यांनुंमिति च सूत्रं पूर्व्वं प्रवर्त्तते।
आदिति च पञ्चम्यन्तं तस्मादिहानुवर्त्तते॥ ९८
अवर्णश्चेद् भवेत्तत्र नुमपि च तदा भवेत्।
अवर्णश्चेत् न तत्र स्यात् नुमपि च भवेन्न हि॥ ९९
आम् इह यः प्रयुक्तः स्यात् उपजीव्यो भवेच्च सः।
नुमिह यः प्रयुक्तः स्यात् स मत उपजीवकः॥ १००

उपजीव्यो स्थितो लोके स्थितो ह चोपजीवकः ।
न च तयोः पुनर्लोके विरोध इह दृश्यते ॥ १०१
न विरोधी यदा तत्र न च वाध्यवाधकता ।
सङ्गतौ च द्वयोस्तत्र कार्य्यम् अस्ति यथोचितम् ॥ १०२
आमिह च नुमा तस्माद् न वाध्यते कथञ्चन ।
आमं वरं समाश्रित्य नुमिह लभते पदम् ॥ १०३
अम्भावश्चेद् भवेदामः प्रवृत्तिर्न भवेन्नुमः ।
एतद् वरं भवेत् सत्यं मिथ्या भवेत् परं खलु ॥ १०४

अम् सम्बुद्धौ भवेच्च यः उपजीव्यः पुनश्च सः ।
नुम् तत्र स्यात् पुनश्च यः स भवेदुपजीवकः ॥ १०५
तयोरपि विरोधो न पुनरिह च दृश्यते ।
तयोरपि न तावत् स्यादिह वाध्यवाधकता ॥ १०६
न तावद् नुम् आमा चात्र पुनरिह च वाध्यते ।
आममेव सखाश्रित्य करोति नुम् यथायथम् ॥ १०७
अमश्चेदभावस्तत्र नुमेव न प्रवर्त्तते ।
एतद् वरं भवेत् सत्यं मिथ्या वरं भवेत् परम् ॥ १०८

पूर्व्वपक्षः

आवर्त्ततां स आम् नाम न तत्र विमतिर्मम ।
आमुपजीवकत्वं च नुमो न स्यात् तदापि च ॥ १०९
अनड्वुह् स्याद् यदा शब्दः नकारश्च स्थितस्तदा ।
नकाराद् स्यादकारो यः नुम् भवेच्च ततः परम् ॥ ११०
एवं यदि कृतं तत्र दोषः कश्चिन्न विद्यते ।
आवृत्तेरपि तत्र च न हानिः स्यात् कथञ्चन ॥ १११
आमः पश्चात् भवेन्नुम् च पक्षश्चैष न सिध्यति ।
आमुपजीवकत्वं च नुम इह न दृश्यते ॥ ११२

उत्तरपक्षः

सखे मैवम् सखे मैवम् एष पक्षो न सम्मतः ।
व्याख्या या भवता दत्ता न सा व्याख्या भवेदिह ॥ ११०

नुम् यदा स्यात् समादेशः मकार इत् तदा भवेत् ।
मकार इद् यदा च स्यात् अन्त्यादचो भवेत्तदा ॥ ११४
आदिति यदनुवृत्तं समन्वेति च तत्र तत् ।
अवर्णो यो भवेदन्तः तस्मात् परं भवेन्नुम् ॥ ११५
अकारो यो नकारस्य न हि चान्त्यो भवेन्न सः ।
तस्मात् परं नुमस्तत्र प्रसक्तिश्च न युज्यते ॥ ११६
आमिह स्यात् यदा तत्र तदैव नुम् प्रसज्यते ।
आमुपजीवकत्वं च नुमस्तस्मात् न हन्यते ॥ ११७
"अनड्वान् ह् स्" च स्थितं तत्र पूर्व्वं मया प्रदर्शितम् ।
हलङ्याब्भ्यश्च भवेद् योज्यं प्रत्ययः सु विलुप्यति ॥ ११८

पूर्व्वपक्षः

"स" यदा च भवेल्लुप्तः संयोगान्तो भवेन्न "ह" ।
हकारस्य भवेल्लोपः पदान्ते स्याद् तदा च "न" ॥ ११९
"वसुस्रंसु"—स्थितं सूत्रं तत् तत्र च प्रयुज्यते ।
नकारस्य दकारश्च तदा तत्र प्रसज्यते ॥ १२०
नकारस्य दकारश्च यथा खलु भवेदिह ।
साविति च तथा सूत्रे मुनिना नुम् विधीयते ॥ १२१

उत्तरपक्षः

दकारार्थं नुमस्तत्र नास्ति किञ्चित् प्रयोजनम् ।
दकारश्च भवेत्तत्र न यदा नुम् तदापि च ॥ १२२
"अनड्वाह्" च स्थितः शब्दः पदान्ते "ह" भवेदिह ।
"वसुस्रंसु" स्थितं सूत्रं हकारस्य दकारता ॥ १२३
दकारश्चेद् भवेदिष्टः नुमा नास्ति प्रयोजनम् ।
नुमं विना दकारः स्यात् यथा मया प्रदर्शितम् ॥ १२४
नुमं विना यथा तत्र दकारः स्यात्तथान्यथा ।
नुम्विधिश्च कृतस्तत्र स भवेन्न निरर्थकः ॥ १२५
निरर्थके प्रयासस्तु मुनेरिह न दृश्यते ।
नुम्विधिश्च कृतस्तत्र स्थितं खलु प्रयोजनम् ॥ १२६
नुमिह विहितो यश्च न तस्य विकृतिर्भवेत् ।
नकारस्य विकारेण दकारो न भवेदिह ॥ १२७

"अनड्वान् ह् स्" च स्थितं तत्र यथा पूर्व्वं प्रदर्शितम् ।
सुलोपः स्यात् पुनस्तत्र हकारोपि विलुप्यते ॥ १२८
सुलोपः स्याद् यदा तत्र हलोपः स्याद यदा पुनः ।
"अनड्वान्" च तदा तत्र भवेद् रूपमिति स्थितिः ॥ १२९
"नलोप"श्च हितं सूत्रं प्रयुज्यते तदा च तत् ।
नलोपः स्यात् तदा तत्र सूत्रं प्रयुज्यते यदा ॥ १३०

उत्तरपक्षः

नुम्विधिश्च स्थितस्तत्र मुनिना नुम् विधीयते ।
विधानस्य हि सामर्थ्यात् नकारो न विलुप्यति ॥ १३१

पूर्व्वपक्षः

सम्बुद्धौ च पदं तत्र हे अनवड्वन् प्रजायते ।
नुम्विधिः स्यात् चरितार्थस्तत्रैव हि यथायथम् ॥ १३२
"न ङि" चेति स्थितं सूत्रं नलोपश्च निषिध्यते ।
निषेधे च पुनस्तत्र नुम्विधिः स्यात् प्रयोजितः ॥ १३३

उत्तरपक्षः

लोपे तत्र हकारस्य "संयोगे"ति प्रयुज्यते ।
"संयोगे"ति पुनः शास्त्रं परे तत्र प्रवर्त्तते ॥ १३४
लोपे तत्र नकारस्य "नलोप"—श्च प्रयुज्यते ।
"नलोप"श्च पुनः शास्त्रं पूर्व्वं तत्र प्रवर्त्तते ॥ १३५
पूर्व्वं प्रति परं शास्त्रमसिद्धं स्यादिति स्थितिः ।
हलोपः स्यादसिद्धश्च नलोपस्तु भवेद् यदा ॥ १३६
लोपस्तत्र हकारस्य स्यादसिद्धो यदा पुनः ।
हकारः स्यात् तदा तत्र स्थित इव भवेन्न सः ॥ १३७
"ह" यदा स्यात् नकारस्य न प्रातिपदिकान्तता ।
"ह" यदा स्यात् नकारस्य नापि पदान्तता पुनः ॥ १३८
नकारस्य ततो लोपो न हि तत्र प्रसज्यते ।
नकारस्तु स्थितस्तत्र अनड्वान् च पदं भवेत् ॥ १३९

अनडुह् स्याद् यदा शब्दः प्रत्ययः "सु" परे यदा ।
पदं यदा भवेत् साध्यं प्रक्रिया स्यात् यथा परे ॥ १४०

आम् भवेच्च भवेद यण् च भवेत् नुम् च ततः परम् ।
सुलोपः स्यात् ततः पश्चात् संयोगान्तो विलुप्यति ॥ १४१
तथा तथा यदा तत्र भवति च परं परम् ।
अनड्वान् स्यात् पदं तत्र पदमिष्टं तदेव हि ॥ १४२
अनडुह् स्याद् यदा शब्दः सम्बुद्धौ सु भवेद् यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ १४३

**३३३ । अम् सम्बुद्धौ । ७।१।९९**

चतुर् यदा भवेच् शब्दः अनडुह् स्याद् यदा पुनः ।
सम्वुद्धिश्च यदा तत्र तयोरम् स्यात् न तावदाम् ॥ १४४

अम भवेच्च तथा तत्र पश्चाद् यण् च प्रयुज्यते ।
नुम तथा स्यात् सुलोपः स्यात् संयोगान्तश्च लुप्यति ॥ १४५
एवमेवं यदा तत्र हे अनड्वन् पदं भवेत् ।
सम्बुद्धौ तु परे तत्र पदमिष्टं तदेव हि ॥ १४६

अनड्वाहौ भवेत्तत्र अनड्वाहः भवेत्तथा ।
अनडुहः भवेत्तत्र अनडुहा तथा भवेत् ॥ १४७

अनडुह् स्याद् यदा तत्र प्रत्ययो भ्याम परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ १४८

**३३४ । वसु-स्रंसु-ध्वंसु-अनडुहां दः । ८।२।७२**

वस्वन्तो यः सकारान्तं स्रंस्वादिकं पुनश्च यः ।
तस्य तस्य दकारः स्यात् पदान्तता भवेद् यदि ॥ १४९

दकारः स्यात् तथा तत्र अनडुद्भ्याम पदं भवेत् ।
परं पदं भवेत्तद्वत् ऊह्यं वुधैर्यथायथम ॥ १५०
समासान्तो यदा तत्र तदैव स्याद् दकारता ।
सकारान्तो यदा न स्यात् नापि दकारता तदा ॥ १५१
विद्वस् यदा भवेच् शब्द प्रत्ययः सु परे यदा ।
प्रक्रियायां तदा तत्र रूपं विद्वान् भवेदिति ॥ १५२
इह भवेत् नकारान्तः सकारान्तो भवेन्न च ।
सकारान्तो यतो न स्यात् ततो नास्ति दकारता ॥ १५३

पदान्तता यदा तत्र तदैव स्याद् दकारता ।
पदान्तता यदा न स्यात् नापि दकारता तदा ॥ १५४
स्रस्तं यदा पदं तत्र सकारो मध्यतस्तदा ।
पदान्ते न सकारः स्यात् नास्ति तस्मात् दकारता ॥ १५५

तुरासाह्

"तुर" यदा भवेत् पूर्व्वे "सह" यदा परे भवेत् ।
"छन्दसी"ति भवेद् योज्यं प्रत्ययो ण्विभंवेत् तथा ॥ १५६
उपधाया भवेद् वृद्धि ण्विर्यदा च प्रयुज्यते ।
हो ढ इति ढकार स्यात् झलां जश् च डकारता ॥ १५७
"अन्येषाम् इति तत्र च पुनरपि प्रयुज्यते ।
पूर्व्वस्य च भवेद् वृद्धिः "तुरासाड्" च भवेत्तदा ॥ १५८

एवं यदा सहेस्तत्र रूपं "साड्" च भवेदिह ।
षत्वं तदा भवेत्तत्र षत्वे सूत्रं परं यथा ॥ १५९

३३५ । सहेः साडः सः । ८।३।५६

साड्रूपस्य सहेस्तत्र सकारस्य षकारता ।
तुरासाड् स्याद् यदा तत्र तुराषाड् च तदा भवेत् ॥ १६०

तुरासाड् च भवेस्तत्र तुराषाढ् च तथा भवेत् ।
तुरासाहौ भवेस्तत्र तुरासाहः भवेत्तथा ॥ १६१
तुरासाड्भ्याम् पदं तत्र भवेत् पुनर्यथार्थंथम् ।
परं पदं बुधेरूह्यं न च मया प्रदीयते ॥ १६२

लौकिके तु साहयतेः प्रत्ययो क्विप् भवेदिह ।
तथैव च पदं सिध्येत् वैदिके तु प्रदर्शितम् ॥ १६३

इति हकारान्ताः ।

हकारान्ते—१६४ श्लोकाः

———

## अथ वकारान्तप्रकरणम्

### सुदिव्

सुदिव् यदा भवेच्छब्दः प्रत्ययः सु परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ १६४

### ३३६ । दिव औत् । ७।१।८४

औणादिके डिवि तत्र दिव् प्रातिपदिकं भवेत् ।
दिवस्तस्य भवेद् औत् च प्रत्ययः "सु" यदा परे ॥ १६५
औत् यदा च भवेत्तत्र "सु दि औ स्" च तदा भवेत् ।
सुद्यौस् इति सकारान्तः पदं सन्धौ प्रजायते ॥ १६६

### पूर्वपक्षः

वकारस्य भवेद् औत् च औ स्थानिवत् ततो भवेत् ।
हल् भवेत् स वकारस्तु औ भवेत् हल् ततः खलु ॥ १६७
"हल्ङ्याब्भ्यश्च" स्थितं सूत्रं तत्तदा च प्रयुज्यते ।
सुप्रत्ययः स्थितस्तत्र तस्य भवेत् विलोपनम् ॥ १६८
प्रत्ययस्य यदा सोः स्यात् पुनस्तत्र विलोपनम् ।
"सुद्यौ स्" इति सकारान्तं पदं तदा न सिध्यति ॥ १६९

### उत्तरपक्षः

अल्विधिश्च भवेदयं स्थानिवत्वं न सिध्यति ।
हल्ङ्याब्भ्यो न भवेद् योज्यं सुलोपो न तथा भवेत् ॥ १७०
सुलोपो न यदा तत्र "सु" तत्र च स्थितो भवेत् ।
सुद्यौस् इति सकारान्तं पदं तदा च सिध्यति ॥ १७१
सुदिवौ स्यात् पदं तत्र सुदिवः स्यात् पदं तथा ।
सुदिवम् स्यात् पदं तत्र सुदिवौ स्यात् तद्व नव च ॥ १७२
सुदिव् यदा भवेच्छब्दः भ्याम् भिस् यदा परे भवेत् ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ १७३

### ३३७ । दिव उत् । ६।१।१३१

अन्तादेश उकारः स्यात् दिवस्तत्र पदान्तरे ।
सुद्युभ्याम् च पदं तत्र सुद्युभिः च पदं तथा ॥ १७४

इति वान्ताः

## अथ वकारान्तप्रकरणम्

### चतुर्

चतुर यदा यदा जश् स्यात् "चतुरि"ति प्रयुज्यते ।
आम्भावश्च भवेत्तत्र चत्वारः च पदं भवेत् ॥ १७५

चतुरः स्यात् पदं तत्र चतुर्भिश्च पदं भवेत् ।
चतुर्भ्यः स्यात् पदं तत्र विशेषश्च न वर्त्तते ॥ १७६

चतुर् यदा भवेच् शब्दः प्रत्यय आम् परे यदा ।
पदं यदा भवेत् साध्यम् सूत्रं परं प्रयोजनम् ॥ १७७

३३८ । षट्चतुर्भ्यश्च । ७।१।५५

षट्संज्ञको यदा शब्दः चतुर् शब्दो यदा पुनः ।
आम् यदा स्यात् परे तत्र तदा भवेद् नुड़ागमः ॥ १७८
नुड़ागमो यदा तत्र चतुर्णाम् च पदं भवेत् ।
भवेत् णत्वं भवेद् द्वित्वं णत्वे द्वित्वे पदं तथा ॥ १७९

चतुर् यदा यदा सुप् च शङ्का तदा प्रजायते ।
रेफस्य वा विसर्गः स्यात् यतः सूत्रमिदं स्थितम् ॥ १८०

३३९ । रोः सुपि । ८।३।१६

चतुर् यदा भवेच् शब्दः सप्तम्यां सुप् भवेद् यदा ।
रोरेव हि विसर्गः स्यात् नान्यस्य च तथा भवेत् ॥ १८१

रोरेव हि विसर्गः स्यात् नान्यस्य च भवेत्तथा ।
चतुर् यदा यदा सुप् च रोर्विसर्गो भवेन्न च ॥ १८२
रोर्विसर्गो यतो न स्यात् तस्मात् सूत्रं न युज्यते ।
रेफो यश्च चतुर्शब्दे रेफ एव स तिष्ठति ॥ १८३

एवं यदा स्थितं तत्र "चतुर् सु" च यदा स्थितम् ।
"आदेशे"ति भवेद् योज्यं षत्वं तदा प्रजायते ॥ १८४

षत्वं यदा भवेत्तत्र "चतुर् षु" च यदा स्थितम् ।
तदा तत्र भवेच् शङ्का षस्य द्वित्वं भवेन्न वा ॥ १८५

"अच"श्चेति स्थितं सूत्रं तदिह चेत् प्रयुज्यते।
षकारस्य भवेद् द्वित्वं द्वित्वं प्राप्तं भवेत्तदा॥ १८६
"अत्र"श्चेति न योज्यं स्यात् द्वित्वमपि भवेन्न च।
द्वित्वमिह निषिद्धं स्यात् निषेधे च परं भवेत्॥ १८७

३४०। शरोऽचि च। ८।४।४९

शर् यदा च भवेत् पूर्व्वं अच् परे च भवेद् यदा।
तदा तत्र शरो द्वित्वं न हि खलु विधीयते॥ १८८

"चतुर" यदा भवेदत्र "षु" यदा च भवेत् पुनः।
शर् इह च भवेत् पूर्व्वं अच् परे च भवेदिह॥ १८९
शर् पूर्व्वं स्यात् परे स्यादच् द्वित्वं तस्माद् भवेन्न च।
एकषं स्यात् पदं तत्र चतुर्षु स्यात् पदं तदा॥ १९०

प्रियचतुर्

प्रियचतुर् यदा शब्दः प्रत्ययः "सु" परे यदा।
"चतुरि"ति भवेद् योज्यम् आम् तथा च भवेदिह॥ १९१
प्रियचत्वार् तदा तत्र प्रत्यय "सु" परे पुनः।
पदं स्यात् प्रियचत्वारः पदमिष्टं तदेव हि॥ १९२

प्रियचतुर् यदा तत्र सम्बुद्धौ "सु" भवेद् यदा।
"अम् सम्वुद्धौ" भवेत्तत्र प्रियचत्वः पदं भवेत्॥ १९३
पदं स्यात् प्रियचत्वारौ औ यदा च परे भवेत्।
पदं स्यात् प्रियचत्वारः जश् यदा च भवेत् परे॥ १९४
प्रियचतुर यदा शब्दः प्रत्यय आम परे यदा।
स्यात् प्रियचतुराम् तत्र नुम् गौणत्वे न युज्यते॥ १९५
प्राधान्यं चेद् भवेदर्थः वाढम नुम् युज्यते तदा।
पदं प्रियचतुरणाम् स्यात् नुमिह च प्रयुज्यते॥ १९६

इति रेफान्ताः

अथ लकारान्तप्रकरणम्

कमल्

कमलमाचक्षाणेति यदा वाक्यं प्रयुज्यते।
"तत्करोति तदाचष्टे" तदा योज्यं भवेदिह॥ १९७

प्रत्ययो णिच् भवेत्तत्र "सनाद्यन्ताः" च धातुता ।
सुपो लुक् स्यात् ततस्तत्र "णाविष्ठवत्" भवेत् पुनः ॥ १९८

इष्ठवत्त्वात् टिभागस्य पुनर्लोपो भवेदिह ।
टिलोपे स्यात् कमल् शब्दः स इह प्रकृतिर्भवेत् ॥ १९९

कमल् स्यात् कमलौ स्याच्च कमलः स्यात् तथा पदम् ।
कमल्षु स्यात् पदं तत्र सुपि षत्वं प्रजायते ॥ २००

इति लकारान्ताः

## अथ मकारान्तप्रकरणम्

### प्रशाम्

प्रपूर्वाच्च शमस्तत्र प्रत्यय क्विप् प्रयुज्यते ।
"अनुनासिकस्येति" च दीर्घे प्रशाम् भवेदिह ॥ २०१

प्रशाम् यदा भवेच्च शब्दः प्रत्ययः सु परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ २०२

**३४१ । मो नो धातुः । ८।२।३४**

मकारान्तो यदा धातुः क पदान्तश्च भवेद् यदा ।
तदा तत्र मकारस्य नकारः स्यात् इति स्थितिः ॥ २०३

एवं यदा मकारस्य नकारश्च भवेदिह ।
प्रशान् तदा भवेत् तत्र पदमिष्टं तदेव हि ॥ २०४

पूर्वपक्षः

"हल्ङ्याब्भ्यो"श्च भवेद् युक्तं प्रत्ययः सु विलुप्यति ।
प्रत्ययस्य यदा लोपः प्रशान् तदा च तिष्ठति ॥ २०५

नकारस्य तथा तत्र स्यात् प्रातिपदिकान्तता ।
पदान्तता नकारस्य भवेत्तत्र तथैव च ॥ २०६

"नलोप"श्च स्थितं सूत्रं तत्तदा च प्रयुज्यते ।
"नकारस्य भवेल्लोपः प्रशान् नान्तो न सिध्यति ॥ २०७

उत्तरपक्षः

नत्वं भवेदसिद्धं च नलोपो न भवेत्ततः ।
प्रशान् इति नकारान्तं पदं सिध्येत् यथायथम् ॥ २०८

प्रशामौ स्यात् पदं तत्र प्रशामः स्यात् पदं तथा ।
प्रशान्भ्याम् स्यात् पदं तत्र विशेषश्च न विद्यते ॥ २०९

किम (पुंसि)

किम् यदा च भवेन्न् शब्दः प्रत्ययः "सु" परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ २१०

३४२ । किमः कः । ७।२।१०३

किमः कः स्यात् समादेशो विभक्तिश्चेत् परे भवेत् ।
कः कौ के स्यात् काम् को कान् स्यात् सर्व्वत्र भवेत् पदम् ॥ २११

पूर्व्वपक्षः

"किमः क"श्च स्थितं सूत्रं न हि सूत्रं तथा भवेत् ।
"इम" इति भवेत् सूत्रं तेन सिध्येत् प्रयोजनम् ॥ २१२
"त्यादादीनाम्" स्थितं सूत्रम् अकारश्चानुवर्त्तते ।
"इमो भवेदकारश्च" इति चार्थो भवेदिह ॥ २१७
किम् शब्दः स्याद् यदा तत्र इमो भवेदकारता ।
क इत्येवमदन्तं च रूपं तदा प्रसिध्यति ॥ २१४

उत्तरपक्षः

"इमो" यदि भवेत् सूत्रं दर्शितं भवता यथा ।
"अलोन्तस्य" मकारस्य स्यादकारस्तदा पुनः ॥ २१५
"इ" तत्र च स्थितः पूर्व्वः "अ" तत्र च स्थितः परे ।
"य" तत्र स्यात् तथा तत्र रूपं "क्य" च तदा भवेत् ॥ २१६

पूर्व्वपक्षः

"नानर्थके" स्थितं तत्र निषेधश्च प्रवर्त्तते ।
"अलोऽन्त्य-परिभाषाया न प्रवृत्तिर्भवेदिह ॥ २१७
"इम्" इह च कृत्स्नस्य स्याद् अकारस्तदा पुनः ।
क इत्येवमदन्तं च रूपं तदा प्रसिध्यति ॥ २१८

उत्तरपक्षः

"इमो" यदि भवेत् सूत्रं व्याख्यातं भवता यथा ।
तथापि न भवेदिष्टं सिद्धमिह च सर्व्वथा ॥ २१९
"अव्यये"ति स्थितं सूत्रम् अकच् यदि प्रयुज्यते ।
ककिम् भवेत्तदा तत्र पदं साध्यं भवेत् पुनः ॥ २२०

इमो भवेदकारश्चेत् रूपं "कक" तदा भवेत् ।
अनिष्टं तु भवेत्तत्र रूपमिष्टं न सिध्यति ॥ २२१
"किमः क"श्चेत् भवेत् सूत्रं मुनिना दर्शितं यथा ।
इष्टं रूपं तदा सिध्येत् दर्शयामि परे यथा ॥ २२२
"किमः कः" स्याद् यदा तत्र "ककिम्" अपि च गृह्यते ।
मध्यपतितन्यायश्च पुनरिह प्रवर्त्तते ॥ २२३
किमश्चेद् ग्रहणं तत्र ककिम अपि च गृह्यते ।
किमो गतिर्यथा तत्र ककिमोऽपि तथा गतिः ॥ २२४
किमः कः स्यात् समादेशः ककिमोऽपि भवेच्च "क" ।
क इत्येवम् अदन्तं च रूपं तदा प्रसिध्यति ॥ २२५
अकच् यदा भवेत्तत्र तदापि च यथा भवेत् ।
मुनिना च तथा तत्र आदेशः "क" प्रदर्शितः ॥ २२६

इदम्

इदम् यदा भवेच्छब्दः प्रत्ययः सु परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयोजनम् ॥ २२७

**३४३ । इदमो मः । ७।२।१०८**

इदम् यदा भवेच्छब्दः प्रत्ययः सु परे यदा ।
इदं शब्दे मकारस्य मकारो हि भवेदिह ॥ २२८

पूर्व्वपक्षः

स्थित एव मकारश्च मकारः क्रियते पुनः ।
स्थिते विधिः कथं तत्र विधिरिह निरर्थकः ॥ २२९

उत्तरपक्षः

न च विधिर्निरर्थकः अस्ति तस्य प्रयोजनम् ।
"त्यदादीनाम्" अकारः स्यात् अपवादः प्रयुज्यते ॥ २३०

मकारश्च मकारश्च यदा तथा प्रवर्त्तते ।
तदा तत्र प्रयोज्यं स्यात् पुनः सूत्रं यथा परे ॥ २३१

**३४४ । इदोऽय् पुंसि । ७।२।१११**

इदम् यदा भवेत् पुंसि प्रत्ययः सु परे यदा ।
इदम् शब्दे इदभागस्य तदा स्याद् अम् इति स्थितिः ॥ २३२

इद्भागस्य यदा स्याद् "अय" पदम् अयम् तदा भवेत्।
विशेषो न स्थितः कश्चित् सुलोपः स्याद् यथायथम् ॥ २३३

इदम् यदा भवेच् शब्दः प्रत्ययः औ परे यदा।
"त्यदादीनां" भवेद् योज्यं अकारः स्यात् तथा पुनः ॥ २३४
मकारस्य यदा तत्र अकारश्च प्रवर्त्तते।
इद अ औ तदा तत्र रूपं भवेदिति स्थितिः ॥ २३५
"अतो गुणे" ततः सूत्रं भवेदिह प्रयोजितम्।
पररूपं भवेत्तत्र इद औ स्यात् तदा पुनः ॥ २३६
एवं यदा स्थितं तत्र सूत्रं परं प्रयुज्यते।
दकारस्य मकारः स्यात् तत्र सूत्रं भवेद् यथा ॥ २३७

३४५। दश्च। ७।२।१०९

इदम् यदा भवेच् शब्दः विभक्तिश्च परे यदा।
दकारस्य मकारश्च तदा तत्र प्रसज्यते ॥ २३८

दकारस्य यदा तत्र मकारश्च प्रवर्त्तते।
इम औ स्यात् तदा तत्र पदम् इमौ तदा भवेत् ॥ २३९
इमे भवेत् पदं तत्र प्रत्ययो जस् परे यदा।
इमम् इमौ इमान् तत्र अम् औट् शस् चेत् परे भवेत् ॥ २४०

त्यादादीनां सम्बुद्धिश्च न युक्ता स्यादिति स्थितिः।
उत्सर्गस्तु भवेदेवः पदं तस्मात् न दर्शितम् ॥ २४१
इदम् यदा भवेच् शब्दः प्रत्ययः टा परे यदा।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ २४२

३४६। अनाप्यकः। ७।२।११२

इदम् यदा भवेच् शब्दः आप् विभक्तिः परे यदा।
इदमश्च इदः स्यादन् अकच् यदि न वर्त्तते ॥ २४३

तृतीयायां टा विभक्तिः "आ" तत्र च स्थिता खलु।
सप्तम्यां सुप् विभक्तिः स्यात् "प" तत्र च पुनः स्थितः ॥ २४४
गृह्यते "आ" टायास्तत्र गृह्यते "प" सुपः पुनः।
आप् भवेच्च तथा तत्र तस्येह ग्रहणम् मतम् ॥ २४५

अन् यदा स्यात् तथा तत्र "अन आ" च तदा भवेत् ।
"इन" भवेत् समादेशः स्याद् अनेन पदं तथा ॥ २४६

इदम् यदा भवेच् शब्दः प्रत्ययो भ्याम् परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ २४७

३४७ । हलि लोपः । ७।२।११३

इदम् यदा भवेच् शब्द आप् हलादि परे यदा ।
इदमः स्यादिदो लोपः अकच् यदि न वर्त्तते ॥ २४८

पूर्व्वपक्षः

इदोलोपश्च कृत्स्नस्य पुनरिह प्रदर्शितः ।
अन्त्यालो भवेल्लोपः लुप्येत "द" हि केवलम् ॥ २४९

उत्तरपक्षः

न केवलमलोन्त्यस्य दकारस्य विलोपनम् ।
वार्त्तिकं च स्थितः शास्त्रे तत् प्रमाणं भवेदिह ॥ २५०

नानर्थके अलोन्त्यविधितः

अनभ्यासविकारे (वा)

अलोन्त्येति परिभाषा पयुज्यते निरर्थके ।
अभ्यासस्य विकारश्चेत् तदा विधिश्च युज्यते ॥ २५१

इद्भागो यो भवेदत्र स भवेच्च निरर्थकः ।
निरर्थके न नावश्च परिभाषा प्रयुज्यते ॥ २५२
इदस्तस्मात् च कृत्स्नस्य लोप इह प्रसज्यते ।
केवलन्तु दकारस्य लोप इह न युज्यते ॥ २५३

इदम् यदा भवेच् शब्दः प्रत्ययो भ्याम् परे यदा ।
त्यदादीनाम् भवेद् योयम् अकारश्च प्रवर्त्तते ॥ २५४
अकारः स्यात् यदा तत्र "इद अ भ्याम" तदा भवेत् ।
इदो यदा भवेल्लोपः "अ भ्यामि"ति च शिष्यते ॥ २५५

पूर्व्वपक्षः

"अ भ्याम्" यदा स्थितं तत्र अङ्गम् "अ" स्यात् तदा पुनः ।
अदन्तं न भवेत् तत्र "सुपि चे"ति न युज्यते ॥ २५६

"सुपि" यदा न युक्तं स्यात् न दीर्घः स्यात् तदा पुनः ।
दीर्घो यदा न तत्र स्यात् पदमिष्टं न सिध्यति ॥ २५७

उत्तरपक्षः

दीर्घं इह न तावत् स्यात् इति पक्षो भवेन्न च ।
दीर्घस्तावद् भवेदत्र सूत्रं परं स्थितं यतः ॥ २५८

३४८ । आद्यन्तवद् एकस्मिन् । १।१।२१

एकस्मिंश्चेत् क्रियमाणं कार्य्यमिह भवेत् क्वचित् ।
आदाविव भवेत् तच्च अन्ते इव भवेच्च तद् ॥ २५६

"अ" एको हि स्थितस्तत्र स्यादन्तवत् ततः पुनः ।
अन्तवच्च भवेत कार्य्यम् सुपि चेति प्रयुज्यते ॥ २६०
"सुपि" यदा प्रयुक्तं स्यात् दीर्घस्तदा भवेदिह ।
"अ भ्याम्" यदा यदा दीर्घः आभ्याम् पदं तदा भवेत् ॥ २६१

इदम् यदा भवेच् शब्दः प्रत्ययो भिस् भवेद् यदा ।
पदं यदा भवेत् साध्यं प्रक्रिया च तदा भवेत् ॥ २६२
इदम् यदा यदा भिस् स्यात् "त्यदादीना"म् प्रयुज्यते ।
अकारः स्यात् मकारस्य इद अ भिस् तदा भवेत् ॥ २६३
पररूपं भवेत्तत्र इद भिस् स्यात् तदा पुनः ।
"हलि लोपः" इदो लोपे अ भिस् रूपं प्रवर्त्तते ॥ २६४
अ भिस् यदा स्थितं तत्र "अत"श्चेति भवेत्तदा ।
भिस ऐस् च भवेत् प्राप्तः स ऐस् ए स्यात् यतः पुनः ॥ २६५

३४९ । नेदमदसोरकोः । ७।१।११

इदम् अदम् यदा शब्दः अकच् यदा भवेन्न च ।
भिस ऐस् न भवेत्तत्र न तावद ऐस् प्रयुज्यते ॥ २६६

अ भिस् यदा स्थितं तत्र न भिस एस् भवेदिह ।
"बहु" चेति भवेदेत्वं पदम् एभिस्तथा भवेत् ॥ २६७

इदम् यदा भवेच् शब्दः प्रत्ययो ङे परे यदा ।
"त्यदादीनाम्" अकारः स्यात् इद अ ए तदा भवेत् । २६८

पररूपं भवेत्तत्र "इद ए" स्यात् तदा पुनः ।
"सर्व्वनाम्नः"— भवेद् योज्यं स्मै तदा च तथा भवेत् ॥ २६९

पूर्व्वपक्षः

स्मैभावश्च भवेत् पूर्व्वं अन्भाश्च परे भवेत् ।
अन्भावेन स "स्मै"भावः बाधितश्च भवेदिह ॥ २७०
"स्मै" भावश्चेत् बाधितः स्यात् स बाधितश्च तिष्ठति ।
"स्मै"भावस्य पुनः पश्चात् उन्मेषः स्यात् सुदुर्ल्लभः ॥ २७१

उत्तरपक्षः

स्मैभावो यो भवेदत्र स च नित्यो भवेदिह ।
अनादेशात् प्रागेव हि स आदेशः प्रयुज्यते ॥ २७२
अनादेशे स्थितश्च यः स बाधितो भवेत् पुनः ।
"हलि लोपः" भवेद् योज्यं स बाधितस्तथा भवेत् ॥ २७३

"इद स्मै" च स्थितं तत्र इदो लोपो भवेत् पुनः ।
अस्मै तदा भवेत्तत्र पदमिष्टं तदेव हि ॥ २७४

इदम् भ्याम् स्यात् यदा तत्र पदमाभ्यां तदा भवेत् ।
इदम् भिस् स्यात् यदा तत्र पदम् एभ्यः भवेत्तदा ॥ २७५
अस्मात् भवेत् पदं तत्र आभ्याम् भवेत् पदं तथा ।
एभ्यः भवेत् पदं तत्र विशेषश्च न वर्त्तते ॥ २७६
अस्य स्यात् अनयोः स्याच्च स्याद् एषां च पदं पुनः ।
अस्मिन् भवेत् अनयोः स्यात् पदम् एषु भवेत्तथा ॥ २७७

"सर्व्वनाम्नः" स्थितं सूत्रम् अकच् यदा प्रवर्त्तते ।
अयकम् स्यात् इमकौ स्यात् इमके स्यात् पदं तदा ॥ २७८
इमकं स्याद् इमकौ स्यात् इमकान् च पदं भवेत् ।
इमकेन पदं च स्यात् इमकाभ्याम् तथैव च ॥ २७९
परं पदं भवेद् यत् यत् तत्तद्रूप्यं पुनर्बुधैः ।
न विशेषः स्थितस्तत्र तस्मात् किञ्चिन्न वाच्यते ॥ २८०

३५० । इदमोऽन्वादेशे अशनुदात्तस्तृतीयादौ । २।४।३२

इदम् यदा भवेच् शब्दः अन्वदेशो भवेद् यदा ।
अनुदात्तो भवेद् अशच् तृतीयाद्यौ तदा पुनः ॥ २८१

अकच् यदा भवेत्तत्र अश् तत्र स्यात् तदापि च ।
अशूवचनं साकच्कार्थं भवेदिह सतां मते ॥ २८२

३५१ । द्वितीया-टा-ओस्सि एनः । २।४।३४

इदम् यदा भवेच् शब्दः एतद् शब्दो भवेद् यदा ।
एन भवेत् द्वितीयायां टायामोसि तथैव च ॥ २८३

एकमेवाभिधेयं च पूर्व्वं शब्देन बोधितम् ।
तस्यैव बोधनं पश्चाद् अन्वादेशो इहोच्यते ॥ २८४

अयञ्च क्षुधया क्लिष्टो भोजयैनं च सत्वरम् ।
"अयम्" आदौ भवेत्तत्र पश्चात् एनम् प्रयुज्यते ॥ २८५
एनम् भवेत् पदं तत्र पदम् एनौ भवेत्तथा ।
एनान् भवेत् पदं तत्र एनेन एनयोः पुनः ॥ २८६

इति मकारान्ताः

अथ णकारान्तप्रकरणम्

सुगण्

गणयतेः सुपूर्व्वाच्च यदा विच् प्रत्ययो भवेत् ।
सुगण् तदा भवेच् शब्दः स इह प्रकृतिर्भवेत् ॥ २८७
सुगण भवेत् पदं तत्र सुगणौ सुगणस्तथा ।
सुगण्ट्षु स्यात् सुगण्ठ्सु स्यात् सुगण्सु स्यात् पदं पुनः । २८८

सुगाण

गणयते सुपूर्व्वाच्च यदा क्विप् प्रत्ययो भवेत् ।
सुगाण् स्याच्च तदा दीर्घे स इह प्रकृतिर्भवेत् ॥ २८९
सुगाण् भवेद् पदं तत्र सुगाणौ सुगाणस्तथा ।
सुगाण्ट्षु स्यात् सुगाण्ठ्षु स्यात् सुगाण्षु स्यात् तथा पदम् ॥ २९०

इति णकारान्ताः

१०।५ ७४

अथ नकारान्तप्रकरणम्

राजन्

राजन् यदा भवेच् शब्दः प्रत्ययः सु परे यदा ।
पदं यदा भवेत् साध्यं "सर्व्वे"ति स्यात् प्रयोजनम् ॥ २९१

सूत्रं "सर्व्वं" यदा युक्तं दीर्घस्तदा प्रजायते ।
दीर्घो यदा भवेत्तत्र राजन् सु स्यात् तदा पुनः ॥ २९२

राजान् सु स्यात् यदा तत्र पुनः सूत्रं प्रयोजनम् ।
हलङ्याब्भ्योश्च स्थितं सूत्रं तत्तदा च प्रयुज्यते ॥ २९३

हलङ्याब्भ्योश्चे यदा युक्तं प्रत्ययः "सु" विलुप्यति ।
प्रत्ययः सु यदा लुप्तो रूपं राजन् भवेत्तदा ॥ २९४

रूपं राजान् यदा तत्र पुनः सूत्रं प्रयोजनम् ।
"नलोपश्च" स्थितं सूत्रं तत्तदा च प्रयुज्यते ॥ २९५

"नलोपश्च" यदा युक्तं नकारश्च विलुप्यते ।
नकारस्य यदा लोपः रूपं राजा तदा भवेत् ॥ २९६

राजन् यदा भवेच्च शब्दः सम्बुद्धिश्च परे यदा ।
हे राजन् सु यदा यत्र सूत्रं परं भवेत्तदा ॥ २९७

३५२ । न ङिसम्बुद्ध्योः । ८।२।८

राजन् यदा भवेच्च शब्दः ङि सम्बुद्धिः परे यदा ।
नकारस्य न लोपस्तु पुनरिह विधीयते ॥ २९८

हे राजन् सु यदा तत्र प्रत्ययः "सु" विलुप्ति ।
हे राजन् स्यात् तदा तत्र नलोपश्च प्रसज्यते ॥ २९९

एतत् सूत्रं भवेद् योज्यं नकारो न विलुप्यति ।
हे राजन् स्यात् तदा तत्र रूपमिष्टं तदेव हि ॥ ३००

राजन् यदा भवेच्च शब्दः प्रत्ययो ङि परे यदा ।
राजन् भवेत् पदं तत्र नकारो न विलुप्यति ॥ ३०१

लोके तावत् पदं राजन् नेह पुनश्च दृश्यते ।
छन्दसि केवलं तस्य सुलभं हि निदर्शनम् ॥ ३०२

"परमे व्योमन्" इत्येषा भवेच्च ऋक् निदर्शनम् ।
"सुपां सुलुक्" भवेद् योज्यं तेन ङि च विलुप्यते ॥ ३०३

पूर्व्वपक्षः

लुक्शब्देन यतो लोपः पुनरिह विधीयते ।
प्रत्ययलक्षणं कार्य्यं तस्मादिह भवेन्न च ॥ ३०४

प्रत्ययलक्षणं कार्य्यं यदा न च भवेत् पुनः ।
व्योमन् इति तदा शब्दः पदसंज्ञां भजेन्न च ॥ ३०५
सुप् यदा स्यात् परे तत्र तदा पदं भवेदिह ।
ङिरूपी सुप् परे नास्ति पदं तस्माद् भवेन्न च ॥ ३०६
व्योमन् इति यदा शब्दः पदमिह भवेन्न च ।
"नलोप"श्च स्थितं सूत्रं तदिह च न युज्यते ॥ ३०७
"नलोप"श्चेत् न युक्तं स्यात् नकारो न विलुप्यति ।
नकारश्च स्थितस्तत्र न तस्य च विलोपनम् ॥ ३०८
नकारश्चेत् स्थितस्तत्र नकारश्चेत् न युज्यते ।
"न ङि" चेति कृतं सूत्रं निरर्थकं भवेत्तदा ॥ ३०९

उत्तरपक्षः

इह यद् भवता प्रोक्तं युक्तं हि तत् प्रतीयते ।
निरर्थकं भवेत् सूत्रं सत्यं तथा भवेदिह ॥ ३१०
तथापि च पुनः सूत्रं मुनिनेह प्रयोजितम् ।
कारणं च स्थितं तत्र येन सूत्रं विधीयते ॥ ३११
"न लुमता"--विधिः यः स्यात् स न नित्यो भवेदिह ।
प्रत्ययलक्षणं कार्य्यं तस्मादिह प्रसज्यते ॥ ३१२
प्रत्ययलक्षणं कार्य्यं यदा तत्र प्रसज्यते ।
पदसंज्ञा भवेत्तत्र "व्योमन्" पदं तदा भवेत् ॥ ३१३
"व्योमन्" यदा पदं तत्र "नलोप"श्च प्रयुज्यते ।
"नलोप"श्चेद् भवेद् युक्तं नलोपश्च भवेत्तदा ॥ ३१४
नलोपस्य यदा प्राप्तिः पुनरेवं भवेदिह ।
"न ङि" चेति तदा सूत्रं मुनिनेह प्रयोजियम् ॥ ३१५
नलोपश्च भवेत् प्राप्तः निषेधो हि प्रयोजितः ।
निषेधे च पुनः सूत्रं "न ङि" चात्र प्रयुज्यते ॥ ३१६
निरर्थकं न सूत्रं तत् भवेदिह कथञ्चन ।
प्रयोजनं भवेत् सूत्रं "न ङि" तस्मात् प्रयुज्यते ॥ ३१७
सूत्रं यदा प्रयुक्तं स्यात् पदं व्योमन् तदा भवेत् ।
"परमे व्योमन्" इत्येतत् दत्तं पूर्वं निदर्शनम् ॥ ३१८

ङौ उत्तरपदे प्रतिषेधः (वा)

समासः स्याद् यदा तत्र परं पदं यदा भवेत् ।
ङौविषये पदे पूर्व्वे निषेधस्य निषेधनम् ॥ ३१९
नलोपस्य निषेधस्य यदा भवेत् निषेधनम् ।
नलोपो हि वरीवर्त्ति नकारश्च विलुप्यति ॥ ३२०
चर्मणि तिला अस्येति विग्रहस्तु भवेद् यदा ।
चर्मतिलः पदं तत्र नकारश्च विलुप्यति ॥ ३२१
ब्रह्मणि निष्ठा अस्येति विग्रहस्तु भवेद् यदा ।
ब्रह्मनिष्ठं पदं तत्र नकारश्च विलुप्यति ॥ ३२२
राजन् यदा भवेच्च शब्दः प्रत्ययः औ परे यदा ।
राजानौ स्यात् पदं तत्र विशेषश्च न दृश्यते ॥ ३२३
राजन् यदा भवेच्च शब्दः प्रत्ययो जश् परे यदा ।
राजानः स्यात् पदं तत्र विशेषश्च न दृश्यते ॥ ३२४
राजन् यदा भवेच्च शब्दः अम् प्रत्ययो परे यदा ।
राजानम् स्यात् पदं तत्र विशेषश्च न दृश्यते ॥ ३२५
राजन् यदा भवेच्च शब्दः प्रत्ययः औ परे यदा ।
राजानौ स्यात् पदं तत्र विशेषश्च न दृश्यते ॥ ३२६
राजन् यदा भवेच्च शब्दः प्रत्ययः शस् परे यदा ।
विशेषश्च स्थितस्तत्र विशेषश्च यथा परे ॥ ३२७
राजन् यदा भवेच्च शब्दः प्रत्ययः शस् परे यदा ।
“यचि भस्” च भवेद् योज्यं भसंज्ञा च तथा भवेत् ॥ ३२८
यदा राजन् भसंज्ञं स्यात् “अल्लोप”श्च प्रवर्त्तते ।
अकारस्य भवेल्लोपः रूपं राज्नम् तदा भवेत् ॥ ३२९
राज्नम् यदा भवेत् तत्र सान्धिर्भवेत् प्रयोजनम् ।
“स्तोः श्चुना श्चुः” भवेद् योज्यं पदं राज्ञः तथा भवेत् ॥ ३३०

पूर्व्वपक्षः

अल्लोपः स्याद् यदा तत्र अकारश्च विलुप्यति ।
अलोपः स्थानिवत् तत्र “अः” स्थितवच्च च मन्यते ॥ ३३१
अः स्थानिवद् यदा तत्र जनयोश्च न संहिता ।
पदं राज्ञस्तथा तत्र न कथञ्चित् प्रजायते ॥ ३३२

उत्तरपक्षः

अल्लोपः स्थानिवत् न स्यात् स स्थानिवत् भवेन्न च ।
न च पूर्वत्रासिद्धीये स्थानिवत्त्वं प्रसज्यते ॥ ३३३

पूर्वपक्षः

शम् विद्यते वहिस्तत्र लोप इह तदाश्रितः ।
वहिरङ्गं भवेत कार्य्यं लोपकार्य्यं भवेद् यदा ॥ ३३४
राजन् शब्दे नकारो य अन्तःशब्दं स्थितो हि मः ।
अन्तरङ्गं भवेत् कार्य्यं कार्य्यं तदाश्रितं यदा ॥ ३३५
वहिरङ्गम् असिद्धं स्यात् अन्तरङ्गं भवेद् यदा ।
श्चुत्वं प्रति ततो लोपः स्यादसिद्धः इति स्थितिः ॥ ३३६
असिद्धः स्याद् यदा लोपः सन्धिकार्य्यं भवेन्न च ।
जनयोर्न भवेत् सन्धिः पदं राज्ञः न सिध्यति ॥ ३३७

उत्तरपक्षः

अन्तरङ्गवहिरङ्गभाव एव न चात्र च ।
"असिद्धम्" इति चात्र ते परिभाषा न युज्यते ॥ ३३८
"अल्लोपोऽनः" स्थितं सूत्रं षष्ठे तच्च प्रवर्त्तते ।
अकारस्य भवेल्लोपः सूत्रं यदि प्रयुज्यते ॥ ३३९
"स्तोः श्चुना श्चुः" स्थितं सूत्रम् अष्टमे तत् प्रवर्त्तते ।
श्चुत्वमिह भवेत् सन्धौ सूत्रं यदि प्रयुज्यते ॥ ३४०
अल्लोपो यो भवेत्तत्र वहिरङ्गो भवेच्च सः ।
श्चुत्वमिह भवेद् यद् तद् अन्तरङ्गं भवेत् पुनः ॥ ३४१
अल्लोपश्च स्थितः षष्ठे श्चुत्वं तदष्टमे स्थितम् ।
श्चुत्वं तावदसिद्धं स्याद् अल्लोपं प्रति तत्र च ॥ ३४२
अन्तरङ्गं भवेद् श्चुत्वं तदसिद्धं भवेद् यदा ।
अन्तरङ्गभाव एव तदा तत्र न वर्त्तते ॥ ३४३
अन्तरङ्गभाव एव यदि तत्र न विद्यते ।
अन्तरङ्गपरिभाषा कथं वा विद्यते पुनः ॥ ३४४
अन्तरङ्ग परिभाषा तस्मान्नेह प्रवर्त्तते ।
असिद्धा परिभाषा सा प्रकृते च विशेषतः ॥ ३४५

असिद्धं चेद् भवेत् श्चुत्वमसिद्धमस्तु वा तथा।
अल्लोपो यः स्थितश्चात्र न चासिद्धो भवेच्च सः॥ ३४६
षष्ठस्थं प्रति तावच्चेदष्टमस्थं न सिध्यति।
अष्टमस्थं प्रति तावत् षष्ठस्थं न न सिध्यति॥ ३४७
सिध्यत्येव च षष्ठस्थम् अष्टमस्थं प्रतीह च।
अल्लोपः स सिध्यत्येव श्चुत्वं तथाविधं प्रति॥ ३४८
अल्लोपश्च यदा सिध्येत् सिध्येत् श्चुत्वं तदा पुनः।
अल्लोपे च भवेद् "राज्नः" श्चुत्वे "राज्ञः" पुनर्भवेत्॥ ३४९
जनयोश्च भवेत् सन्धिः पदं राज्ञः भवेत् तथा।
यदा राजन् यदा टा स्यात् पदं राज्ञा तदा भवेत्॥ ३५०
यदा राजन् भवेच्च् शब्दः प्रत्ययो भ्याम् परे यदा।
पदं यदा भवेत् साध्यं सूत्रं परं प्रवर्त्तते॥ ३५१
यदा राजन् भवेच्च् शब्दः प्रत्ययो ङे परे यदा।
पदं राज्ञे भवेत्तत्र विशेषश्च न वर्त्तते॥ ३५२

यदा राजन् भवेच्च् शब्दः प्रत्ययो भ्याम् परे यदा।
नकारस्य भवेल्लोपः राजभ्याम् च पदं भवेत्॥ ३५३
यदा राजन् भवेच्च् शब्दः प्रत्ययो भिस् परे यदा।
नकारस्य भवेल्लोपः राजभिः च पदं भवेत्॥ ३५४
यदा राजन् भवेच्च् शब्दः प्रत्ययो भ्याम् भवेद् यदा।
नकारस्य भवेल्लोपः राजभ्यश्च पदं भवेत्॥ ३५५

पूर्व्वपक्षः

यदा राजन् यदा भ्याम् स्यात् नलोपश्चेत् भवेत्तदा।
"सुपि" चेति भवेद् दीर्घो राजभ्याम् न पदं भवेत्॥ ३५६
यदा राजन् यदा भिस् स्यात् नलोपश्चेत् भवेत्तदा।
"अत" श्चेति भवेद् ऐस् च राजभिः न पदं भवेत्॥ ३५७
यदा राजन् यदा भ्याम् स्यात् नलोपश्चेत् भवेत्तदा।
"बहु" चेति भवेद् एत्वं राजभ्यः न पदं भवेत्॥ ३५८
आदौ तत्र भवेद् दीर्घः पश्चात् ऐस् च प्रवर्त्तते।
ततः परं भवेद् एत्वं दर्शितं च यथा मया॥ ३५९

उत्तरपक्षः

लोप इह नकारस्य स्यादसिद्ध इति स्थितिः ।
न तथाच भवेद् दीर्घं ऐस् ए चापि भवेन्न च ॥ ३६०

पूर्व्वपक्षः

"राजाश्व" स्यात् यदा तत्र "दण्ड्यत्र" स्याद् यदा पुनः ।
पूर्व्वत्रासिद्धमित्येतत् तदापि च प्रयुज्यते ॥ ३६१
नलोपश्चेत् असिद्धः स्यात् तत्र तत्र मते तव ।
सवर्णदीर्घता न स्यात् नापि स्याच्च यणादिकम् ॥ ३६२
राजाश्व स्याद् यदा तत्र भवेदेव हि दीर्घता ।
दण्ड्यत्र स्याद् यदा तत्र भवेदेव तदा च यण् ॥ ३६३
असिद्धेऽपि नलोपे चेत् तत्र कार्य्यं तथा भवेत् ।
सिद्धेऽपि च नलोपे स्यादिह कार्य्यं तथैव च ॥ ३६४
तत्र यदि भवेत् कार्य्यमत्र कार्य्यं कथं हि न ।
असिद्धता नकारस्य तत्र चात्र समा खलु ॥ ३६५

उत्तरपक्षः

राजाश्व स्याद् यदा तत्र दीर्घः कार्य्यो यदा पुनः ।
असिद्धं न तदा ए स्यात् नकारस्य विलोपनम् ॥ ३६६
दण्ड्यत्र स्याद् यदा तत्र यण्--आदेशो भवेद् यदा ।
असिद्धं न तदा च स्यात् नकारस्य विलोपनम् ॥ ३६७
अन्यत्र स्यादसिद्धं च नकारस्य विलोपनम् ।
असिद्धं स्यात् कदा कुत्र तदुच्यते परं पुनः ॥ ३६८

३५३ । **नलोपः सुप्-स्वर-संज्ञा तुग्विधिषु कृति । ८।२।२**

सुप्विधिश्चेत् भवेत्तत्र स्वरविधिर्भवेद् यदि ।
संज्ञाविधिर्भवेद् वा चेत् तुग्विधिश्चेत् भवेत् कृति ॥ ३६९
असिद्धं स्यात् तदा तत्र नकारस्य विलोपनम् ।
एषु तावन्नलोपश्च स्यादसिद्ध इति स्थितिः ॥ ३७०
यदा भ्याम् स्यात् यदा भिस् स्यात् यदा भ्यस् च भवेत् पुनः ।
सुप्विधिः स्यात् तदा तत्र न तत्र संशयः स्थितः ॥ ३७१
एषु लोपो नकारस्य स्यादसिद्धस्ततः पुनः ।
स्थित इव नकारः स्यात् स्थित इव स मन्यते ॥ ३७२

नकारः स्याद् यदा तत्र "सुपि" चेति न युज्यते ।
न च तस्माद् भवेद दीर्घो राजभ्यां च पदं भवेत् ॥ ३७३
नकारः स्याद् यदा तत्र "अत"श्चेति न युज्यते ।
न तस्माद् ऐस् भवेत्तत्र राजभ्यश्च पदं भवेत् ॥ ३७४
नकारः स्याद् यदा तत्र "बहु"—चेति न युज्यते ।
न तस्माद् च भवेत्तत्र राजभ्यश्च पदं भवेत् ॥ ३७५
न दीर्घः स्यात् न तावद् ऐस् न तावद् एस् भवेदिह ।
राजभ्यां स्यात् राजभिः स्यात् राजभ्य स्यात् पदं पुनः ॥ ३७६

राज्ञः भवेत् पदं तत्र राज्ञोः भवेत् तथा पदम् ।
राज्ञां भवेत् पदं तत्र विशेषश्च न वर्त्तते ॥ ३७७

यदा राजन् यदा ङि स्यात् राज्ञि पदं तदा भवेत् ।
"विभाषे"ति यदा तत्र पदं भवेत् च राजनि ॥ ३७८

प्रतिदिवन्

प्रतिदिव् स्यात् यदा धातुः प्रत्ययः स्यात् कनिन् तदा ।
प्रतिदिवन् तदा च स्यात् स इह प्रकृतिर्भवेत् ॥ ३७९
प्रतिदिवन् यदा शब्दः प्रत्ययः सु परे यदा ।
प्रतिदिवा तदा तत्र विशेषस्तु न वर्त्तते ॥ ३८०
प्रतिदिवन् यदा शब्दः प्रत्ययः औ परे यदा ।
भवेत् प्रतिदिवानौ च विशेषस्तु न वर्त्तते ॥ ३८१
प्रतिदिवन् यदा शब्दः प्रत्ययो जश् परे यदा ।
भवेत् प्रतिदिवानश्च विशेषस्तु न वर्त्तते ३८२
भवेत् प्रतिदिवानम् च यदा स्याद् अम् परे पुनः ।
भवेत् प्रतिदिवानौ च यदा स्याद औ पुनः परे ॥ ३८३
प्रतिदिवन् यदा शब्दः प्रत्ययः शस् परे यदा ।
"अल्लोपोऽनः" भवेद् योज्यं अल्लोपश्च तथा भवेत् ॥ ३८४
अकारस्य यदा तत्र तथा लोपो विधीयते ।
तदा स्यात् "प्रतिदिवन् अ" ततः सूत्रं परं पुनः ॥ ३८५

३५४। हलि च। ८।२।७७
रेफान्तश्चेद् भवेद् धातुर्वान्तो धातुर्भवेद् यदि।
उपधाया इको दीर्घस्तदा स्याच्च परे हलि॥ ३८६

इह स्यात् "प्रतिदिव् न् अ" यथापूर्व्वं प्रदर्शितम्।
इको यदा भवेद् दीर्घः प्रतिदीव्नः पदं भवेत्॥ ३८७

पूर्व्वपक्षः

"अच"श्चेति स्थितं सूत्रं तदिह च प्रवर्त्तते।
अल्लोपः स्थानिवत्तत्र अकारश्च स्थितो भवेत्॥ ३८८
अकारश्चेत् स्थितस्तत्र व्यवधानं प्रजायते।
व्यवधानं यदा तत्र हल्परत्वं भवेन्न च॥ ३८९

उत्तरपक्षः

दीर्घविधिर्यदा तत्र स्थानिवत्त्वं तदा च न।
दीर्घविधिर्भवेच्चायस्थानिवत्त्वं न सिध्यति॥ ३९०

पूर्व्वपक्षः

बहिरङ्गं भवेत् कार्य्यमल्लोपः क्रियते यदा।
अन्तरङ्गं भवेत् कार्य्यं दीर्घो यदा विधीयते॥ ३९१
बहिरङ्गमसिद्धं स्याद अन्तरङ्गं प्रतीह च।
तस्मादिह पुनर्दीर्घः कथमपि न सिध्यति॥ ३९२

उत्तरपक्षः

बहिरङ्गपरिभाषा नेह पुनः प्रवर्त्तते।
कारणन्तु पुनस्तत्र पूर्व्वं मया प्रदर्शितम॥ ३९३

प्रतिदीव्नो भवेत्तत्र विशेषस्तु न वर्त्तते।
राज्ञ इव भवेद् रूपं भ्यामादौ च परे हलि॥ ३९४

यज्वन्

यज्वन् यदा यदा सु स्यात् तदा यज्वा पदं भवेत्।
यज्वन् यदा यदा स्याद् औ यज्वानौ च भवेत् पदम्॥ ३९५
यज्वन् यदा यदा शस् स्यात् यज्वानश्च पदं भवेत्।
यज्वन् यदा यदा स्यादम् यज्वानम् च पदं तदा॥ ३९६

यज्वन् यदा यदा स्याद् औट् यज्वानौ च पदं भवेत् ।
यदा यज्वन् यदा स्याद् शस् सूत्रं परं भवेत्तदा ॥ ३९७

**३५५ । न संयोगाद् वमन्तात् । ६।४।१३७**

वन्नन्तः स्याद् यदा शब्दः मन्नन्तः स्याद् यदा पुनः ।
वकारश्च मकारश्च संयोगे चेत् पुनर्भवेत् ॥ ३९८
अनि भवेदकारो यो न तस्य स्याद् विलोपनम् ।
शसादौ च भसंज्ञायां सूत्रमिदं प्रयुज्यते ॥ ३९९

अकारस्य न लोपः स्यात् यज्वनः स्यात् पदं शसि ।
यज्वना स्यात् पदं तत्र विशेषश्च न वर्त्तते ॥ ४००
यज्वभ्याम् स्यात् पदं तत्र विशेषो न स्थितः पुनः ।
परं पदं वुधैरूह्यं न च मया प्रदीयते ॥ ४०१

वृह्मन्

वृह्मन् यदा भवेच् शब्दः प्रत्ययः शस् परे यदा ।
वृह्मनः स्यात् पदं तत्र गतिस्तत्र समा भवेत् ॥ ४०२
वाह्मना स्यात् पदं तत्र वृह्मभ्याम् च भवेत् पदम् ।
परं पदं वुधैरूह्यं न च मया प्रदीयते ॥ ४०३

वृत्रहन्

वृत्रहन् स्याद् यदा शब्दः प्रत्ययः सु परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं भवेत्तदा ॥ ४०४

**३५६ । इन्-हन्-पूषार्यम्णां शौ । ६।४।१२**

इन् यदा च भवेदन्ते हन्नन्ते च भवेद् यदा ।
पूषन् यदा भवेत्तत्र स्यादर्य्यमन् यदा पुनः ॥ ४०५
उपधायाम्भवेद् दीर्घः केवलं शौ परे खलु ।
अन्यत्र शेः न तेषां च भवेद् दीर्घ इति स्थितिः ॥ ४०६

शेरन्यत्र निषेधः स्यात् सौ निषेधो भवेत्ततः ।
एवं तत्र निषेधे च सूत्रं परं प्रसज्यते ॥ ४०७

**३५७ । सौ च । ६।४।१३**

सु यदि स्यात् परे तत्र सम्बुद्धिर्नभवेद् यदि ।
इन्नादीनामुपधाया भवेद् दीर्घ इति स्थितिः ॥ ४०८

वृत्रहन् स्याद् यदा शब्दो हनस्तश्च भवेत्तदा ।
प्रत्ययः सु परे तत्र दीर्घस्ततो भवेदिह ॥ ४१०
दीर्घो यदा भवेत्तत्र वृत्रहान् स्यात् पदं तदा ।
नकारस्य भवेल्लोपः वृत्रहा च पदं भवेत् ॥ ४११

वृत्रहन् सु यदा तत्र सम्बुद्धिश्च पुनर्यदा ।
न च तदा भवेद् दीर्घः हे वृत्रहन् तदा भवेत् ॥ ४१२
वृत्रहन् स्याद् यदा शब्दः प्रत्यय औ परे यदा ।
वृत्रहणो पदं तत्र "एकाजि"ति णकारता ॥ ४१३
वृत्रहन् शस् यदा तत्र वृत्रहणः तदा भवेत् ।
वृत्रहणम वृत्रहणौ अम औट् यदा भवेत् परे ॥ ४१४

वृत्रहन् स्याद् यदा शब्दः प्रत्ययः शस् परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ ४१५

## ३५८ । हो हन्ते ञ्णिन्नेषु । ७।३।५४

ञित् यदि स्यात् परे तत्र णित् यदि च परे भवेत् ।
नकारश्च पुनस्तत्र यदि परे प्रवर्त्तते ॥ ४१६
हन्तेर्यश्च हकारः स्यात् कुत्वं तस्य प्रजायते ।
शसादौ च भसंज्ञायां सूत्रमिदं प्रयुज्यते ॥ ४१७

वृत्रहन् स्याद् यदा शब्दः नकारश्च परे भवेत् ।
हकारस्य घकारः स्यात् वृत्रघ्नः स्यात् पदं तदा ॥ ४१८

पूर्व्वपक्षः

इह णत्वं कथं न स्याद् इति तावद् न बुध्यते ।
सर्व्वथा च पुनर्णत्वमिह प्राप्तं भवेत् खलु ॥ ४१९
एकाजिति स्थितं सूत्रं तदिह च प्रयुज्यते ।
तेन णत्वं भवेदत्र न तत्र संशयः स्थितः ॥ ४२०
अल्लोपश्चेत् भवेत्तत्र स स्थानिवत् पुनर्भवेत् ।
स्थानिवत्त्वादकारस्य पदमेकाज् भवेत् पुनः ॥ ४२१
नापि चेत् स्थानिवत् स स्यात् स्यात् "प्रातिपदिके"ति च ।
"कुमति" च स्थितं सूत्रं तदपि वा प्रसज्यते ॥ ४२२

सर्व्वथा च नकारस्य तस्य प्राप्तिर्भवेदिह ।
एतेन वा भवेण्णत्वं तेन णत्वं भवेन्न वा ॥ ४२३

उत्तरपक्षः

णत्वमिह न तावत् स्यात् णत्वमिह न लभ्यते ।
अत् पूर्व्वस्य भवेद् हन्ते णत्वमिह च केवलम् ॥ ४२४
वृत्रघ्नः स्याद् यदा तत्र अत्पूर्व्वं न भवेत्तदा ।
न हि तस्माद् भवेद् णत्वं विना णत्वं पदं भवेत् ॥ ४२५

कदा कुत्र कथं णत्वं हन्तेरिह प्रजायते ।
तद्विषये स्थितं सूत्रं दीयते तत् परे मया ॥ ४२६

३५९। (क) हन्तेः—८।४।२२

उपसर्गे निमित्तं चेत् हन्तेर्नस्य नकारता ।
प्रहण्यात् च पदं तत्र तथा णत्वे निदर्शनम् ॥ ४२७

३५९। (ख) अत्पूर्व्वस्य—८।४।२२

केवलमत्पूर्व्वस्यैव हन्तेर्नस्य णकारता ।
नान्यथा च भवेत् णत्वं प्रघ्नन्तीति न तावत् णः ॥ ४२८

पूर्व्वपक्षः

"इह योगविभागेन सूत्रद्वयं प्रदर्शितम् ।
"हन्तो"रिति भवेदेवम् "अत्पूर्व्वस्य" परं भवेत् ॥ ४२९
परिभाषा स्थिता शास्त्रे सा प्रयोज्या भवेदिह ।
परिभाषा भवेदत्र यथा परे प्रदर्शिता ॥ ४३०

प्रतिषेधो वा (प)

विधिर्व्वापि भवेच्चायं प्रतिषेधोऽथवा भवेत् ।
भवेदनन्तरस्यैव न भवेदन्तरस्य च ॥ ४३१
अव्यवहितपूर्व्वं यत् तदेव विषयो भवेत् ।
अव्यवहितपरं यत् विषयः स्यात् तदेव च ॥ ४३२
पूर्व्वे वा स्यात् परे वा स्यात् व्यवधाने स्थितं हि यत् ।
न तद् भवेत् समाकृष्टं न विषयो भवेद्धि तत् ॥ ४३३
योगस्येह विभागश्च यदा भवेत् प्रदर्शितः ।
"हन्ते"रिति भवेत् पूर्व्वे "अत् पूर्व्वस्य" परे भवेत् ॥ ४३४

"अत् पूर्व्वस्य" परे स्याच्च तेन प्राप्तं भवेच्च यत्।
"हन्ते"रिति भवेत् पूर्व्वं तत्रैव तत् प्रसज्यते॥ ४३५
"अत् पूर्व्वस्य" परे च स्यात् तत्र यो नियमः कृतः।
"हन्ते"रित्यव्यवहिते च पूर्व्वं स नियमो भवेत्॥ ४३६
हन्तेरिति क्विबन्ते हि केवलं नियमो भवेत्।
अन्यत्र च क्विबन्तादौ स नियमो न युज्यते॥ ४३७
प्रघ्नन्तीति पदं यत् स्यात् तत्र णत्वं नियम्यते।
न च वृत्रहणादौ स्यात् क्विबन्ते नियमः पुनः॥ ४३८
योगस्य चेद् विभागः स्याद् एतद्धि लभ्यते फलम्।
केवलं च क्विबन्तस्य हन्ते णत्वं निवर्त्तते॥ ४३९

उत्तरपक्षः

हन्ते हि केवलं णत्वम् इह भवेन् निराकृतम्।
इहे योगविभास्य तदेव केवलं फलम्॥ ४४०
इति यद् भवता प्रोक्तं न हि तत् सङ्गतं भवेत्।
नापि योगविभागश्चेत् फलं हि स्यात् तदेव च॥ ४४१
एकमेव यदा सूत्रं तदापि तत् फलं भवेत्।
विनापि च विभागेन लभ्यते तत् फलं खलु॥ ४४२
इह "हन्तेरत्पूर्व्वस्य" सूत्रमेकं भवेद् यदि।
तदापि च क्विबन्तस्य हन्तेर्णत्वं निरस्यते॥ ४४३

इह योगविभागस्य स्थितमन्यत् प्रयोजनम्।
अन्यत्रापि क्विबन्तादौ णत्वं तेन निरस्यते॥ ४४४
"एकाजि"ति स्थितं सूत्रं तेन णत्वं भवेच्च यत्।
निराकृतं तदपि स्यात् योगो यदि विभज्यते॥ ४४५
वृत्रघ्नः स्यात् पदं तत्र सूत्र"मेकाच्" प्रयुज्यते।
तेन तत्र भवेत् णत्वम् "अत्"--इति च निरस्यते॥ ४४६
"कुमति च" स्थितं सूत्रं तेन णत्वं भवेच्च यत्।
निराकृतं तदपि स्यात् योगो यदि विभज्यते॥ ४४७
वृत्रघ्नः स्यात् पदं तत्र "कुमति च" प्रयुज्यते।
तेन तत्र भवेद् णत्वम् "अत्" -इति च निरस्यते॥ ४४८

"अत् पूर्व्वस्य" तिङ्गस्य "हन्ते"र्णत्वं निवर्त्ततामु ।
इति योगविभागस्य न हि तावत् प्रयोजनम् ॥ ४४९
अन्यत्रापि क्विबन्तादौ हन्तेर्णत्वं निवर्त्ततामु ।
इति योगविभागस्य भवेत् खलु प्रयोजनम् ॥ ४५०
इह योगविभागेन णत्वमात्रं नियम्यते ।
नियमा णत्वमात्रे स्याद् इति योगो विभज्यते ॥ ४५१
"एकाजि"ति स्थितं सूत्रं व्यवधाने स्थितं च तत् ।
तेन यच्च भवेत् णत्वं तदपि च निरस्यते ॥ ४५२
"कुमति च" स्थितं सूत्रं व्यवधाने स्थितं हि तत् ।
तेन यच्च भवेत् णत्वं तदपि च नियम्यते ॥ ४५३
या स्याद् "अनन्तरस्ये"ति न सा तावत् प्रयुज्यते ।
सा च पुनः परिभाषा वारिता हि भवेदिह ॥ ४५४
इह योगविभागेन यत् "यत्—" इति च लभ्यते ।
"एकाजि"ति भवेच्च यत् तत् तेन च नियम्यते ॥ ४५५
बाधित्वा परिभाषां ताम् "अद्वि"ति च प्रवर्त्तते ।
एकाजित्यनेन प्राप्तं णत्वं तेन निवर्त्तते ॥ ४५६

## पूर्व्वपक्षः

वृत्रहन् स्याद् यदा शब्दः प्रत्ययः शस् परे यदा ।
वृत्रघ्नः स्यात् तदा शब्दः दर्शितं भवता तथा ॥ ४५७
"हो हन्ते"श्च स्थितं सूत्रं तद् भवता प्रयोजितम् ।
हकारस्य घकारश्च तथा खलु विधीयते ॥ ४५८
अत्र तावत् भवेत् प्रश्नः कथं वा स्यात् घकारता ।
नकारश्चेत् परे तत्र घकारः स्यात् तदैव च ॥ ४५९
प्रकृति तु नकारो न परे तत्र स्थितः खलु ।
अकारः स्थानिवत् तत्र अकारो हि परे स्थितः ॥ ४६०
अकारः स्थानिवत् तत्र अकारो न परे भवेत ।
"हो हन्ते" नं भवेद् योज्यं न च भवेद् घकारता ॥ ४६१
घकारे च पदं तत्र वृत्रघ्न इति दर्शितम् ।
परं तत्र घकारवत् वृत्रघ्नः हि न सिध्यति ॥ ४६२

उत्तरपक्षः

अकारस्य लोपो यः स्यात् स स्थानिवत् कदापि न।
स्थानिवत् चेत् हकारस्य न-परता न सिध्यति ॥ ४६३
नकारश्च परे तत्र सर्व्वदेव हि तिष्ठति।
एतच्च मनसि कृत्वा मुनिना "कु" विधीयते ॥ ४६४
विधानं च तथाभूतं मुनिनेह प्रयोजितम्।
विधानस्य हि सामर्थ्यात् अल्लोपः स्थानिवत् न हि ॥ ४६५
अकारो न परे तस्मात् नकारो हि परे भवेत्।
"हो हन्ते"श्च भवेत् योज्यं "वृत्रघ्न"श्च भवेत् पदम् ॥ ८६६

पूर्व्वपक्षः

वृत्रघ्नः स्यात् यदा तत्र णत्वं भवेद् विभाषया।
माधवेन विकल्पेन णत्वमिह प्रदर्शितम् ॥ ४६७

उत्तरपक्षः

सूत्रं "प्रातिपादिकान्त—" माधवेन प्रयोजितम्।
तेन णत्वं विभाषा स्याद् इति तेन प्रदर्शितम् ॥ ४६८
परन्तु न भवेत् णत्वं णत्वमिह न सिध्यति।
णत्वं यदि भवेत्तत्र विरोधो हि भवेत्तदा ॥ ४६९
भाष्येण च विरोधः स्यात् णत्वमिह भवेद् यदि।
वार्त्तिकेन विरोधः स्यात् णत्वं यदि विधीयते ॥ ४७०
"अट्कुप्वाङ्नुम् व्यवायेऽपि" सूत्रं तत्र प्रवर्त्तते।
तस्मिन् सूत्रे स्थितं तत्र वार्त्तिकं च यथायथम् ॥ ४७१

वा व्यवाये ह्रादेशेषु प्रतिषेधः (वा)

प्रयोजनं वृत्रघ्नः स्रुघ्नः प्रावानीति (वा)

वार्त्तिकस्य मतं चेतत् भाष्येऽपि च समर्थितम्।
इह यत् वार्त्तिके प्रोक्तं भाष्ये प्रोक्तं तदेव च ॥ ४७२
भाष्येण च विरोधः स्यात् णत्वं यदि विधीयते।
वार्तिकेन विरोधः स्यात् णत्वं विधीयते यदि ॥ ४७३
भाष्येणेह विरोधाच्च विरोधाद् वार्तिकेन च।
माधवस्य मतं यत् तत् न गृह्यते विचक्षणैः ॥ ४७४
इह णत्वं ततो नास्ति णत्वमिह न सिध्यति।

विना शार्त्वं पदं तत्र वृत्रघ्नश्च भवेत् शसि ॥ ४७५

यदा शार्ङ्गिन् भवेच् शब्दः यशस्विन् च भवेद् यदा ।
अर्य्यमन् स्याद् यदा शब्दः पूषण् शब्दो यदा भवेत् ॥ ४७६

वृत्रहन्वत् तदा रूपं भवेत्तेषामिति स्थितिः ।
रूपे तेषां विशेषश्च न कुत्रचित् प्रवर्त्तते ॥ ४७७

पूर्व्वपक्षः

वृत्रहन् स्याद् यथा तत्र यशस्विन् स्यात् तथैव च ।
इति यद् भवता प्रोक्तं न सङ्गतं भवेच्च तत् ॥ ४७८

यशस्विन् स्याद् यदा शब्दः प्रत्ययस्तु भवेद् विनिः ।
इन् तत्र तु स्थितश्चापि निरर्थको न गृह्यते ॥ ४७९

इन् यदा न भवेद् ग्राह्य "इन् हन्" इक न युज्यते ।
वृत्रहन् वा ततो रूपं नेह तावत् प्रवर्त्तते ॥ ४८०

उत्तरपक्षः

वृत्रहन्वद् भवेद् रूपम् "इन्हन्नि"ति प्रयुज्यते ।
परिभाषा स्थिता तत्र तथा सिद्धिर्भवेदिह ॥ ४८१

अन्-इन्-अन्-मस् ग्रहणानि अर्नवता
चानर्थकेन च तदन्तविधिं प्रयोजयन्ति (वा)

अन् इन् यदि भवेत्तत्र अस् मस् यदि भवेत् पुनः ।
स्यात् तदन्तविधिस्तत्र सार्थको वा निरर्थकः ॥ ४८२

अर्य्यमन् स्यात् यदा शब्दः प्रत्ययो ङि भवेद् यदा ।
अर्य्यम्नि स्यात् अर्य्यमनि "विभाषे"ति पदद्वयम् ॥ ४८३

पूषण् यदा भवेच् शब्दः प्रत्ययो ङि परे यदा ।
पूष्णि स्यात् पूषणि स्याच्च "विभाषे"ति पदद्वयम् ॥ ४८४

मघवन्

मघवन् स्याद् यदा शब्दः प्रत्ययः सु परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ ४८५

मघवन् स्याद् यदा शब्दः अन्तादेशो भवेच्च तृ ।
विभाषा च विधिर्योज्यः ऋकार इद् भवेदिह ॥ ४८६

तकारः स्याद् यदा तत्र मघव/त्/स् च तदा भवेत् ।
पुनः सूत्रं भवेद् योज्यं यथा परे प्रदर्शितम् ॥ ४८७

सर्व्वनामस्थानं तत्र परे यदि प्रवर्त्तते ।
उगिताम् नुम् अञ्चतेर्नुम् धातुर्यदि तथा तु न ॥ ४८८

नुडागमो भवेत्तत्र मघव।न्।त।स् च तदा स्थितम् ।
"हलङ्याब्भ्यश्च" तदा तत्र सुलोपश्च भवेत्तथा ॥ ४८९
सुलोपः स्याद् यदा तत्र मघवन्।त् च तदा भवेत् ।
"संयोगान्त—" ततः योज्यं तकारश्च विलुप्यति ॥ ४९०
तकारः स्याद् यदा लुप्तः मघवन् स्यात् तदा पुन ।
"सर्व्वे"ति च ततो योज्यं दीर्घं स्यात् मघवान् पदम् ॥ ४९१

पूर्व्वपक्षः

"संयोगान्त"—स्थितं सूत्रं तदिह च प्रयुज्यते ।
तकारस्य तथा लोपः पुनरिह विधीयते ॥ ४९२
"सर्व्वेति" च स्थितं सूत्रं पश्चात् तच्च प्रयुज्यते ।
प्रयोगेन पुनस्तस्य दीर्घं इह विधीयते ॥ ४९३
"संयोगान्त" स्थितं यत् तत् त्रिपाद्यां च स्थितं खलु ।
"सर्व्वे"ति यत् स्थितं तत्र षष्ठाध्याये स्थितं हि तत् ॥ ४९४
"पूर्व्वत्रासिद्धमित्येतत् शास्त्रमिह प्रवर्त्तते ।
अष्टमस्थमसिद्धं स्यात् षष्ठस्थं प्रति चात्र च ॥ ४९५
तवगरश्चेत् असिद्धः स्यात् स्थित एव स मन्यते ।
तकारः स्याद् यदा तत्र शब्दो नान्तो भवेन्न च ॥ ४९६
शब्दो नान्तो यदा न स्यात् "सर्व्वे"ति च न युज्यते ।
न हि तत्र भवेद् दीर्घः मघवान् न पदं भवेत् ॥ ४९७

उत्तरपक्षः

"वहुलं" च पदं सूत्रे मुनिनेह प्रयोजितम् ।
सर्व्वत्र न भवेद् भाति स्यादन्यथा कचित् कचित् ॥ ४९८
संयुक्तस्य डकारस्य नासिद्धं हि विलोपनम् ।
विलोपनं भवेत् सिद्धं दीर्घस्तस्माद् भवेदिह ॥ ४९९
दीर्घो यदा भवेत्तत्र मघवान् हि भवेन् पदम् ।
वहुलग्रहणात् तत्र सर्व्वं सिद्धं च मन्यते ॥ ५००

पूर्व्वपक्षः

तलोपश्च भवेत् सिद्धो बहुलग्रहणादिह ।
इति पक्षे प्रमाणन्तु न किञ्चिदिह दृश्यते ॥ ५०१
मघवन् इति ह्रस्वेन पदमिह वरं कुरु ।
अस्तु वा छान्दसो दीर्घो मघवान् इति छन्दसि ॥ ५०२

उत्तरपक्षः

सिद्ध एव तलोपः स्याद् बहुलग्रहणादिह ।
इति न कल्पनामात्रं प्रमाणमिह च स्थितम् ॥ ५०३
"केशा"दिति स्थितं सूत्रं भाष्यं तस्य स्थितं खलु ।
तद्व्याख्यायां प्रदीपे तु मतं चैतत् समर्थितम् ॥ ५०४
"मघवानमीमहे" च तत्र हि वचनं स्थितम् ।
तद्व्याख्यायां प्रदीपस्य मतमिह भवेद् यथा ॥ ५०५

प्रदीपमतम्

"मघवा बहुलं" चेति मुनिनेह च सूत्रितम् ।
शब्दद्वयं पुनस्तेन भवेत् सिद्धमिति स्थितिः ॥ ५०६
समादेशो यदा "तृ" स्यात् "मघवत्" च तदा भवेत् ।
अन्यथा मघवन् शब्दः स्थित एव हि पूर्व्वतः ॥ ५०७
मघवत् स्याद् यथा तत्र मघवन् स्याद् यथा पुनः ।
शब्दद्वयं यथा सिध्येत् तथा सूत्रं च सूत्रितम् ॥ ५०८
सूत्रस्य च पुनस्तस्य नास्ति किञ्चित् प्रयोजनम् ।
विनापि तत् पुनः सूत्रं शब्दद्वयं प्रसिध्यति ॥ ५०९
"श्वनुक्षन्"—च स्थितं सूत्रं मघवन् स्यान्निपातनात् ।
"मघ"-शब्दात् मतुप् च स्यात् मघवत् स्यात् तथा पुनः ॥ ५१०
मघवत् स्यात् तथा तत्र मघवन् च पुनर्भवेत् ।
विनापि तत् पुनः सूत्रं शब्दद्वयं भवेदिह ॥ ५११

"मघवा बहुलं"चेति यदा ग्राह्यं भवेदिह ।
आदेशो मघवत्-शब्दस्तदा ग्राह्यो भवेत् पुनः ॥ ५१२
प्रक्रियायां तलोपश्च पुनस्तत्र प्रसज्यते ।
सिद्धता च तलोपस्य पुनर्भवेत् प्रयोजनम् ॥ ५१३

तलोपः स्याद् यदा सिद्धो दीर्घस्तदा विधीयते।
मघवान् च पदं दीर्घे तथा खलु प्रसिध्यति ।। ५१४
सिद्धतायां तलोपस्य हेतुरन्विष्यते तदा ।
"बहुलं" च भवेद् हेतुस्तेन चात्र गतिर्भवेत् ॥ ५१५
तलोपः स्याद् यदा सिद्धो दीर्घस्तदा विधीयते ।
मघवान् च पदं दीर्घे तथा खलु प्रसिध्यति ॥ ५१६
न च पृथक् स्थितः पन्थाः न गतिरन्यथा स्थिता ।
इष्टसिद्धौ "बहुलं" तु गतिरेका भवेदिह ॥ ५१७
"बहुलं" तु समादाय सिद्धता दर्शिता तथा ।
कल्पनागौरवं तत्र न तत्र च सतां रुचिः ॥ ५१८
"मघवा बहुलं" चेति नापि सूत्रं यदा भवेत् ।
मघवान् च पदं दीर्घे प्रसिध्यति तदापि च ॥ ५१९
कल्पनालाघवं तत्र पुनरपि च लभ्यते ।
पक्षे चास्मिन् प्रक्रिया स्यात् यथा परे प्रदर्शिता ॥ ५२०

"श्वनुक्षन्" च स्थितं तत्र मघवन् च तथा भवेत् ।
"पर्व्वेति च भवेद् योज्यं दीर्घे स्यात् मघवान् पदम् ॥ ५२१
मतुप् यदा भवेत् तत्र मघवत् च भवेत् तदा ।
"अत्वस्" इति भवेद् योज्यं दीर्घे स्यात् मघवान् पदम् ॥ ५२२

"मघवे"ति यदा न स्यात् शब्दद्वयं तदापि च ।
"मघवे"ति यदा न स्यात् मघवान् स्यात् तदापि च ॥ ५२३
"मघवे"ति च सूत्रस्य नास्ति किञ्चित् प्रयोजनम् ।
"मघवे"ति वरं त्याज्यं त्यक्तुं शक्यं भवेदिदम् ॥ ५२४

इति प्रदीपमतम्

प्रदीपस्य मतं चैतत् तद् ग्राह्यं च भवेदिह ।
सिद्धता च तलोपस्य तत्र पुनः समर्थिता ॥ ५२५
प्रक्रियायां तलोपस्य सिद्धता दर्शिता मया ।
निर्मूलं न भवेच्चैतत् आकरो हि स्थितो मम ॥ ५२६

सिद्ध एव तलोपः स्याद् दीर्घोऽपि च तथा भवेत् ।
मघवान् स्यात् पदं दीर्घे पदमिष्टं तदेव हि ॥ ५२७

मघवान् इति दीर्घे हि पदं सर्वैः प्रदर्शितम् ।
मघवन् इति ह्रस्वे च न क्वापि दृश्यते पदम् ॥ ५२८
मघवन्तौ पदं च स्यात् मघवन्तः पदं भवेत् ।
हे मघवन् पदं च स्यात् प्रथमायां तथा तथा ॥ ५२९
मघवन्तम् भवेत्तत्र मघवन्तौ तथा भवेत् ।
मघवतः भवेत्तत्र द्वितीयायां तथा तथा ॥ ५३०
मघवता पदं च स्यात् मघवद्भ्याम् पदं भवेत् ।
बुधैरूह्यं पदं शेषं नेह पुनः प्रदीयते ॥ ५३१

न यदा तृ समादेशो मघवन् च भवेद् यदा ।
मघवा स्यात् पदं तत्र प्रथमायां हि सौ परे ॥ ५३२

छन्दसीवनिपौ (प)

छन्दसि मबुवर्थे च प्रत्यय ई वनिप् तथा ।
वनिपा मघवन् स्याच्चेत् मध्योदात्तो भवेद् हि सः ॥ ५३३
लौकिके तु पुनस्तत्र विशेषो वर्त्तते खलु ।
लौके यदा प्रयोगः स्यात् अन्तोदात्तो भवेत्तदा ॥ ५३४

मघवानौ पदं च स्यात् मघवानः पदं भवेत् ।
मघवानम् पदं च स्यात् मघवानौ भवेत्तथा ॥ ५३५

मघवन् स्याद् यदा शब्दः प्रत्यय शस् भवेद् यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रवर्त्तने ॥ ५३६

३६२ । श्व-युव-मघोनामतद्धिते । ६।४।१३३

अन्नन्तास्ते यदा तत्र भसंज्ञा च यदा पुनः ।
प्रसारणं भवेत्तेषां तद्धिते न तथा भवेत् ॥ ५३७
प्रसारणं यदा तत्र मघ उन् शस् तथा भवेत् ।
यदा सन्धिर्भवेत्तत्र मघोनः स्यात् पदं तदा ॥ ५३८

अन्नन्तश्चेत् तदेव स्यात् अन्यत्र न तथा भवेत् ।
आदेशो मघवत् चेत् स्यात् न तत्र स्यात् तथा पुनः ॥ ५३९

मघवतः पदं तत्र तदा भवेदिति स्थितिः ।
मघवता पदं तत्र तथैव च भवेत् पुनः ॥ ५४०

मघवत् स्याद् यदा शब्दः प्रत्ययो ङीप् भवेद् यदा ।
मघवती तदा तत्र प्रसाधर्णां न हि स्थितम् ॥ ५४१

मघवन् स्याद् यदा शब्दः परे वेद् अण् च तद्धितः ।
माघवनम् भवेत्तत्र प्रसारणां न हि स्थितम् ॥ ५४२

मघवन् स्याद् यदा शब्दः प्रत्ययः टा परे यदा ।
मघोना स्यात् तदा तत्र भवेत् खलु प्रसारणम् ॥ ५४३
मघवभ्याम् पदं तत्र भ्याम् यदि च परे भवेत् ।
परं पदं बुधैरूह्यं नेह मया प्रदीयते ॥ ५४४

श्वन्

श्वन् इह च स्थितः शब्दः राजवच्च पदं भवेत् ।
श्वा श्वानौ च श्वानस्तत्र श्वानं श्वानौ भवेत्तथा ॥ ५४५
श्वन् यदा च भवेच् शब्दः प्रत्ययः शस् परे यदा ।
प्रसारणे भवेत् "शु अस्" पूर्व्वरूपे भवेत् शुनः ॥ ५४६
शुना भवेत् पदं तत्र श्वभ्याम् भवेत् पुनः पदम् ।
शुने शुनः शुनोः शुनाम् श्वसु भवेत् पदं तथा ॥ ५४७

युवन्

युवन् इह स्थितः शब्दः राजवच्च पदं भवेत् ।
युवा भवेत् युवाणौ च युवानः च भवेत् पदम् ॥ ५४८
युवानम् स्यात् पदं तत्र युवानौ च पदं भवेत् ।
राजवच्च पदं तत्र सुचि पदं प्रदर्शितम् ॥ ५४९

युवन् यदा भवेच् शब्दः प्रत्ययः शस् परे यदा ।
"श्वयुवन्" च भवेद् योज्यं प्रसारणं तथा भवेत् ॥ ५५०
प्रसारणं यदा तत्र "यु उ अन्" च तदा भवेत् ।
ततः "संप्रसारणाच्च" पुनः सूत्रं प्रयुज्यते ॥ ५५१
सूत्रं यदा भवेद् युक्तं पूर्व्वरूपं तदा भवेत् ।
पूर्व्वरूपं यदा तत्र "यु उ न्" तदा भवेत् पुनः ॥ ५५२

"अक"श्चेति पुनः सूत्रं भवेद् योज्यं ततः परम् ।
सवर्णदीर्घता तत्र रूपं यूनः तदा भवेत् ॥ ५५३
यून इति भवेद् रूपं सवर्णदीर्घता यदा ।
उकारश्च परो ह्रस्वः पुनर्दीर्घो तदा भवेत् ॥ ५५४
प्रसारणात् पुनर्जातः स उकार इति स्थितिः ।
"अच"श्चेति स्थितं सूत्रम उकारः स्थानिवत् भवेत् ॥ ५५५
उकारस्य स्थानिवत्वात् प्रसारणं स्थितं भवेत् ।
उकारश्चेत् परे तत्र प्रसारणं भवेन् परे ॥ ५५६
यून इति स्थितः शब्दः पूर्व्वं मया प्रदर्शितः ।
यकारस्य परे तावद् उकारश्च प्रवर्त्तते ॥ ५५७
प्रसारणमुकारः स्यादितः पूर्व्वं प्रदर्शितम् ।
यकारस्य परे तस्मात् प्रसारणं स्थितं खलु ॥ ५५८
यकारश्च यदा पूर्व्वं प्रसारणं यदा परे ।
यकारस्य प्रसारणं पुनः प्राप्तं भवेदिह ॥ ५५९
पूर्व्वस्य च यकारस्य यदा प्राप्तं प्रसारणम् ।
तदा तत्र भवेत् सूत्रं मया परे प्रदर्शितम् ॥ ५६०

**३६३ । न संप्रसारणे संप्रसारणम् । ६।१।६७**

प्रसारणं यदा तत्र परे क्वचित् प्रवर्त्तते ।
पूर्व्वस्य च यणस्तत्र न पुनः स्यात् प्रसारणम् ॥ ५६१

पूर्व्वस्य च यकारस्य न तावत् स्यादिकारता ।
पदं यूनः भवेत् तत्र पदमिष्टं तदेव हि ॥ ५६२

पूर्व्वपक्षः

यून इति पदं तावत् प्रक्रियायां प्रदर्शितम् ।
"यू" तत्र च भवेदंशस्तमाकृष्य विचार्य्यते ॥ ५६३
"यू" यदा च भवेत्तत्र वर्णत्रयं तदा भवेत् ।
यकारः स्याद् उकारः स्याद् उकारः स्याद् यथायथम् ॥ ५६४
इह तावद् उकारश्च द्वितीयो यः प्रवर्त्तते ।
न खलु स यकाराच्च परे भवेदिते स्थितिः ॥ ५६५
उकदरः प्रथमो यः स मध्ये तत्र स्थितः खलु ।
तेन च रचितं तत्र व्यवधानं सुदुस्तरम् ॥ ५६६

द्वितीयो य उकारः स्यात् न यकारात् परे हि सः ।
उकार प्रथमो यः स्यात् स हि बाधा भवेदिह ।। ५६७
उकारो ये द्वितीयः स्यात् स च जातः प्रसारणात् ।
स्थानिवत्त्वात् पुनस्तस्य सम्प्रसारणता स्थिता ।। ५६८
उकारो यो द्वितीयः स्यात् न यकारात् परे हि सः ।
न यकारात् परे तस्मात् स्थितं हि सम्प्रसारणम् ।। ५६९
न यदि स्यात् परे तत्र तादृशं सम्प्रसारणम् ।
कथं तत्र निषेधः स्यात् "ने"ति वा युज्यते कथम् ।। ५७०
"येने"ति यः स्थितो न्यायः न स इह प्रयुज्यते ।
न्यायस्य च पुनस्तस्य न चायं विषयो भवेत् ।। ५७१
"व्यथो लिटि" स्थितं सूत्रं "विव्यथे" च भवेत् पदम् ।
"ने"ति यश्च निषेधः स्यात् चरितार्थः स तत्र च ।। ५७२
यून इति यदा साध्यं "ने"ति न युज्यते तदा ।
न खलु "ने"ति सूत्रस्य प्रदेशो हि भवेदयम् ।। ५७३

उत्तरपक्षः

"व्यथोलिटि" प्रसारः स्यात् विव्यथे च पदं भवेत् ।
"ने"ति यच्च स्थितं सूत्रं चरितार्थं च तत्र तत् ।। ५७४
इति यत् भवता प्रोक्तं न हि तत् सङ्गतं भवेत् ।
"ने"ति यश्च निषेधः स्याद् अन्यत्रापि स युज्यते ।। ५७५
तथाविधः प्रसारः स्यात् विषयस्तस्य केवलम् ।
स एव हि प्रसारः स्यात् लक्ष्यमेकं तदा पुनः ।। ५७७
तथाविधः प्रसारश्चेत् मुनेर्लक्ष्यं भवेदिह ।
"व्यथो यो लिटि" तत्र च सूत्रस्य योजना भवेत् ।। ५७८
ग्रहणाच्च "यकार"स्य प्रसारणं निषिध्यते ।
ग्रहणाच्च "यकार"स्य सर्व्वं सिद्धं भवेदिह ।। ५७९
"ने"ति यच्च स्थितं सूत्रं न तत् प्रयोजनं भवेत् ।
निरर्थकं भवेत् सूत्रं तथा यदि स्थितिर्भवेत् ।। ५८०
न च भवेत् तथा तत्र न च सूत्रं निरर्थकम् ।
निरर्थके प्रयासस्तु मुनेरिह न दृश्यते ।। ५८१

प्रयोजनं स्थितं तावत् अन्यत् स्थितं प्रयोजनम् ।
"श्वन्नि"ति च प्रसारस्य प्रयोजनं निषेधनम् ॥ ५८२
इह व्यवहिते चापि प्रसारणे स्थिते परे ।
"ने"ति तावत् निषेधश्च यथायथं प्रवर्त्तते ॥ ५८३

पूर्व्वपक्षः

युवन् शब्दे यकारश्च वकारश्च प्रवर्त्तते ।
सकृदेव तयोस्तत्र युज्यते च प्रसारणम् ॥ ५८४
सकृद् यदा तयोस्तत्र प्रसारणं विधीयते ।
पौर्व्वापर्य्यं न तत्र स्यात् व्यर्थो भवेत् निषेधनम् ॥ ५८५
अथवा वा भवेत्तावद् अन्यथापि गतिः पुनः ।
प्रसारणं यकारस्य प्रथमं वा प्रवर्त्तताम् ॥ ५८६
प्रसारणं यकारस्य प्रथमं चेद् भवेदिह ।
प्रसारणं परे नास्ति निषेधो हि निरर्थकः ॥ ५८७
पश्चात् तत्र वकारस्य भवतु वा प्रसारणम् ।
प्रसारणं परे तत्र तदापि च न वर्त्तते ॥ ५८८
इहापि च निषेधः स्यात् पूर्व्ववद्धि निरर्थकः ।
निषेधे यत् कृतं सूत्रं तद् युज्यते न कर्हिचित् ॥ ५८९

उत्तरपक्षः

सर्व्वं मुनिर्व्विजानाति सर्व्वं हि गोचरं मुनेः ।
तथापि च पुनः सूत्रं मुनिनेह प्रयोजितम् ॥ ५९०
ज्ञापकं च मुनेः सूत्रं ज्ञापकं तत्र गृह्यते ।
अन्त्यस्यैव यणस्तत्र पूर्व्वं भवेत् प्रसारणम् ॥ ५९१
प्रसारणे कृते तत्र प्रसारणं परे भवेत् ।
पश्चात् "ने"ति भवेद् योज्यं निषेधश्च प्रवर्त्तते ॥ ५९२
अन्तस्यैव यणस्तत्र सर्व्वादौ स्यात् प्रसारणम् ।
ततः पश्चात् प्रसारः स्यात् अन्यस्यापि यणः पुनः ॥ ५९३
एषः क्रमो भवेद् ग्राह्य एष क्रम इह स्थितः ।
इदं ज्ञातं मुनेः सूत्रात् सूत्रं च ज्ञापकं कृतम् ॥ ५९४
यूना भवेत् यूवभ्याम स्यात् यूवभिश्च पदं भवेत् ।
परं पदं वुधेरूह्यं न च मया प्रदीयते ॥ ५९५

अर्वण्

अर्वण यदा भवेच् शब्दः प्रत्ययः सु परे यदा ।
अर्वा च स्यात् पदं तत्र विशेषश्च न वर्त्तते ॥ ५९६
अर्वण् यदा भवेच् शब्दः सम्बुद्धौ सु यदा भवेत् ।
हे अर्वण् स्यात् तदा तत्र विशेषश्च न दृश्यते ॥ ५९७

अर्वण् यदा भवेच् शब्दः प्रत्यय औ परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ ५९८

**३६४ । अर्वणः तृ असौ अनञः । ६।४।१२७**

अर्वण् यदा भवेच्च् शब्दः नञ् यदा न भवेत् पुनः ।
अन्तादेशस्तदा "तृ" स्यात् सु परे चेन् तदा तु न ॥ ५९९

तृ यदा स्यात् समादेशः स्याद् अर्वन्तौ पदं तदा ।
उगित् तावत् तु च तत्र तस्माद्ध भवेद् नुमागमः ॥ ६००
अर्वन्तः स्यात् पदं तत्र जश् यदि च परे भवेत् ।
अर्वन्तं स्यात् अर्वन्तौ स्यात् अर्वन्तः स्यात् तथा पुनः ॥ ६०१
अर्वता स्यात् पदं तत्र अर्वभ्याम् च पदं भवेत् ।
परं पदं वुधेरूह्यं न च मया प्रदीयते ॥ ६०२

नञ् यदा च भवेन् तत्र यज्ववच्च पदं भवेत् ।
अल्लोपो न भवेत्तत्र शम् भवेच्च परे यदा ॥ ६०३

पथिन्

पथिन् यदा भवेच् शब्दः प्रत्ययः सु परे यदा ।
पदं यदा भवेन् साध्यं सूत्रं परं प्रयुज्यते ॥ ६०४

**३६५ । पथिमथ्यृभुक्षामात् । ७।१।८५**

पथिन् मथिन यदा शब्दः ऋभुक्षिन् च पुन र्यदा ।
आकारः स्यादन्तादेशः सु यदि च परे भवेत् ॥ ६०५

पूर्व्वपक्षः

आकारः स्यात् नकारस्य नकारश्चानुनासिकः ।
आन्तरतम्यतावशात् भवेद् "आ" चानुनासिकः ॥ ६०६

उत्तरपक्षः

"आत्" यदा च भवेत्तत्र आ आत् इति च छिद्यते ।
शुद्धायाश्च विधिस्तत्र तस्मात् न चानुनासिकः ॥ ६०७

नकारस्य यदा तत्र स्याद् आकारस्तथा पुनः ।
पथि आ स् च तदा तत्र सूत्रं परं ततो भवेत् ॥ ६०८

**३६६ । इतोऽत् सर्व्वनामस्थाने । ७।१।८६**

सर्व्वनामस्थानं यदि परे तत्र प्रवर्त्तते ।
आकारः स्याद् इकारस्य पथ्यादेरिति च स्थितिः ॥ ६०९

आकारः स्याद् यदा तत्र पथ आ स् च तदा भवेत् ।
ततः सूत्रं भवेद् योज्यं यथा परे प्रदर्शितम् ॥ ६१०

**३६७ । थो न्थः । ७।१।८७**

सर्व्वनामस्थानं यदि परे तत्र प्रवर्त्तते ।
पथिन् यदा मथिन् यदा थोन्थो भवेत् तदा पुनः ॥ ६११
थकारस्य यदा तत्र "न्थ" पुनश्च प्रयुज्यते ।
पन्थाः भवेत् पदं तत्र विशेषो न परः स्थितः ॥ ६१२
पन्थानौ स्यात् पदं तत्र पन्थानः च पदं भवेत् ।
पन्थानम् स्यात् पदं तत्र पन्थानौ च भवेत् पदम् ॥ ६१३

यदा पथिन् भवेच् शब्दः प्रत्ययः शस् परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ ६१४

**३६८ । भस्य टेर्लोपः । ७।१।८८**

शसादिके भसंज्ञा चेत् परे तत्र प्रवर्त्तते ।
पथ्यादेश्च टिभागस्य विलोपः स्यादिति स्थितिः ॥ ६१५

टिभागस्य यदा लोपः पथ् शस् स्याच्च तदा पुनः ।
सन्धिर्यदा भवेत्तत्र पथः स्याच्च पदं तदा ॥ ६१६

पथा भवेत् पदं तत्र पथिभ्याम् च पदं भवेत् ।
परं पदं बुधरूह्यं नेह पुनः प्रदीयते ॥ ६१७

एवं मथिन् भवेदत्र विशेषश्च न विद्यते ।
ऋभुक्षिण् स्यात् पुनश्चैवं विशेषश्च न दृश्यते ॥ ६१८

सुपथी (स्त्रियाम्)

पथिन् यदा भवेच् शब्दः प्रत्ययो ङीप् भवेद् यदा ।
तदापि च भवेद् युक्तं सूत्रमिदमिति स्थितिः ॥ ६१९
पथिन् यदा यदा ङीप् च सूत्रमिदं प्रयुज्यते ।
इन्भागस्य भवेल्लोपः शब्दः "पथी" तदा भवेत् ॥ ६२०
यदा पथी भवेच् शब्दः प्रत्ययः सु भवेद् यदा ।
तदा पथी पदं च स्याद् विशेषश्च न वर्त्तते ॥ ६२१

सुः शोभनः पन्थाः यस्या इति चेद् विग्रहो भवेत् ।
सुपथी स्याद् तदा शब्दः बहुव्रीहिर्भवेदिह ॥ ६२२
सुपथी स्याद् यदा शब्दः प्रत्ययः सु भवेद् यदा ।
सुपथी स्यात् तदा शब्दः विशेषस्तु न वर्त्तते ॥ ६२३

सुपथिन् ( नपुंसके )

सु शोभनः पन्था अस्य इति चेद् विग्रहो भवेत् ।
सुपथिन् स्याद् तदा शब्दः बहुव्रीहिर्भवेदिह ६२४

सुपथिन् स्याद् यदा क्लीवे प्रत्ययः सु परे यदा ।
"स्वमो"रिति भवेद् योज्यं प्रत्ययः सु विलुप्यति ॥ ६२५
प्रत्ययः सु यदा लुप्तः सुपथिन् च तदा स्थितम् ।
"नलोप"श्च स्थितं सूत्रं तत् तदा च प्रयुज्यते ॥ ६२६
"नलोप"श्च यदा युक्तं नकारोपि विलुप्यति ।
नकारस्य यदा लोपः सुपथि स्यात् पदं तदा ॥ ६२७

पूर्व्वपक्षः

"स्वमो"रिति च सूत्रेण प्रत्ययः सु विलुप्यति ।
प्रत्ययस्य विलोपेऽपि प्रत्ययलक्षणं स्थितम् ॥ ६२८
सुप्रत्यये विलुप्तेऽपि प्रत्ययः सु विराजते ।
प्रत्ययलक्षणं कार्य्यं तस्मादिह प्रसज्यते ॥ ६२९
सु यदा स्यात् परे तत्र "पथि"— सूत्रं प्रयुज्यते ।
"पथि"—यदा भवेद् युक्तम् आत्वं तदा प्रवर्त्तते ॥ ६३०

उत्तरपक्षः

लुक्शब्देन यदा भवेत् प्रत्ययस्य विलोपनम् ।
प्रत्ययलक्षणं कार्य्यं न तदा च प्रवर्त्तते ॥ ६३१
"स्वमोर्लुक्" च भवेत् सूत्रं लुक्शब्दश्च प्रयोजितः ।
प्रत्ययलक्षणं कार्य्यं न तस्माच्च भवेदिह ॥ ६३२
"न लुमता" स्थितं सूत्रं प्रमाणं तदिह स्थितम् ।
लुक्शब्देन विलोपः स्यात् आत्वं तस्मात् न युज्यते ॥ ६३३

सुपथिन् स्याद् यदा क्लीवे प्रत्ययः सु परे यदा ।
पदं यदा भवेत् साध्यं वार्त्तिकं तु परं तदा ॥ ६३४

सम्बुद्धौ नपुंसकानां नलोपो वा वाच्यः (वा)

क्लीवे यदा भवेच्च शब्दः सम्बुद्धिश्च परे यदा ।
विभाषया नकारस्य भवेत्तदा विलोपनम् ॥ ६३५
सुपथिन् च स्थितं क्लीवे सम्बुद्धौ सु परे भवेत् ।
नकारस्य विलोपः स्यात् हे सुपथि भवेत् तदा ॥ ६३६
नकारस्य यदा तत्र न भवेच्च विलोपनम् ।
हे सुपथिन् तदा तत्र भवेत् पदमिति स्थितिः ॥ ६३७

पूर्व्वपक्षः

नलोपः स्याद् यदा तत्र हे सुपथि यदा भवेत् ।
"ह्रस्वस्य" च भवेद् योज्यं गुणस्तत्र प्रसज्यते ॥ ६३८

उत्तरपक्षः

"नलोप"श्च स्थितं सूत्रं तदिह च प्रयुज्यते ।
नलोपः स्यादसिद्धश्च सुब्विधिर्हि भवेदयम् ॥ ६३९
असिद्धः स्यात् नलोपश्च नकारश्च स्थितस्ततः ।
"ह्रस्वे"ति न भवेत्तस्मात् गुणो न हि प्रवर्त्तते ॥ ६४०

क्लीवे

सुपथिन् स्याद् यदा क्लीवे प्रत्यय औ परे यदा ।
शीभावः स्यात् तदा तत्र भसंज्ञा च प्रयुज्यते ॥ ६४१
पश्चाद् "भस्य"—भवेद् योज्यम् इन् तदा च विलुप्यते ।
ईकारश्च भवेद् युक्तः सुपथी स्यात् तदा पदम् ॥ ६४२

सुपथिन् स्याद् यदा क्लीवे प्रत्ययो जश् परे यदा ।
"जश्शसोः शि" भवेद् योज्यं शिभावः स्यात् तथा पुनः ॥ ६४३
"शि सर्व्वनामस्थानं" स्यात् सा संज्ञा च भवेदिह ।
"इत"श्चेति भवेद् योज्यं "थो न्थः" पश्चाच्च युज्यं ॥ ६४४
नान्तः पुनः भवेच्च् शब्दः दीर्घस्तस्मात् भवेदिह ।
दीर्घो यदा भवेत्तत्र सुपन्थानि भवेन् पदम् ॥ ६४५

पञ्चन्

पञ्चन् यदा भवेच्च् शब्दः प्रत्ययः सु परे यदा ।
पदं यदा भवेन् साध्यं सूत्रं परं प्रयोजनम् ॥ ६४६

३६९ । ष्णान्ता षट् । १।१।२४

षान्ता यदा भवेन् संख्या नान्ता संख्या भवेद् यदा ।
षट् संज्ञा च तदा तासां संख्यानां स्यादिति स्थितिः ॥ ६४७

पञ्चन् यदा भवेच्च् शब्दः नान्ता संख्या भवेत्तदा ।
षट् संज्ञा स्यात् ततस्तत्र संज्ञाकार्य्यं ततो भवेत् ॥ ६४८
"षड्भ्योलुक्" च भवेद् योज्यं संज्ञाकार्य्यं प्रवर्त्तते ।
जश्शसोलुक् भवेत् तत्र रूपं पञ्चन् तदा भवेत् ॥ ६४९
पश्चात् तत्र नकारस्य लोपोऽपि च प्रसज्यते ।
पञ्च भवेत् तदा तत्र पदमिष्टं तदेव हि ॥ ६५०

न च यदा भवेन् संख्या संज्ञा तदा न युज्यते ।
विप्रुष् पामन् न संख्या स्यात् संज्ञा तस्माद् भवेन्न च ॥ ६५१
संज्ञा यदा न तत्र स्यात् न जशोलुग् भवेदपि ।
विप्रुषः स्यात् जशा तत्र पामानः स्यात् जशा पुनः ॥ ६५२

पूर्व्वपक्षः

शत यदा भवेच्च् शब्दः प्रत्ययो जश् परे यदा ।
"जश्शसो शि" भवेद् योज्यं शिभावः स्यात् तथा पुनः ॥ ६५३
"नपुंसक"—स्थितं सूत्रं तदिह च प्रयुज्यते ।
सूत्रं यदा प्रयुक्तं स्यात् नुमागमो भवेत् तदा ॥ ६५४
नुमागमो यदा तत्र "शतन् शि" स्यात् तदा पुनः ।
शतन् इह भवेत् संख्या नान्ता संख्या पुनर्भवेत् ॥ ६५५

नान्ता यदा भवेत् संज्ञा षट्संज्ञा स्यात् तदा पुनः ।
इह नान्ता स्थिता संख्या षट्संख्या च प्रयुज्यते ॥ ६५६
"षड्भ्यो लुक् यत् स्थितं सूत्रं तत् प्रयोज्यं भवेदिह ।
जशो लुक् च तथा तत्र प्राप्तो भवेदिति स्थितिः ॥ ६५७

उत्तरपक्षः

सन्निपातपरिभाषा स्थिता या सा प्रयुज्यते ।
जशोलुक् न तथा तत्र प्राप्तो भवेदिति स्थितिः ॥ ६५८
सर्व्वनामस्थानं तत्र परे तावत् प्रवर्त्तते ।
स्थानं तदुपजीव्यैव नुमो जन्म भवेदिह ॥ ६५९
तस्माद् जातः पुनर्नुम् स न तत्स्थानं विनश्यति ।
सर्व्वनामस्थानभूतं जशं हन्ति न नुम् च सः ॥ ६६०
यस्माद् यस्य भवेद् जन्म न तं हन्ति कदापि सः ।
जश एव नुमो जन्म न हन्ति नुम् जशं च तम् ॥ ६६१
तस्माद् जशो न लुक् तत्र जश् तत्र च विराजते ।
शिभावश्च भवेत्तत्र शतानि च पदं भवेत् ॥ ६६२
पञ्चभिः स्यात् पदं तत्र भिस् यदि च परे भवेत् ।
पञ्चभ्यः स्यात् पदं तत्र यदा भ्यास् च भवेत् परे ॥ ६६३
पञ्चन् यदा भवेच् शब्दः प्रत्यय आम् परे यदा ।
"षट्चतुर्भ्यः" भवेद् योज्यं नुमागमो भवेत्तथा ॥ ६६४
नुमागमो यदा तत्र "पञ्चन् नाम्" स्यात् तदा पुनः ।
नकारस्य भवेत्तत्र पुनरपि विलोपनम् ॥ ६६५
लोपो न स्यात् नकारस्य स चासिद्धो भवेत् पुनः ।
नकारश्च तथा तत्र स्थित एव हि मन्यते ॥ ६६६
नकारः स्याद् यदा तत्र न "नाम्" तदा परे भवेत् ।
नाम् यदा न परे तत्र "नामि" दीर्घो न लभ्यते ॥ ६६७
एवं यदा पुनर्दीर्घं प्रक्रियायां न लभ्यते ।
विधानार्थं च दीर्घस्य सूत्रं परं प्रयुज्यते ॥ ६६८

**३७० । नोपधायाः । ६।४।७**

नान्तो यदा भवेच् शब्दः भवेद् नाम् च परे यदा ।
उपधायास्तदा तत्र दीर्घः खलु प्रयुज्यते ॥ ६६९

"पञ्चन् नाम" च स्थितं तत्र पूर्व्वमेव प्रदर्शितम् ।
अनेन च भवेद् दीर्घः "पञ्चान् नाम्" च तदा भवेत् ।। ६७०
"पञ्चान् नाम्" स्याव यदा तत्र नकारस्य विलोपनम् ।
नकारश्च यदा लुप्तः पञ्चानाम् स्यात् तदा पदम् ॥ ६७१
आदौ तत्र भवेद् दीर्घः पश्चाद् भवेद् विलोपनम् ।
एष क्रमो भवेद् ग्राह्यः स्यावसिद्धिस्तदन्यथा ।। ६७२
यदा पञ्चन् यदा सुप् स्यात् पञ्चसु स्यात् पदं तदा ।
विशेषो न स्थितः कश्चिन् विशेषश्च न दृश्यते ।। ६७३

परमपञ्चन्

परमाश्च ते पञ्च च इति स्याद् विग्रहो यदा ।
शब्दः स्यात् परमपञ्चन् समासे तु तदा पुनः ।। ६७४
यदा स्यात् परमपञ्चन् यदा सु प्रत्ययो भवेत् ।
पदं स्यात् परमपञ्च तदन्तेऽपि भवेद् विधिः ।। ६७५

प्रियपञ्चन् (पुंसि)

प्रियाः पञ्च यस्येति च विग्रहस्तु यदा भवेत् ।
प्रियपञ्चन् भवेच्च शब्दः बहुव्रीहि भवेदिह ।। ६७६
प्रियपञ्चन् यदा शब्दः प्रत्ययः सु परे यदा ।
प्रियपञ्चा भवेत् तत्र तदा पदमिति स्थितिः ।। ६७७
गौणतायामिह पञ्चन् समासे तु प्रवर्त्तते ।
तस्मात् लुक् न भवेदत्र तस्मात् नुट् न प्रयुज्यते ।। ६७८
"षड्भ्यो लुक" च स्थितं सूत्रं "षट्चतुर्भ्यः" स्थितं पुनः ।
बहुत्वात् मुख्यता बोध्या षड़र्थ-चतुरर्थयोः ।। ६७९
प्रकृते तु समासे स्याद् अर्थस्य गौणता पुनः ।
सूत्रद्वयं न तस्माच्च पुनरिह प्रयुज्यते ।। ६८०
भवेच्च प्रियपञ्चानौ प्रत्यय औ परे यदा ।
भवेच्च प्रियपञ्चानो प्रत्ययः जस् परे यदा ।। ६८१
प्रियपञ्चाम पदं च स्यात् आमिह चेत् परे भवेत् ।
राजवच्च पदं सुटि पदमूह्यं परं बुधैः ॥ ६८२
एवं सप्तन् भवेत्तत्र एवं नवन् भवेत् पुनः ।
एवं दशन् भवेत्तत्र पदमूह्यं यथायथन् ॥ ६८३

अष्टन्

अष्टन् यदा भवेच् शब्दः प्रत्ययो जश् परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ ६८४

३७१ । **अष्टन आ विभक्तौ ।** ७।२।८४

अष्टन् यदा भवेच् शब्दः विभक्तिश्च परे यदा ।
अष्टन्शब्दे नकारस्य स्यादाकारस्तदा खलु ॥ ६८५
आकारः स्यान्नकारस्य "अष्टा जश्" स्यात् तदा पुनः ।
एवं यदा स्थितं तत्र सूत्रं परं प्रवर्त्तते ॥ ६८६

३७२ । **अष्टाभ्य औश् ।** १।१।२१

प्रक्रियायां प्रवृत्तायाम् "अष्टा" यदा भवेदिह ।
जशः स्थाने शसः स्थाने तदा स्याद् औश् इति स्थितिः ॥ ६८७

अष्टा यदा यदा जश् च "अष्टा औश्" स्यात् तथा पुनः ।
यदा तत्र भवेत् सन्धिः पदम् अष्टौ तदा भवेत् ॥ ६८८

पूर्व्वपक्षः

"अष्टाभ्य"श्च पदं सूत्रे मुनिनेह प्रयोजितम् ।
आकारेण विधानस्य नास्ति किञ्चित् प्रयोजनम् ॥ ६८९
"अष्टभ्य"श्च पदं तत्र तत् प्रयोज्यं भवेद् वरम् ।
आकारेण विधानं चेत् लाघवं तु तदा भवेत् ॥ ६९०
अष्टाभ्यः स्यात् पदं तावत् अष्टभ्यश्च पदं भवेत् ।
पश्चम्यान्तु समं तत्र पदद्वयं प्रयुज्यते ॥ ६९१
आकारेण विधानं चेत् "अष्टाभ्य"श्चेत् प्रयुज्यते ।
गौरवं स्यात् तदा तत्र दोषाय तत् भवेत् पुनः ॥ ६९२
अकारेण विधानं चेत् "अष्टभ्य"श्चेत् प्रयुज्यते ।
लाघवं स्यात् तदा तत्र गुणाय तत् भवेत् पुनः ॥ ६९३
लाघवं स्यात् कृते यस्मिन् कार्य्यं भवेत् तदेव च ।
यः पक्षो लाघवाय स्यात् स पक्षो हि मतो मतः ॥ ६९४
अकारेण स्यादष्टाभ्यः प्रयोज्यं तत् पदं वरम् ।
तेन तत्र लाघवं स्यात् लाघवमिष्यते खलु ॥ ६९५
आकारेण स्याद् अष्टाभ्यः तदिह च प्रयोजितम् ।
गौरवं हि तथा तत्र दोषाय तत् भवेत् मुनेः ॥ ६९६

उत्तरपक्षः

आकारेण स्याद् अष्टाभ्यः पदं च तत् प्रयोजितम् ।
आकारेण त्रिधातुं च नूनं स्थितं प्रयोजनम् ॥ ६९७
आकारः स्याद् यदा तत्र तदेवौश च प्रवर्त्तते ।
आकारेण पदं दत्वा ज्ञापयति तथा मुनिः ॥ ६९८
अस्तु वा गौरवं तत्र न दोषाय भवेच्च तत् ।
प्रामाणिकं पदं स्यात् तत् प्रयोजितं प्रयोजने ॥ ६९९

पूर्व्वपक्षः

"अष्टन आ" स्थितं सूत्रम् नित्यमात्वं प्रवर्त्तते ।
"अष्टाभ्य औश्" पुनः सूत्रम् औश् भवेद् आश् भवेद यदि ॥ ७००
नित्यमात्वं स्थितं तत्र नित्यमात्वं प्रवर्त्तते ।
आत् यदा स्यात् तदा स्याद् औश् इतीह वा कथं पुनः ॥ ७०१

उत्तरपक्षः

आत् यदा स्यात तदा स्याद् औश् इतीह च प्रयोजनम् ।
विकल्पः स्यात् यथा तत्र तथा मुनिर्व्विचेष्टते ॥ ७०२
यदा स्याद आत् तदा स्याद् औम् इति चेत् वचनं भवेत् ।
न चेद् आत् स्यात् न भवेद औश् इत्यपि लभ्यते तदा ॥ ७०३
न चेद् आत् स्यात् न भवेद् औश् इति यदा भवेदिह ।
तदा तत्र स्थितं क्षेत्रं यत्र भवेत् तथा तथा ॥ ७०४
पदान्तरं तथा तत्र पुनरेवं प्रसिध्यति ।
विकल्पश्च भवेत् प्रोक्तं वैकल्पिकं भवेत् पदम् ॥ ७०५
आत् यदा न भवेत्तत्र न भवेद् औश् यदा पुनः ।
अष्ट भवेत् तदा तत्र नलापे च पदं भवेत् ॥ ७०६

सूत्रं स्याद"ष्टनो दीर्घात्" स्वरे तत्र प्रवर्त्तते ।
तत् सूत्रं च भवेत ग्राह्यं विकल्पे ज्ञापकं च तत् ॥ ७०७
दीर्घ इति पुनः शब्दः मुनिनेह प्रयोजितः ।
अस्ति पदं विना दीर्घम इति च ज्ञायते पुनः ॥ ७०८
जश् इह चेद् भवेदष्टौ पूर्व्वं मया प्रदर्शितम् ।
शसि पदं भवेदष्टौ विशेषश्च न वर्त्तते ॥ ७०९

अष्टाभिः स्यात् पदं पश्चात् अष्टाभ्यश्च पदं भवेत् ।
अष्टानाम् स्यात् पदं पश्चात् अष्टासु च भवेत् पदम् ॥ ७१०

"अष्टन आ" स्थितं सूत्रम् आकारो यो भवेदिह ।
विकल्पेन स तावत् स्यात् पूर्व्वमिह प्रदर्शितम् ॥ ७११
अष्टन् यदा भवेत् शब्दः आकारो न भवेद् यदा ।
तदा तत्र भवेद रूपं यथा परे प्रदर्शितम् ॥ ७१२
अष्ट भवेत् भवेदष्ट अष्टभिः स्यात् पदं पुनः ।
अष्टभ्यः स्यात् अष्टानाम् स्यात् अष्टसु स्यात् तथा पदम् ॥ ७१३

प्रियाष्टन्

प्रियाष्टन् स्याद् यदा शब्दः पदं साध्यं भवेद् यदा ।
"अष्टन आ" भवेद् योज्यं तदन्तेपि भवेदिदम् ॥ ७१४
"अष्टन आ" भवेद् योज्यं सर्व्वासु च विभक्तिषु ।
न केवलं हलादौ स्यात् सर्व्वत्र तत् प्रयुज्यते ॥ ७१५
प्रियाष्टन् स्याद् यदा शब्दः अष्टन आ यदा भवेत् ।
प्रियाष्टा स्यात् तदा तत्र स इह प्रकृतिर्भवेत् ॥ ७१६
प्रियाष्टा स्यात् यदा तत्र प्रत्यय सु भवेद् यदा ।
प्रियाष्टाः स्यात् विसर्गे च पदमिष्टं तदेव हि ॥ ७१७
प्रियाष्टा स्यात् यदा तत्र प्रत्यय औ परे यदा ।
प्रियाष्टौ स्यात् पदं तत्र पदमिष्टं तदेव हि ॥ ७१८
प्रियाष्टा स्याद् यदा शब्द प्रत्ययो जश् भवेद् यदा ।
"अष्टाभ्य औश्" भवेद् योज्यं प्रियाष्टौ स्यात् पदं तदा ॥ ७१९
प्रियाष्टा स्याद् यदा शब्दः अम् प्रत्ययो भवेद् यदा ।
प्रियाष्टाम् स्यात् पदं तत्र पदमिष्टं तदेव हि ॥ ७२०
प्रियाष्टा स्यात् यदा शब्दः प्रत्यय औ भवेद् यदा ।
प्रियाष्टा स्यात् पदं तत्र पदमिष्टं तदेव हि ॥ ७२१
प्रियाष्टा स्यात् यदा शब्दः प्रत्ययः शस् परे यदा ।
प्रियाष्टौ स्यात् पदं तत्र अष्टाभ्यः औश् प्रयुज्यते ॥ ७२२
प्रियाष्टा स्याद् यदा तत्र प्रत्ययः टा यदा भवेत् ।
प्रियाष्टा स्यात् पदं तत्र पदमिष्टं तदेव हि ॥ ७२३

प्रियाष्टा स्यात् यदा शब्दः प्रत्ययो भ्याम् यदा भवेत् ।
प्रियाष्टाभ्याम् पदं च स्यात् पदमिष्टं तदेव हि ॥ ७२४
एवमेव पदं हि स्यात् परासु च विभक्तिषु ।
सर्व्वत्रैव भवेदेवम् ऊहनीयं यथायथम् ॥ ७२५
"अष्टन आ" यदा तत्र स्यादाकारो विभाषया ।
विभाषा स्यात् यथा तत्र तथा पूर्व्वं प्रदर्शितम् ॥ ७२६
आकारो न यदा तत्र प्रियाष्टन् च तदा स्थितम् ।
पदमिह भवेत् तावत् यथा परे प्रदर्शितम् ॥ ७२७
प्रियाष्टन् स्यात् यदा तत्र प्रत्ययः सु परे यदा ।
प्रियाष्टा स्यात् पदं तत्र न विसर्गः प्रयुज्यते ॥ ७२८
प्रियाष्टा स्यात् यदा तत्र प्रत्यय औ भवेद् यदा ।
प्रियाष्टानौ तदा च स्यात् औकारान्तं भवेत् पदम् ॥ ७२९
प्रियाष्टन् स्यात् यदा तत्र प्रत्ययो जश् परे यदा ।
प्रियाष्टानः पदं च स्यात् पदमिष्टं तदेव हि ॥ ७३०
प्रियाष्टन् स्याद् यदा शब्दः अम् प्रत्ययः परे यदा ।
प्रियाष्टानम् पदं च स्यात् पदमिष्टं तदेव हि ॥ ७३१
प्रियाष्टन् स्यात् यदा शब्दः प्रत्यय औ परे यदा ।
प्रियाष्टानौ पदं च स्यात् पदमिष्टं तदेव हिं ॥ ७३२
प्रियाष्टन् स्याद् यदा शब्द प्रत्ययः शस् परे यदा ।
प्रियाष्ट्नः स्यात् पदं तत्र पदमिष्टं तदेव हि ॥ ७३३
प्रियाष्टन् स्यात् यदा शब्दः प्रत्ययष्टा परे यदा ।
प्रियाष्ट्ना स्यात् पदं तत्र पदमिष्टं तदेव हिं ॥ ७३४
प्रियाष्टन् स्याद् यदा शब्दः प्रत्ययो भ्याम् परे यदा ।
प्रियाष्टभ्याम् पदं च स्यात् पदमिष्टं तदेव हि ॥ ७३५
एवमेव पदं हि स्यात् परासु च विभक्तिषु ।
यथायथम् भवेद् योज्यम् ऊहनीयं यथायथम् ॥ ७३६

"आ" यदा स्यात् प्रियाष्टा स्यात् हाहावच्च पदं भवेत् ।
जशि शसि विशेषः स्याद् अष्टाभ्य औश् प्रयुज्यते ॥ ७३७
आ यदा न भवेद् तत्र प्रियाष्टन् च तदा स्थितम् ।
राजवत् स्यात् पदं तत्र सर्व्वासु हि विभक्तिषु ॥ ७३८

एष हि सरलः पन्था यथा मया प्रदर्शितः ।
एष पन्था भवेत् श्रेयः समुपस्थापितस्ततः ॥ ७३९
कुत्र किं वा भवेद् रूपं न तत्र निश्चयः स्थितः ।
प्राचीनानां मते भेदः प्रायश इह दृश्यते ॥ ७४०
महाभाष्यं मया दृष्टं दृष्टा च काशिका पुनः ।
सिद्धान्तकौमुदी दृष्टा दृष्टा सा च विशेषतः ॥ ७४१
दिनत्रयं गतं मे च विषयस्य विचिन्तने ।
परे मया पदं दत्तं यथा पूर्व्वं प्रदर्शितम् ॥ ७४२
काशिकाया मतं तावदिह मया समादृतम् ।
इह मया पदं दत्तं तस्मिनमनुसृत्य च ॥ ७४३

इति नान्ताः

## अथ धकारान्तप्रकरणम्

### बुध्

बुध् यदा च भवेद् धातुः प्रत्ययः क्विन् भवेद् यदा ।
बुध् तदा च भवेच्छब्दः स इह प्रकृतिर्भवेत् ॥ ७४४

बुध् यदा च स्थितः शब्दः प्रत्ययः सु भवेद् यदा ।
पदं यदा भवेत् साध्यं प्रक्रिया च भवेत्तदा ॥ ७४५
यदा "बुध्" स्यात् यदा "सु" स्यात् रूपं "बुध् सु" तदा भवेत् ।
"हल् ङ्याब्भ्य"श्च भवेद् योज्यं प्रत्ययः "सु" विलुप्यति ॥ ७४६
प्रत्ययः सु यदा लुप्तः रूपं "बुध्" च तदा स्थितम् ।
"एकाच"श्च स्थितं सूत्रं परं तत्र प्रयुज्यते ॥ ७४७
"एकाच"श्च यदा युक्तं भष्भावश्च भवेत्तदा ।
धकारस्य भकारः स्यात् "भुध्" रूपं च तदा भवेत् ॥ ७४८
"झलां जश्" च स्थितं सूत्रं पश्चात् तत्र प्रयुज्यते ।
धकारस्य दकारः स्यात् रूपं भुद् च भवेत्तदा ॥ ७४९
"वावसाने" स्थितं सूत्रं तदपि च प्रयुज्यते ।
दकारस्य तकारोवा तदा च स्यात् भवेच्च भुत ॥ ७५०

"भुद्" भवेच्च पदं तत्र पदं "भुत्" च तथा भवेत्।
सु यदा स्यात् परे तत्र पदद्वयं भवेत् तथा ॥ ७५१

बुधो बुधः भवेत्तत्र बुधा भुद्भ्याम् तथा भवेत्।
भुत्सु भवेत् पदं तत्र यत् स्थितं तत् प्रदर्शितम् ॥ ७५२

इति धान्ताः

## अथ जकारान्तप्रकरणम्

### युज्

युजिर् यदा भवेद् धातुः प्रत्ययः क्विन् भवेद् यदा।
युज भवेच्च तदा शब्दः प्रत्ययः क्विन् परेण च ॥ ७५३

**३७३। ऋत्विक्-दधृक्-स्रक्-दिक्-उष्णिक् अञ्चु-युजि-कुञ्चां च। ३।२।५९**

तस्मात् तस्मात् भवेत् क्विन् च शब्दो भवेत् तथा तथा।
निपातनात् भवेत् सिद्धं न सिद्धं लक्षणेन यत् ॥ ७५४

युजिर् यदा भवेद् धातुः उपपदं यदा च न।
तदा क्विन् प्रत्ययस्तत्र कनावितौ मतौ पुन ॥ ७५५
क्विन् भवेत् प्रत्ययस्तत्र कृत्‌प्रत्ययः भवेच्च सः।
कृत्संज्ञा स्यात् यथा तत्र यथा परे प्रदर्शितम् ॥ ७५६

**३७४। कृदतिङ्। ३।१।९३**

अधिकारो "धातो"रिति पुनरिह प्रवर्त्तते।
तिङ्भिन्नो यो भवेत्तत्र स कृत्संज्ञः पुनर्भवेत् ॥ ७५७

कनावितौ यदा तत्र "वि" तत्र च तदा स्थितः।
वेरपि च भवेल्लोपः लोपे सूत्रं परं यथा ॥ ७५८

**३७५। वेरपृक्तस्य। ६।१।६७**

अपृक्तश्चेत् वकारः स्यात् तस्य लोपो विधीयते।
लोपो यदा वकारस्य युज् तदात्र स्थितो भवेत् ॥ ७५९
"कृत्तद्धित"—स्थितं सूत्रं तत् तदा च प्रयुज्यते।
युज् प्रातिपदिकं स्याच्च स्वादिकं च परे भवेत् ॥ ७६०

युज् यदा च भवेत् शब्दः प्रत्ययः सु भवेद् यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ ७६१

३७६ । युजेरसमासे । ७।१।७१

युज् यदा च भवेत् शब्दः समासो न भवेद् यदा ।
सर्व्वनामस्थानम् स्याच्चेत् नुमागमो तदा भवेत् ॥ ७६२

नुम् यदा च भवेत्तत्र यु न् ज् सु स्याच्च तदा पुनः ।
हल्ङ्याङ्भ्यश्च भवेद् योज्यं प्रत्ययः सु विलुप्यति ॥ ७६३
"संयोगेति" स्थितं सूत्रं तदा च तत् प्रयुज्यते ।
संयोगान्तो विलुप्तः स्यात् जकारश्च विलुप्यति ॥ ७६४
जकारस्य यदा लोपः रूपं युन् च तदा भवेत् ।
ततः परं भवेत् सूत्रं प्रदर्शितं यथा परे ॥ ७६५

३७७ । क्विन्प्रत्ययस्य कुः । ८।२।६२

क्विन्प्रत्ययो भवेद् यस्मात् स शब्दश्चेत् भवेदिह ।
अन्तादेशः कवर्गः स्यात् पदान्ते च विधिर्भवेत् ॥ ७६६

नकारस्य तथा तत्र ङकारः स्यादिति स्थितिः ।
युङ् तदा च भवेत्तत्र पदमिष्टं तदेव हि ॥ ७६७
युज् यदा च भवेच् शब्दः प्रत्यय औ भवेद् यदा ।
युञ्जौ भवेत् पदं तत्र पदमिष्टं तदेव हि ॥ ७६८
"न"श्चेति च स्थितं सूत्रं तदिह च प्रयुज्यते ।
नुमो भवेदनुस्वारो भवेत् परसवर्णता ॥ ७६९
असिद्धत्वात् पुनस्तस्य "चोः कु" रिति न युज्यते ।
कुत्वं तस्मात् न प्राप्नोति युञ्जौ चेति पदं भवेत् ॥ ७७०
युज् यदा च यदा जश् च युञ्जः भवेत् पदं तदा ।
युञ्जम् युञ्जौ युञ्जः स्यात् च द्वितीयायां पदं पुनः ॥ ७७१
युजा युग्भ्याम् पदं भवेत् युग्भिः भवेत् पदं तथा ।
युञ्जे भवेत् पदं तत्र विशेषश्च न वर्त्तते ॥ ७७२

सूत्रं "युजेरसमासे" पूर्व्वमिह प्रदर्शितम् ।
समासश्चेत् भवेत् तत्र न तावत् नुम् प्रयुज्यते ॥ ७७३

सुयुज्

"सुयुज्" इह समासे स्यात् प्रत्ययः "सु" परे भवेत् ।
न तावन्नुम् भवेदत्र "सुयुज सु" च तदा स्थितम् ॥ ७७४
"सुयुज् सु स्याद् यदा तत्र "हल्ङ्याब्भ्यः" सु विलुप्यति ।
सुयुज् तदा स्थितं तत्र ततः सूत्रं परं भवेत् ॥ ७७५

३७८ । चोः कुः । ८।२।३०

झलि परे पदान्ते च चवर्गस्य कवर्गता ।
एवं तत्र चवर्गस्य कवर्गः स्यात् इति स्थितिः ॥ ७७६

पूर्व्वपक्षः

"क्विन् प्रत्ययः" स्थितं सूत्रं तदिह च प्रयुज्यते ।
तेनैव च भवेत् कुत्वं "चो कु" नास्ति प्रयोजनम् ॥ ७७७

उत्तरपक्षः

"क्विन् प्रत्ययः" परं शास्त्रं तदसिद्धं भवेदिह ।
"चोः कु" रिह भवेत् पूर्व्वं तेन कुत्वं भवेदिह ॥ ७७८

सुयुक् स्याच्च पदं तत्र सुयुग् स्याच्च पदं पुनः ।
सुयुजौ स्यात् सुयुजः स्यात् पदमूह्यं परं बुधैः ॥ ७७९

युजिर् योगे (रुधादौ)

युज् समाधौ (दिवादौ)

सूत्रं "युजेरसमासे" पूर्व्वमिह प्रदर्शितम् ।
युजिर् भवेद् रुधादौ च तस्येह ग्रहणं मतम् ॥ ७८०
"युज् समाधौ" दिवादौ स्यात् न तस्य ग्रहणं भवेत् ।
सूत्रं युजेरसमासे न च तस्मिन् प्रयुज्यते ॥ ७८१

युज् समाधौ स्थितं यत् स्यात् तस्मात् शब्दो भवेद् यदि
तदा पदं भवेद् युक् च न युङ् भवेत् तदा पुनः ॥ ७८२

स्वञ्

यदा स्वजि भवेद् धातुः प्रत्ययः क्विप् भवेद् यदा ।
स्वञ्ज् तदा च भवेत् शब्दः स इह प्रकृतिर्भवेत् ॥ ७८०
यदा स्वञ्ज् स्यात् यदा सु स्यात् सुप्रत्ययो विलुप्यति ।
हकारस्य भवेल्लोपः स्वन् पदं च तदा भवेत् ॥ ७८४

### राज्

राज् यदा च भवेद् शब्दः प्रत्ययः सु परे यदा ।
सुप्रत्ययः विलुप्तः स्यात् रूपं राज् च तदा भवेत् ॥ ७८५
"व्रश्च" – इति स्थितं सूत्रं तत् तदा च प्रयुज्यते ।
हकारस्य षकारः स्यात् राष् भवेच्च तदा पुनः ॥ ७८६
"झलां जश्" च स्थितं सूत्रं परं च तत् प्रयुज्यते ।
षकारस्य डकारः स्यात् पदं राड् च तदा भवेत् ॥ ७८७
"वावसाने" स्थितं सूत्रं तदपि च प्रयुज्यते ।
चर्त्वं तत्र विभाषा स्यात् पदं राट् च तदा भवेत् ॥ ७८८
पदं राड् स्यात् पदं राट् स्यात् पदद्वयं भवेत्तथा ।
राजौ राजः परे तत्र राट्सु राट्त्सु पुनः परे ॥ ७८९

### विभ्राज् (टु भ्राजृ दीप्तौ-कणादौ)

टु भ्राजृ च स्थितो धातुः कणादौ च प्रवर्त्तते ।
भ्राज् यदा यदा क्विप् स्यात् भ्राक् शब्दश्च भवेत्तदा ॥ ७९०
विशिष्य भ्राजते चेत् स्यात् विभ्राज् तदा भवेत् पुनः ।
स हि विभ्राज् पुनश्चात्र प्रकृतिरिति गृह्यते ॥ ७९१
विभ्राज् यदा यदा सु स्यात् पदं विभ्राट् भवेत् तदा ।
"व्रश्चे"ति च स्थितं सूत्रं षत्वं तेन प्रजायते ॥ ७९२
"झलां जश्" च डकारः स्यात् "वावसाने" पुनश्च टः ।
पदं विभ्राड् पदं विभ्राट् द्वयमिह भवेत्तथा ॥ ७९३
विभ्राजौ स्यात् पदं तत्र विभ्राजः स्यात् पदं तथा ।
न विशेषः स्थितस्तत्र पदमूह्य परं बुधैः ॥ ७९४

### विभ्राज् (भ्राजृ दीप्तौ)

भ्राजृ दीप्तौ स्थितो धातु पृथक् धातुर्भवेद्धि सः ।
न स धातुः कणादौ स्यात् स इह गृह्यते पुनः ॥ ७९५
भ्राजृ यदा भवेद् धातुः प्रत्ययः क्विप् भवेद् यदा ।
भ्राज् तदा च भवेत् शब्दः स इह गृह्यते पुनः ॥ ७९६
विशिष्य भ्राजते चेत् स्यात् विभ्राज् तदा भवेदिह ।
स हि विभ्राज् पुनश्चात्र प्रकृतिरिति गृह्यते ॥ ७९७

विभ्राज् यदा यदा तु स्यात् पदं विभ्राग् तदा भवेत्।
कुत्वमिह भवेत्तावत् न हि षत्वं भवेदिह ॥ ७९८
"वावसाने" स्थितं सूत्रं तत् यदा च प्रयुज्यते।
चर्त्वं तदा विभाषा स्यात् पदं विभ्राक् भवेत्तदा ॥ ७९९

"टुभ्राज" यः कणादौ स्यात् सः इह गृह्यते यदा।
भ्रश्चेति स्यात् तदा तत्र षत्वं तदा प्रवर्त्तते ॥ ८००
"भ्राज् दीप्तौ" पृथक् धातुः स इह गृह्यते यदा।
चोः कुरिति प्रयुक्तं स्यात् कुत्वं तदा प्रवर्त्तते ॥ ८०१

देवेज्

य देवान् यजते तत्र स देवेज् स्यादिति स्थितिः।
देवेड् देवेट् च देवेजौ देवेजः स्यात् पदं पुनः ॥ ८०२

विश्वसृज्

विश्वसृड् स्यात् पदं तत्र विश्वसृट् च पदं भवेत्।
विश्वसृजौ भवेत्तत्र विश्वसृजः पुनः पदम् ॥ ८०३
"सृजिदृशोः" स्थितं सूत्रं भाष्यं तत्र स्थितं खलु।
विश्वसृट् च पदं तत्र भाष्ये खलु प्रदर्शितम् ॥ ८०४
टकारान्तः प्रयोगश्च भाष्ये तत्र प्रदर्शितः।
टकारान्तो भवेद् ग्राह्यः कुत्वमिह न वर्त्तते ॥ ८०५

परिमृज्

परिपूर्व्वाद् यदा मार्ष्टेः प्रत्ययः क्विप् प्रयुज्यते।
परिमृज् स्यात् तदा शब्दः परिमृट् च भवेत् पदम् ॥ ८०६

परिव्राज्

परौ व्रजेः षः पदान्ते ( उ २१७ )

परि यदा भवेत् पूर्व्वं व्रजि परे भवेद् यदा।
प्रत्ययः क्विप् पुनः दीर्घः परिव्राज् स्यात् तदा पुनः ॥ ८०७
पदान्ते च जकारस्य पुनर्भवेत् षकारता।
परिव्राट् स्यात् पदं तत्र पदमिष्टं तदेव हि ॥ ८०८

परिव्राजौ भवेत्तत्र परिव्राजः पदं भवेत्।
विशेषो न स्थितस्तत्र पदमूह्यं परं बुधे ॥ ८०९

विश्वराज्

विश्व यदा भवेत् पूर्व्वं राज् यदा परे भवेत् ।
"सत्मू" चेति भवेद् योज्यं विश्वराज् स्यात् तदा पुनः ॥ ८१०
विश्वराज् स्यात् यदा शब्दः प्रत्ययः सु परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ ८११

**३७९। विश्वस्य वसुराटोः। ६।३।१२८**

विश्व यदा भवेत् पूर्व्वं वसु राट् च परे यदा ।
दीर्घो भवेदकारस्य विश्व विश्वा तदा भवेत् ॥ ८१२
विश्वाराट् स्यात् पदं तत्र दीर्घो यदा विधीयते ।
विश्वावसुर्भवेत्तत्र दीर्घो भवेद् यदा पुनः ॥ ८१३

राटोरिति पदं सूत्रे टकारान्तं प्रदर्शितम् ।
पदान्ते च टकारः स्याद् इति तेन च बोधितम् ॥ ८१४
केवलं हि भवेच् चर्त्वम् इति नेह विवक्षितम् ।
अन्यदपि भवेत्तत्र विश्वाराड् स्यात् तथा पुनः ॥ ८१५

विश्वाराजौ पदं च स्यात् विश्वाराजः पदं भवेत् ।
विश्वाराड्भ्याम् पदं च स्यात् पदमूह्यं परं बुधैः ॥ ८१६

भ्रस्ज् (भृस्ज्)

भ्रस्ज् पाके स्थितो धातुः प्रत्ययः क्विप् प्रयुज्यते ।
"ग्रहिज्या"--च प्रसारः स्यात् रेफस्य स्याद् ऋकारता ॥ ८१७
पुनः "सम्प्रसारणा"च्च पूर्व्वरूपं प्रपद्यते ।
भृस्ज् च शब्दो भवेत्तत्र स इह प्रकृतिर्भवेत् ॥ ८१८
भृस्ज् च यदा भवेच् शब्दः प्रत्ययः सु परे यदा ।
"हल्ङ्याब्भ्य"श्च सुलोपः स्यात् भृस्ज् च तदा स्थितं खलु ॥ ८१९
भृस्ज् च यदा स्थितं तत्र पदान्तश्च भवेद् यदा ।
सूत्रं तदा भवेद् योज्यं यथा परे प्रदर्शितम् ॥ ८२०

**३८०। स्कोः संयोगाद्योरन्ते च। ८।२।२९**

झल् इह चेत् परे तत्र पदान्तश्चेत् भवेत् परे ।
संयोगाद्योः तदा स्कोः स्यात् पुनरिह विलोपनम् ॥ ८२१

सकारस्य यदा लोप इत्थं तत्र प्रसज्यते ।
भृज् तदा च भवेद् रूपम् षत्ते जश्त्वे भवेच्च भृड् ॥ ८२२
"वावसाने" स्थितं सूत्रं तत् पुनश्च प्रयुज्यते ।
चर्त्वं तत्र विभाषा स्यात् पदं च भृट् तदा भवेत् ॥ ८२३
भस्ज् च यदा स्थितः शब्दः प्रत्यय औ परे यदा ।
न पदान्तः न झल् तत्र न तस्मात् "स्कोः" प्रयुज्यते ॥ ८२४
"झलां" जश् स्यादसिद्धं च तस्माद् जशत्वं भवेन्न च ।
श्चुत्वं भवेत् भवेत् "श"श्च जश्त्वेन "जः" भवेत् पुनः ॥ ८२८
भृजौ भवेत् पदं तत्र तथा तथा स्थिते सति ।
भृजः पदं भवेत्तत्र पदमूह्यं परं बुधैः ॥ ८२६

ऋत्विज्

ऋतु यदा भवेत् पूर्वं प्रत्ययः क्विन् परे यदा ।
शब्दः ऋत्विज् तदा तत्र स इह प्रकृतिर्भवेत् ॥ ८२७
ऋत्विज् यदा भवेत् शब्दः प्रत्यय सु परे यदा ।
हल्ङ्याब्भ्यश्च सुलोपः स्यात् रूपं ऋत्विज् तदा भवेत् ॥ ८२८
रूपम् ऋत्विज् तदा तत्र क्विन्निति "कु" भवेदिह ।
ऋत्विग् भवेत् पदं तत्र पदं ऋत्विक् भवेत् तथा ॥ ८२९
ऋत्विजौ स्यात् पदं तत्र ऋत्विज" स्यात् पदं पुनः ।
विशेषो न स्थितः कश्चित् पदमूह्यं परं बुधैः ॥ ८३०

ऊर्ज्

ऊर्ज बलप्राणनयोः चुरादिणिर्भवेदिह ।
"भ्राजभास" भवेत् क्विप् च णिलोपश्च विधीयते ॥ ८३१
ऊर्ज् इह स्यात् तदा शब्दः स इह प्रकृतिर्भवेत् ।
तस्मात् शब्दात् परं तत्र सुबुत्पत्तिर्भवेदिह ॥ ८३२
ऊर्ज् यदा स्यात् यदा सु स्यात् "हल्ङ्याब्भ्यः" सु विलुप्यति ।
ऊर्ज् तदा च स्थितं रूपं "चोः कुः" पुनः प्रसज्यते ॥ ८३३
ऊर्ज् भवेच्च तदा पदम् पदमिष्टम् तदेव हि ।
"वावसाने" यदा चर्त्वं ऊर्क् चापि च पदं तदा ॥ ८३४
ऊर्जौ भवेत् पदं तत्र ऊर्जः स्याच्च पदं पुनः ।
शेषं पदं बुधैरूह्यं नेह मया प्रदीयते ॥ ८३५

इति नान्ताः

## अथ दकारान्तप्रकरणम्

त्यद्

त्यद् यदा च स्थितः शब्दः पदं साध्यं भवेद् यदा।
"त्यदादीनां" स्थितं सूत्रं तत् सर्व्वादौ प्रयुज्यते ॥ ८३६
"त्यदादीनां" यदा युक्तम् अकारश्च भवेत्तदा।
"त्य अ" तदा तथा रूपं प्रपद्यते इति स्थितिः ॥ ८३७
"अतो गुणे" स्थितं सूत्रं तत्तदा च प्रयुज्यते।
"त्य" भवेच्च तदा तत्र स इह प्रकृतिर्भवेत् ॥ ८३८
"त्य" यदा च स्थितः शब्दः प्रत्ययः सु परे यदा।
सूत्रं तदा भवेद् योज्यं यथा परे प्रदर्शितम् ॥ ८३९

**३८१। तदोः सः सौ अनन्तयोः। ७।२।१०६**

त्यदादीनां तकारश्चेत् दकारश्चेत् न चान्ततः।
तयोर्भवेत् सकारश्च सु यदीह परे भवेत् ॥ ८४०

तकारस्य यदा तत्र सकारश्च प्रवर्त्तते।
"सत् सु" तदा भवेन् तत्र पदं च "स्यः" ततो भवेत् ॥ ८४१

**३८२। ङे प्रथमयोरम्। ७।१।२८**

"स्यः" भवेच्च पदं तत्र सु यदि च परे भवेत्।
त्यौ भवेच्च पदं तत्र यदा स्याद् औ पुनः परे ॥ ८४२
त्ये भवेच्च पदं तत्र जश् यदा स्यात् परे पुनः।
त्यम् भवेच्च पदं तत्र स्याद् अम् परे पुनर्यदा ॥ ८४३
त्यौ भवेच्च पदं तत्र यदा स्याद् औट् परे पुनः।
त्यान् भवेच्च पदं तत्र शस् यदा च परे भवेत् ॥ ८४४

तद्

सः तौ ते स्यात् पदं तत्र विशेषश्च न वर्त्तते।

परमतद्

परमसः परमतौ परमते भवेत् पदम् ॥ ८४५

पूर्व्वपक्षः

त्यदादीनां तकारस्य सकारश्च भवेदिह।
इति यत् भवता प्रोक्तं साधु तत् गृह्यते मया ॥ ८४६

युष्मद् शब्दः स्थितस्तत्र त्यदादीनां गणे स्थितः ।
युष्मद् शब्द समादेशः "त्वमि"ति च विधीयते ॥ ८४७
तुम् यदा स्यात् समादेशस्तकारो वर्त्तते तदा ।
तकारस्य सकारः स्यात् सूत्रमिदं च युज्यते ॥ ८४८

उत्तरपक्षः

त्यदादीनां गणे तत्र युष्मद शब्दः स्थितः खलु ।
तथापि च पुनस्तस्मिन् विधिरेष न युज्यते ॥ ८४९
"त्यदादीनाम्" स्थितं सूत्रं खलु पूर्व्वं प्रदर्शितम ।
वार्त्तिकं "द्विपर्य्यन्तायाम्" पुनस्तत्र प्रवर्त्तते ॥ ८५०
"तदोः सः सौ" पुनः सूत्रं परे तत्र स्थितं खलु ।
वार्त्तिकं "द्वितर्य्यन्तानयं" तत्रापि चानुवर्त्तते ॥ ८५१
द्विपर्य्यन्ता स्थिता ये च तेषु "तदोः" प्रयुज्यते ।
तेषां वाह्यो भवेद् यश्च तस्मिन् "तदोः" न वर्त्तते ॥ ८५२
युष्मद् शब्दो भवेद् वाह्यः तेषां मध्ये भवेन्न च ।
त्वमित्यस्य तकारस्य न तावत् स्यात् सकारता ॥ ८५३

त्यद्-संज्ञायाम

त्यद् शब्द स्यात् यदा तत्र यदा संज्ञा प्रतीयते ।
"त्यदादीनाम तदा न स्यात् "तदोश्चापि न युज्यते ॥ ८५४
त्यद् भवेच्च तदा रूपं त्यदौ रूपं भवेत्तदा ।
त्यदः स्याच्च तदा रूपम् त्यद् भवेन्नाम कस्यचित् ॥ ८५५

त्यद् शब्दः स्याद् यदा गौने समासश्च भवेद् यदा ।
"त्यादादीनाम" तदा न स्यात् "तदो" श्चापि न युज्यते ॥ ८५६
अतित्वद् स्यात् तदा रूपम अतित्वदौ भवेत् परे ।
अतित्वदः भवेत् रूपम गौणे रूपं भवेत्तथा ॥ ८५७

यद्

"यः" भवेच्च पदं तत्र "यौ" भवेच्च पदं तथा ।
"ये" भवेच्च पदं तत्र पदमूह्यं परं वुधैः ॥ ८५८

एतद्

एषः भवेत् पदं तत्र एतौ भवेत् पदं तथा ।
एते भवेत् पदं तत्र पदमूह्यं परं बुधैः ॥ ८५९

एतद्-अन्वादेशे

एतद् यदा भवेच् शब्दः अन्वादेशो यदा भवेत् ।
एनम् एनौ भवेत्तत्र भवेद् एनान् पुनः पदम् ॥ ८६०
एनेन स्यात् पदं तत्र स्यादेनयोः पदं तथा ।
एनयोः स्यात् पदं तत्र अन्वादेशे भवन्ति ते ॥ ८६१

युष्मद् अस्मद्

युष्मद् अस्मद् यदा शब्दः प्रत्ययः सु परे यदा ।
पदं यदा भवेत् साध्य सूत्र परं प्रयोजनम् ॥ ८६२

**३८२। ङे प्रथमयोरम्। ७।१।२८**

प्रथमा चेत् परे तत्र द्वितीया चेत् भवेत् परे ।
ङे यदा स्यात् परे तत्र अम् युष्मदस्मदोर्भवेत् ॥ ८६३

एवमिह समादेशो यदा स्याद् अम् तथा पुनः ।
"युष्मद् अम्" च तदा स्थितम् "अस्मद् अम्" च स्थितं तदा ॥ ८६४

समादेशः पुनश्चान्यो भवेत्तत्र प्रयोजनम् ।
पुनः प्राक् च समादेशात् सूत्रमिदं भवेदिह ॥ ८६५

**३८३। मपर्य्यन्तस्य। ७।२।९१**

युष्मदस्मद् यदा शब्दः समादेशो भवेद् यदा ।
ग्रहणं मपर्य्यन्तं स्याद् अधिकारो भवेदयम् ॥ ८६६
"युष्म" भवेद् मपर्य्यन्तं युष्मद्शब्दो भवेद् यदा ।
"अस्म" भवेत् मपर्य्यन्तम् अस्मद्शब्दो यदा भवेत् ॥ ८६७

एवं तत्र समादेशो सीया यदा प्रदर्शिता ।
तदा सूत्रं भवेद् योज्यं प्रदर्शितं यथा परे ॥ ८६८

**३८४। त्वाहौ सौ। ७।२।९४**

युष्मद् अस्मद् यदा शब्दः प्रत्ययः "सु" परे यदा ।
युष्मदः स्यात् तदा च "त्व" अस्मदश्च भवेद् "अह" ॥ ८६९

"त्व" युष्मदो यदा च स्यात् "अह" स्यादस्मदो यदा ।
"त्व अद् अम्" च तदा तत्र "अह अद् अम्" तदा पुनः ॥ ८७०

३८५। शेषे लोपः। ७।२।९०

आत्वं यत्वं यदा न स्मात् विभक्तिश्च परे यदा।
युष्मदश्चास्मदस्तत्र स्यादन्तस्य विलोपनम्॥ ८७१

अन्त्यस्य च दकारस्य यदा तत्र विलोपनम्।
"त्व अ अम्" स्यात् तदा तत्र "अह अ अम्" तदा भवेत्॥ ८७२
"अतो गुणे" स्थितं सूत्रं तदिह च प्रयुज्यते।
"त्व अम्" तदा भवेद् रूपम् "अह अम्" च तदा भवेत्॥ ८७३
"अमि पूर्व्वं" स्थितं सूत्रं परं च तत् प्रयुज्यते।
"त्वम्" भवेच्च तदा तत्र भवेद् "अहम्" तदा पुनः॥ ८७४

पूर्व्वपक्षः

इह यद् भवता प्रोक्तं न रुचिरं भवेच्च तत्।
इह यद् भवता प्रोक्तं न न्याय्यं तत् प्रतीयते॥ ८७५
अन्यच्च कारणं तत्र स्थितं हि बलवत्तरम्।
येन तत्र तकारस्य न तावत् स्यात् सकारता॥ ८७६
"त्वाहौ सौ" च स्थितं सूत्रं मुनिनेह प्रयोजितम्।
उच्चारणं तकारस्य विशिष्टेह विधीयते॥ ८७७
उच्चार्य्येह तकारं तं दर्शयति च सूत्रकृत्।
तकारो हि यदा तिष्ठेत् न तस्य स्यात् सकारता॥ ८८७
तकारस्य सकारश्चेत् मुनेरिष्टो भवेदिह।
"स्वाहौ" चेति तदा ब्रूयात् त्वाहौ ब्रूयात् मुनिर्न च॥ ८७९
उच्चारणस्य सामर्थ्यात् तकार एव वर्त्तते।
न तस्य च सकारः स्यात् प्रकृते हि कथञ्चन॥ ८८०
वार्त्तिकस्य चानुवृत्तेर्नास्ति किञ्चित् प्रयोजनम्।
अनुवृत्तिर्भवेद व्यर्था मतमेतद् भवेद् हि नः॥ ८८१

उत्तरपक्षः

उच्चारणात् तकारस्य सकारो न भवेदिह।
वार्तिकस्य चानुवृत्तिः पुनर्व्यर्था भवेदिह॥ ८८२
इति यत् भवता प्रोक्तं न तत् न्याय्यं भवेत् खलु।
अनुवृत्ति र्न व्यर्था स्यात् स्थितं तस्य प्रयोजनम्॥ ८८३

अनुवृत्ति र्न चेत् तत्र भवेदेव सकारता ।
त्यादादीनां गणे शब्दः यतः खलु प्रवर्त्तते ॥ ८८४
उच्चारणं तकारस्य न च पुनर्निरर्थकम् ।
अस्तित्वम् स्याद् यदा गौणे तदा तस्य प्रयोजनम् ॥ ८८५

पूर्व्वपक्षः

त्वं यदा च भवेत् स्त्रियाम् अहं स्त्रियां भवेद् यदा ।
तदापि च भवेत् "त्व अम्" "अह अम्" स्यात् तदापि च ॥ ८८६
प्रत्ययष्टा तदा च स्याद् अन्तरङ्गं प्रवर्त्तते ।
वहिरङ्गं परं चापि पूर्व्वरूपं च वाध्यते ॥ ८८७

उत्तरपक्षः

न युष्मदः स्थितं लिङ्गं न लिङ्गम् अस्मदः स्थितम् ।
अलिङ्गे युष्मदस्मदौ न तस्मात् टाप् भवेत् स्त्रियाम् ॥ ८८८

पृथक् इह समाधानं केषाञ्चिच्च पुनः स्थितम् ।
तदपि भवतां तृप्त्यै दर्शयामि परे पुनः ॥ ८८९

"शेषे लोपः" स्थितं सूत्रं तस्य व्याख्या पृथक् भवेत् ।
शेषस्येति च षष्ठ्यर्थः इह तावत् प्रतीयते ॥ ८९०
सः शिष्येते स शेषः स्यात् तस्य लोपो भवेदिह ।
अद् इह च भवेच् शेषस्तस्य लोपो विधीयते ॥ ८९१

त्व अद् तत्र स्थितं तावत् अह अद् च स्थितं पुनः ।
आदौ भवेदन्तरङ्गम् अतो गुणे प्रयुज्यते ॥ ८९२
अतो गुणे यदा युक्तं पररूपं भवेत् तदा ।
त्वद् तदा च भवेत्तत्र भवेद् अहद् तदा पुनः ॥ ८९३
अदो लोपः पुनः पश्चात् तत्र तावद् विधीयते ।
तदा तत्र भवेत् तावत् "त्व्" भवेद् अह् च तदा पुनः ॥ ८९४
हलन्तं च भवेद् द्वयम् अदन्तं न भवेत् पुनः ।
"अजाद्यतः" न तस्मात् स्यात् टाप् तदा न प्रयुज्यते ॥ ८९५
परमत्वम् पदं च स्यात् परमाहं पदं भवेत् ।
"ङे" चेति च स्थितं सूत्रं तदन्तेऽपि प्रयुज्यते ॥ ८९६

अतिदेशः स्यात् तथा तत्र स्याद् अन्त्यह तथा पुनः।
"ङे" चेति च भवेद् गौणो न बाधा च प्रवर्त्तते ॥ ८९७

**३८६। युवावौ द्विवचने। ७।२।९२**

युष्मद् अस्मद् यदा शब्दो द्विवचनं भवेद् यदा।
युवावौ मपर्य्यन्तस्य विभक्तौ च परे तदा ॥ ८९८

युष्मद् यदा स्थितः शब्दः अस्मद् शब्दो भवेद् यदा।
युव अद् स्यात् तदा तत्र आव अद् च तदा भवेत् ॥ ८९९
"शेषे लोपः" स्थितं सूत्रं तत् प्राप्तश्च भवेदिह।
एवं यदा भवेत् प्राप्तं सूत्रं परं प्रयुज्यते ॥ ९००

**३८७। प्रथमायाश्च द्विवचने भाषायाम्। ७।२।८८**

युष्मद् यदा भवेच् शब्दः शब्दश्चास्मद् भवेद् यदा।
अन्तादेश आकारः स्यात् भाषायां हि तथा भवेत् ॥ ९०१

आकारश्च दकारस्य यदा चैवं प्रसज्यते।
"युव अ आ" तदा भवेत् "आव अ आ" तदा भवेत् ॥ ९०२
अकारयोश्च पूर्व्वयोः पररूपं तदा भवेत्।
युव आ स्यात् तदा तत्र आव आ स्यात् तदा पुनः ॥ ९०३
ततः सवर्णदीर्घश्च पुनस्तत्र प्रसज्यते।
युवा भवेत् तदा तत्र भवेत् आवा तदा पुनः ॥ ९०४
"ङे" चेति च स्थितं तत्र भवेद् अम् च पुनस्तथा।
युवा अम् च तथा तावत् आवा अम् च तथा भवेत् ॥ ९०५
"अमि पूर्व्वः" भवेद् योज्यं पूर्व्वरूपं भवेत् तथा।
युवाम् भवेत् पदं तत्र पदम् आवाम् तदा भवेत् ॥ ९०६

भाषायान्तु भवेदेवं वैदिके न तथा भवेत्।
"युवं वस्त्राणि" वेदे स्यात् इह "युवम्" "युवाम्" च न ॥ ९०७

पदं च "मपर्य्यन्तस्य" पूर्व्वादिहानुवर्त्तते।
मपर्यन्तं भवेद् ग्राह्यं तदधिकं न गृह्यते ॥ ९०८
अधिकं चेद् गृहीतं स्याद् अनिष्टं तु तदा भवेत्।
अकच् चेत् प्रत्ययस्तत्र युवाम् आवाम् भवेत् तदा ॥ ९०९

युवकाम् न भवेत्तत्र न भवेदावकाम् पुनः ।
"युवकाम्" च भवेद् इष्टम् इष्टं स्याद् "आवकाम्" पदम् । ६१०

मपर्य्यन्तं भवेद् ग्राह्यं तदधिकं न गृह्यते ।
अधिकं चेद् गृहीतं स्यात् त्वा म्या तदा पदं भवेत् ॥ ६११
यदा त्वा स्यात् यदा म्या स्यात् अनिष्टं स्यात् तदा पुनः ।
तया भवेत् पदमिष्टम् इष्टं पदं भवेत् मया ॥ ६१२
मपर्य्यन्तं भवेद् ग्राह्यं तदधिकं न गृह्यते ।
अधिकं चेत् गृहीतं स्यात् अनिष्टं स्यात् तदा पुनः ॥ ६१३
युवकाभ्याम् भवेदिष्टं पदमिष्टं न सिध्यति ।
आवकाभ्याम् भवेदिष्टं न सिध्यति पुनश्च तत् ॥ ६१४
युष्मद् अस्मद् यदा शब्दः प्रत्ययो जश् परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ ६१५

३८८ । यूयवयौ जसि । ७।२।९३

यदा युष्मद् यदा जश् स्यात् अस्मद् यदा यदा च जश् ।
"यूय" भवेत् वमादेशः समादेशो भवेद् "वय" ॥ ६१६

यदा "यूय" समादेशो समादेशो यदा "वय" ।
पदं तदा भवेद् यूयम् भवेद् वयं पदं तदा ॥ ६१७
आङ्गत्वात्र विधिस्तत्र पदान्तऽपि प्रयुज्यते ।
भवेत् परमयूयम् च स्यात् परमवयं तथा ॥ ६१८
गौणेऽपि च विधिस्तत्र सममेव प्रयुज्यते ।
अतियूयं पदं च स्याद् अतिवयं पदं भवेत् ॥ ६१९

पूर्व्वपक्षः

युष्मद् अस्मद् यदा शब्दः प्रत्यय औ परे यदा ।
"शेषे लोपः" स्थितं सूत्रम् तदा च तत् प्रयुज्यते ॥ ६२०
अन्त्यस्य च भवेल्लोपः सूत्रं यदा प्रवर्त्तते ।
"युष्म" भवेत् तदा तत्र "अस्म" भवेत् तदा पुनः ॥ ६२१
अकारान्तो भवेद् "युष्म" भवेद् "अस्म" तथैव च ।
"जशः शी" च स्थितं सूत्रं शीभावश्च तथा भवेत् ॥ ६२२

उत्तरपक्षः

शीभावो न भवेदत्र न शीभावः प्रवर्त्तते ।
परिभाषा स्थिता शास्त्रे सा प्रमाणं भवेदिह ॥ ६२३

अङ्गकार्य्ये कृते पुन र्नाङ्गकार्य्यम् (प)

अङ्गकार्य्ये कृते तत्र नाङ्गकार्य्यं भवेत् पुनः ।
"शेषे लोपः" प्रयुक्तं च "जशः शी" न प्रयुज्यते ॥ ६२४

शीभावो न भवेत्तत्र स्थितमन्यत् च कारणम् ।
कारणं तु भवेदत्र यथा वच्मि परे पुनः ॥ ६२५
सूत्रं "ङे प्रथमयोरम्" इति तत्र प्रवर्त्तते ।
प्रश्लेषेण मकारश्च द्वितीयोऽपि भवेदिह ॥ ६२६
प्रश्लेषेण पुनस्तत्र तदिदं ज्ञापितं भवेत् ।
मान्त एव स तिष्ठेद् "अम्" न तस्य विकृतिः क्वचित् ॥ ६२७

युष्मद् अस्मद् यदा शब्दः अम्प्रत्ययः परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रवर्त्तते ॥ ६२८

३८९ । त्वमावेकवचने । ७।२।९७

युष्मद् अस्मद् यदा शब्दः स्यादेकवचनं यदा ।
"त्व" भवेच्च समादेशः समादेशो भवेच्च "म" ॥ ६२९

"त्व अद अम्" च तदा तत्र "म अद् अम्" च तदा पुनः ।
एवं यदा स्थितं तत्र सूत्रं परं प्रयुज्यते ॥ ६३०

३९० । द्वितीयायां च । ७।२।८७

युष्मद् अस्मद् यदा शब्दः द्वितीया च परे यदा ।
आकारश्च तदा तत्र तयोर्भवेदिति स्थितिः ॥ ६३१

त्व अ आ अम् तथा तत्र म अ आम् अम् तथा पुनः ।
त्वाम् भवेच्च पदं तत्र माम् भवेच्च पुनः पदम् ॥ ६३२

युवाम् भवेत् पदं तत्र पदम् आवाम् भवेत् पुनः ।
पूर्व्ववच्च भवेद् रूपं विशेषश्च न वर्त्तते ॥ ६३३

युष्मद् अष्मद् यदा शब्दः द्वितीया च परे यदा ।
सूत्रं तदा भवेद् योज्यं यथा परे प्रदर्शितम् ॥ ६३४

३९१ । शसो न । ७।१।२९

युष्मद् अष्मद् यदा शब्दः प्रत्ययः शस् परे यदा ।
शसस्तत्र नकारः स्यात् न तावदम् प्रवर्त्तते ॥ ६३५

युष्मद् शस् च यदा हि स्यात् अष्मद् शस् च यदा भवेत् ।
"युष्म न् स् स्याच्च तदा तत्र "अष्म न् स्" स्याच्च तदा पुनः ॥ ६३६
"संयोगान्तस्य लोपः" स्यात् सकारश्च विलुप्यति ।
"युष्म न्" स्याच्च तदा तत्र "अष्म न्" स्याच्च तदा पुनः ॥ ६३७
"द्वितीयायाम्" भवेद् योज्यम् आकारः स्यात् पुनस्तथा ।
युष्मान् भवेत् पदं तत्र पदम् अष्मान् तथा भवेत् ॥ ६३८
शसो यदा नकारः स्यात् अकारस्य भवेत् तदा ।
सूत्रम् "आदेः परस्य" स्यात् परस्यादेस्तथा भवेत् ॥ ६३९
युष्मद् आ च यदा तत्र अष्मद् आ च यदा पुनः ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रवर्त्तते ॥ ६४०

३९२ । योऽचि । ७।२।८९

युष्मद् अष्मद् यदा शब्दः अजादिका परे यदा ।
स्यादनयोः यकारश्च आदेशश्चेत् तदा तु न ॥ ६४१

दकारस्य यकारश्च यदा तथा प्रवर्त्तते ।
त्वया भवेत् पदं तत्र पदं तत्र भवेत् मया ॥ ६४२

युष्मद् भ्याम् च यदा तत्र अष्मद् भ्याम् च यदा पुनः ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रवर्त्तते ॥ ६४३

३९३ । युष्मदष्मदोरनादेशे । ७।२।८६

युष्मद् अष्मद् यदा शब्दः हलादिका परे यदा ।
आकारः स्यात् तदा तयोः आदेशश्चेत् तदा तु न ॥ ६४४

आकारः स्याद् यदा तत्र युवाभ्याम् च पदं भवेत् ।
आकारः स्याद् यदा तत्र आवाभ्याम् च भवेत् पदम् ॥ ६४५

युष्माभिः स्यात् पदं तत्र विशेषश्च न वर्त्तते ।
अस्माभिः स्यात् पदं तद्वत् न विशेषः स्थितः पुनः ॥ ९४६
युष्मद् ङे स्यात् यदा तत्र अष्मद् ङे स्यात् यदा पुनः ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रवर्त्तते ॥ ९४७

३९४। तुभ्यमह्यौ ङयि। ७।२।९५

युष्मद् अष्मद् यदा शब्दः प्रत्ययो ङे परे यदा ।
"तुभ्य" भवेत् भवेत् "मह्य" समादेशो यथाक्रमम् ॥ ९४८

अमादेशो भवेत्तत्र "शेषे लोपः" भवेत् पुनः ।
तुभ्यम् भवेत् तदा तत्र मह्यम् भवेत् पुनः पदम् ॥ ९४९

पदं स्यात् परमतुभ्यम् पदान्तेऽपि विधिर्भवेत् ।
पदं स्यात् परममह्यम् तदन्ते च भवेद् विधिः ॥ ९५०
अतितुभ्यम् पदं च स्यात् गौणे चापि भवेद् विधिः ।
अतिमह्यम् पदं च स्यात् गौणे विधिः प्रयुज्यते ॥ ९५१

युवाभ्याम् स्यात् पदं तत्र पूर्व्ववच्च भवेदिह ।
आवाभ्याम् स्यात् पदं तत्र भवेदिह च पूर्व्ववत् ॥ ९५२

युष्मद् यदा भवेच्च शब्दः अष्मद्शब्दो भवेद् यदा ।
प्रत्ययो भ्यस् परे यत्र सूत्रं तदा परं भवेत् ॥ ९५३

३९५। भ्यसो भ्याम्। ७।१।३०

युष्मद् अष्मद् यदा शब्दः प्रत्ययो भ्यम् परे यदा ।
भ्यम् भवेद् वा समादेशः अभ्यम् वापि भवेत् भ्यसः ॥ ९५४
यदा युष्मद् यदा भ्यस् च युष्मभ्यं च पदं भवेत् ।
अष्मद् यदा यदा भ्यस् च स्याद् अष्मभ्यः पदं तदा ॥ ९५५
भ्यमो भ्यम् च स्थितं सूत्रं संशयस्तु भवेदिह ।
समादेश इह स्याद् भ्यम् अभ्यम् स्यादथवा पुनः ॥ ९५६
सूत्रमिदं द्विधा छेत्तुं शक्यं भवेदिति स्थितिः ।
"भ्यसः भ्यम्" च भवेच्छेदः "भ्यसः अभ्यम्" भवेदपि ॥ ९५७

"भ्यसः भ्यम्" चेद् भवेच्छेदः भ्यमिह चेत् भवेत् पुनः ।
"शेषे लोपः" स्थितं सूत्रं रूपद्वयं तदा भवेत् ॥ ९५८
दकारस्य यदा लोपो युष्म भ्यम् स्यात् तदा पुनः ।
अदो लोपो यदा तत्र युष्म् भ्यम् भवेत् पुनस्तदा ॥ ९५९

"भ्यसः अभ्यम्" यदा छेदः स्याद् अभ्यम् च यदा पुनः ।
"शेषे लोपः" स्थितं सूत्रं रूपद्वयं तदापि च ॥ ९६०
दकारस्य यदा लोपः युष्म अभ्यम् तदा भवेत् ।
अदो लोपो यदा तत्र युष्म् अभ्याम् च भवेत्तदा ॥ ९६१

युष्मद् यदा भवेत्तत्र रूपचतुष्टयं भवेत् ।
अष्मद् यदा भवेत्तत्र भवेदेवं तदापि च ॥ ९६२

पूर्व्वपक्षः

प्रथमं चेद् भवेद् रूपं "युष्म भ्यम्" चेद् भवेदिह ।
सूत्रं "बहुवचने" च तदा तत्र प्रयुज्यते ॥ ९६३
एकारः स्यात् तथा तत्र युष्मेभ्यम् स्यात् पदं तदा ।
तत् पदं न भवेदिष्टम अनिष्टं तु तदा भवेत् ॥ ९६४

उत्तरपक्षः

सूत्रं "बहुवचने" च नेह तावत् प्रयुज्यते ।
एकं यदि भवेदाङ्गम् अन्यदाङ्गं भवेन्न च ॥ ९६५
"शेषे लोपः" प्रयुक्तं च सूत्रमाङ्गं भवेदिदम् ।
आङ्गं "बहुवचने" च तस्मादिदं न युजते ॥ ९६६
एकारो न भवेत्तत्र युष्मेभ्याम् न भवेत् पदम् ।
युष्मभ्याम् स्यात् पदं तत्र पदमिष्टं तदेव हि ॥ ९६७

द्वितीयश्चेद् भवेद् पक्षः "युष्म् भ्याम" यदा भवेत् ।
न तत्र च भवेत् पदं पदं तत्र न लभ्यते ॥ ९६८

तृतीयश्च यदा पक्षः "युष्म अभ्यम्" यदा भवेदिह ।
युष्मभ्यम् स्यात् पदं तत्र पदमिष्टं भवेत् तदा ॥ ९६९

चतुर्थश्च यदा पक्षः "युष्म् अभ्यम्" च भवेद् यदा ।
युष्मभ्यम् स्यात् पदं तत्र पदमिष्टं तदापि च ॥ ९७०

अष्मद् भ्यम् च यदा तत्र भवेदेवं तदापि च।
अष्मभ्यम् स्यात् पदं तत्र पदमिष्टं तदेव हि ॥ ९७१
युष्मद् अष्मद् यदा शब्दः ङसिर्यदा भवेत् परे।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ ९७२

३९६। **एकवचनस्य च।** ७।१।३२

युष्मद् अष्मद् यदा शब्दः तदा स्याद् अत् इति स्थितिः।
पञ्चम्यामेकवचनं यदा परे प्रवर्त्तते ॥ ९८३

युष्मद् यदा भवेच् शब्दः पदं त्वत् च तदा भवेत्।
अष्मद् यदा भवेच् शब्दः पदम् मत् च भवेत् तदा ॥ ८७४

युष्मद् यदा यदा भ्याम् स्यात् युवाभ्याम् च पदं भवेत्।
युष्मद् यदा यदा भ्याम् स्यात् आवाभ्याम् स्यात् पदं तदा ॥ ९७५
युष्मदष्मद् यदा शब्दः प्रत्ययो भ्यस् परे यदा।
पदं यदा भवेत् साध्यं सूत्रं परं प्रवर्त्तते ॥ ९७६

३९७। **पञ्चम्या अत्।** ७।२।३१

युष्मदष्मद् यदा शब्दः पञ्चम्यां भ्यस् परे यदा।
समादेशस्तदा स्यादत् इति स्थितिर्भवेदिह ॥ ९७७

युष्मद् यदा भवेच् शब्दः पदं युष्मत् तथा भवेत्।
अष्मद् यदा भवेच् शब्दः पदम् अष्मत् भवेत् तथा ॥ ९७८
युष्मद् अष्मद् यदा शब्दः प्रत्ययो ङस् यदा परे।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ ९७९

३९८। **तवममौ ङसि।** ७।२।९६

युष्मदष्मद् यदा शब्दः प्रत्ययो ङस् परे यदा।
अनयोर्मपर्यन्तस्य तव मम भवेत् तदा ॥ ९८०

युष्मद् अष्मद् यदा तत्र तव मम भवेद् यदा।
सूत्रं पुनर्भवेद् योज्यं यथा परे प्रदर्शितम् ॥ ९८१

३९९। **युष्मदष्मद्भ्याम् ङसोऽश्।** ७।१।२७

युष्मद् अष्मद् यदा शब्दः प्रत्ययो ङस् परे यदा।
समादेशो ङसः स्थाने तदा स्याद् अश् इति स्थितिः ॥ ९८२

तव अश् स्यात् तदा तत्र मम अश् स्यात् तदा पुनः ।
"अतोगुणे" भवेद् योज्यं तव मम भवेद् तदा ॥ ९८३

युष्मदस्मद् यदा शब्दः प्रत्यय ओस् परे यदा ।
युवयोरावयोः स्याच्च तथा तथा पदं भवेत् ॥ ९८४

युष्मद् अस्मद् यदा शब्दः प्रत्यय आम् यदा परे ।
पदं यदा भवेत् साध्यं सूत्रं परं तदा भवेत् ॥ ९८५

४०० । साम आकम् । ७।१।३३

युष्मद अस्मद् यदा शब्दः प्रत्ययः आम् परे यदा ।
साम आकम् तदा तत्र समादेशः प्रयुज्यते ॥ ९८६

युष्मद् यदा भवेच्च शब्दः युष्माकं च पदं भवेत् ।
अस्मद् यदा भवेच्च शब्दः अस्माकं स्यात् पदं तदा ॥ ९८७

पूर्व्वपक्षः

"साम" इति पदं सूत्रे मुनिनेह प्रयोजितम् ।
"साम" इति सुटा तत्र विधानं च न युज्यते ॥ ९८८
"युष्मद् आम् स्याद् यदा रूपम् "अस्मद् आम" स्याद यदा पुनः ।
अवर्णान्तात् परत्वं न तस्मात् सुट् न प्रसज्यते ॥ ९८९
यदा तत्र भवेद् आकम् न सुट् तदा भवेदिह ।
न यदा सुट् तदा सुटा विधानं च न युज्यते ॥ ९९०
यस्मिन् काले भवेद् आकम् तस्मिन् काले न सुट् स्थितम् ।
न यदा सुट् तदा सुटा विधानं वा भवेत् कथम् ॥ ९९१

उत्तरपक्षः

प्रक्रियायां प्रवृत्तायां पश्चाच्च सुट् भविष्यति ।
भाविनं सुटमादाय विधानं कुरुते मुनिः ॥ ९९२
प्रक्रियायां यदा सूत्रं "शेषे लोपः" प्रसज्यते ।
दकारस्य तदा तत्र भवेत् खलु विलोपनम् ॥ ९९३
युष्म आम् स्यात् तदा रूपम् अस्म आम् स्यात् तदा पुनः ।
"आमि" चेति प्रयोज्यं स्यात् सुट् तदा च प्रसज्यते ॥ ९९४
एवमिह यदा पश्चात् आमि सुट् च प्रवर्त्तते ।
एवमिह यदा पश्चात् आम् भवेच्च सुटा सह ॥ ९९५

सुटा सह तदा तावद आम आकम् भवेदिह ।
मिलितयोस्तयोस्तत्र भवेद् आकमिति स्थितिः ॥ ९९६
मिलितयोस्तयोस्तत्र भवेद् आकम् यदा पुनः ।
सुट् तदा च पृथक् स्थातु प्रसरं लभते न हि ॥ ९९७
मिलितयोस्तयोस्तत्र समादेशो भवेद् यदा ।
पृथक् सत्त्वं सुटस्तत्र निवृत्तं स्याद् यदा पुनः ॥ ९९८
भविष्यतः सुटस्तत्र निवृत्तिः स्याद् यथा खलु ।
मुनिना च तथा सूत्रे विधानं क्रियते सुटा ॥ ९९९

"साम आकम्" भवेत् सुटा सूत्रं न चेत् तथा भवेत् ।
विना सुटम् "आम आकम्" इति सूत्रं भवेद् यदि ॥ १०००
अनिष्टं तु तदा तत्र महद् आपतितं भवेत् ।
इष्टं पदं यदत्र स्यात् तदिह च न सिध्यति ॥ १००१
प्रक्रियायां यदा सूत्रं "शेषे लोपः" प्रयुज्यते ।
दकारस्य यदा तत्र भवेत् खलु विलोपनम् ॥ १००२
युष्म आम् स्यात् तदा रूपम् अस्म आम् स्यात् तदा पुनः ।
युष्म आकम् भवेत् पश्चात् अस्म आकम् पुनर्भवेत् ॥ १००३
"आमि" चेति भवेद् योज्यम् सुट् तदा च प्रसज्यते ।
भवेद् एत्वं भवेत् षत्वं भवेद् द्वयं यथायथम् ॥ १००४
युष्मेषाकम् पदं च स्याद् अस्मेषाकं भवेत् पदम् ।
अनिष्टं तु तदा तत्र महदापतितं भवेत् ॥ १००५
युष्माकं च पदमिष्टं तदिह च स सिध्यति ।
अस्माकं च पदमिष्टं न सिध्यति पुनश्च तत् ॥ १००६
सुटा यदा विधानं स्यात् निवृत्तिः स्यात् तदा सुटः ।
युष्माकम् स्यात् पदं तावत् अस्माकं च पदं भवेत् ॥ १००७
त्वयि भवेत् पदं तत्र मयि भवेत् पदं पुनः ।
युवयोः स्यात् पदं तत्र पदं स्यादावयोस्तथा ॥ १००८
युष्मासु स्यात् पदं तावद् अस्मासु च पदं भवेत् ।
सर्व्वासु च विभक्तिषु पदं मया प्रदर्शितम् ॥ १००९
युष्मद् अस्मद् यदा शब्दः समासे च प्रवर्त्तते ।
तदा पदं कथं सिध्येद् इति प्रश्नो भवेदिह ॥ १०१०

"त्वमौ" चेति स्थितं सूत्रं तेन पदं प्रसिध्यति ।
"युवावौ" च स्थितं सूत्रं सिध्यति च पदं तथा ॥ १०११
"त्वमावेकवचने" च सूत्रमिह स्थितं च यत् ।
तत्रै "कवचन"शब्दः योगिको गृह्यते खलु ॥ १०१२
"युवावौ द्विवचने" च सूत्रमिह स्थितं च यत् ।
तत्र "द्विवचन"-- शब्दः योगिको गृह्यते पुनः ॥ १०१३
युष्मद् अष्मद् यदा तत्र समासे च प्रयुज्यते ।
व्याख्यामिमां समाश्रित्य तदा गतिर्भवेदिह ॥ १०१४
इह च कारिकाः काश्चित् प्राचीनानां स्थिताः खलु ।
सव्याख्याः कारिकाश्च ताः दर्शयामि परे पुनः ॥ १०१५

कारिका

समस्यमाने द्व्येकत्ववाचिनी युष्मदष्मदो ।
समासार्थोऽन्यसंख्यश्चेत् स्तो युवावौ त्वमावपि ॥ १

व्याख्या

एके यदा भवेद् युष्मद् अष्मद एके यदा भवेत् ।
पदस्य च समस्तस्य संख्या वा स्याद् यथा तथा ॥ १०१६
"त्वमौ" चेति स्थितं सूत्रं तदेव हि प्रयुज्यते ।
त्वमौ तत्र समादेशौ तदा स्यातामिति स्थितिः ॥ १०१७
सु जश् ङे ङस् इति तत्र विहाय च चतुष्टयम् ।
सप्तदशविभक्तिषु शिष्टासु च विधिर्भवेत् ॥ १०१८
द्वित्वे यदा भवेद् युष्मद् अष्मद् द्वित्वे भवेद् यदा ।
पदस्य च समस्तस्य संख्या वा स्यात् यथा तथा ॥ १०१९
"युवावौ" च स्थितं सुत्रं तदेव हि प्रयुज्यते ।
युवावौ च समादेशौ तदा स्यातामिति स्थितिः ॥ १०२०
सु जश् ङे ङस् इति तत्र विहाय च चतुष्टयम् ।
सप्तदशविभक्तिषु शिष्टासु च विधिर्भवेत् ॥ १०२१

कारिका

सु-जश-ङे-ङससु परत आदेशाः स्युः सदैव ते ।
"त्वाहौ" "यूयवयौ" "तुभ्यमह्यौ" "तवममा"वपि ॥ २

व्याख्या

एके यदा भवेद् युष्मद् अष्द् एके भवेद् यदा ।
पदस्य च समस्तस्य संख्या वा स्याद् यथा तथा ॥ १०२२
सु यदा स्यात् तदा "त्वाहौ" सूत्रं खलु प्रयुज्यते ।
जश् यदा स्यात् तदा तत्र "यूयवयौ" प्रवर्त्तते ॥ १०२३
ङे यदा स्यात् तदा तत्र "तुभ्यमह्यौ" भवेत् पुनः ।
ङस् यदा स्यात् तदा तत्र "तवममौ" प्रसज्यते ॥ १०२४
चतुर्षु च विभक्तिषु पदं तथा प्रसिध्यति ।
सप्तदशसु यथा सुस्तथा पूर्व्वं प्रदर्शितम् ॥ १०२५

द्वित्वे यदा भवेद् युष्मद् अष्मद् द्वित्वे भवेद् यदा ।
पदस्य च समस्तस्य संख्या वा स्यात् यथा तथा ॥ १०२६
सु यदा स्याद तदा "त्वाहौ" सूत्रं खलु प्रयुज्यते ।
जश् यदा स्यात् तदा तत्र "यूयवयौ" प्रवर्त्तते ॥ १०२७
ङे यदा स्यात् तदा तत्र "तुभ्यमह्यौ" पुनर्भवेत् ।
ङस् यदा स्याद् तदा तत्र "तवममौ" प्रवर्त्तते ॥ १०२८
चतुर्षु च विभक्तिषु पदं तथा प्रसिध्यति ।
सप्तदशसु यथा स्युस्तथा पूर्व्वं प्रदर्शितम् ॥ १०२९

कारिका

एते परत्वाद् वाधन्ते युवावौ विषये ध्वके ।
त्वमावपि प्रवाधन्ते पूर्व्वविप्रतिषेधतः ॥ ३

व्याख्या

पूर्व्वपक्षः

द्वित्वे यदा भवेद् युष्मद् अष्मद् द्वित्वे भवेत् यदा ।
सु जश् ङे ङस् यदा तत्र "युवावौ" स्यात् तदापि च ॥ १०३०
एके यदा भवेद् युष्मद् अष्मद् एके यदा भवेत् ।
सु जश् ङे ङस् यदा तत्र "त्वमौ" भवेत् तदापि च ॥ १०३१

उत्तरपक्षः

द्वित्वे यदा भवेद् युष्मद् अष्मद् द्वित्वे यदा भवेद् ।
सु जश ङे ङस् यदा तत्र "युवावौ" तु न युज्यते ॥ १०३२

"युवावौ" च स्थितं पूर्व्वं "त्वाहा"--दिकं परे स्थितम् ।
बाधितं च भवेत् पूर्व्वं परमेव प्रवर्त्तते ॥ १०३३
एके यदा भवेद् युष्मद् अस्मद् एके यदा भवेत् ।
सु जस् ङे ङस् यदा तत्र "त्वमौ" तदा न युज्यते ॥ १०३४
"त्वमौ" परे स्थितं सत्यं तथापि तद् न युज्यते ।
सत्यपि विप्रतिषेधे क्वचित् पूर्व्वं प्रवर्त्तते ॥ १०३५

कारिका

द्व्येकसङ्ख्यः समासार्थौ बह्वर्थे युष्मदस्मदी ।
तयोरेद्व्येकतार्थत्वान्न युवावौ त्वमौ च न ॥ ४

व्याख्या

युष्मद् अस्मद् यदा तत्र बहुत्वे च प्रवर्त्तते ।
एकत्वम् अथवा द्वित्वं समासार्थौ भवेद् यदा ॥ १०३६
"युवावौ" च "त्वमौ" तत्र तदा खलु न युज्यते ।
एकत्वमथवा द्वित्वं युष्मदो न न चास्मदः ॥ १०३७
एकत्वं चेद् भवेदर्थस्तदा "त्वमौ" प्रवर्त्तते ।
युष्मदश्चास्मदस्तत्र न चैकत्वं स्थितं खलु ॥ १०३८
द्वित्वं यदा भवेदर्थो "युवावौ" च तदा भवेत् ।
युष्मदश्चास्मदस्तत्र न हि द्वित्वं स्थितं खलु ॥ १०३९
एकत्वम् अथवा द्वित्वं कारणं न यदा स्थितम् ।
"त्वमौ" चेति "युवावौ" वा तदा कार्य्यं भवेत् कथम् ॥ १०४०

युष्मद् अस्मद् यदा शब्दः समासे च प्रवर्त्तते ।
पदं यदा भवेत् साध्यं कारिका च भवेत् तदा ॥ १०४१
कारिकां तु समाश्रित्य साध्यं पदं यथायथम् ।
पदं यथा भवेत् तत्र तथा परे प्रदर्शितम् ॥ १०४२

अतियुष्मद् = अतिक्रान्तस्त्वाम् (युष्मद् एकत्वे)
अति-अस्मद् = अतिक्रान्तः माम् (अस्मद् एकात्वे)

प्रथमा

अतित्वम् स्याद् अतित्वाम् स्यात् अतियूयम् पदं भवेत् ।
अत्यहं स्याद् अतिमाम् स्यात् अतिवयं भवेत् पदम् ॥ १०४३

द्वितीया

अतित्वाम् स्यात् अतित्वाम् स्यात् अतित्वान् च पदं भवेत् ।
अतिमाम् स्यात् अतिमाम् स्यात् अतिमान् च भवेत् पदम् ॥ १०४४

तृतीया

अतित्वया अतित्वाभ्याम् अतित्वाभिः पदं भवेत् ।
अतिमया अतिमाभ्याम् अतिमाभिः भवेत् पदम् ॥ १०४५

चतुर्थी

अतितुभ्यम् अतित्वाभ्याम् अतित्वभ्यं पदं भवेत् ।
अतिमह्यम् अतिमाभ्याम् अतिमभ्यं भवेत् पदम् ॥ १०४६

पञ्चमी

अतित्वत् स्यात् अतित्वभ्याम् अतित्वत् च पदं भवेत् ।
अतिमत् स्यात् अतिमभ्याम् अतिमत् च भवेत् पदम् ॥ १०४७

षष्ठी

अतितव अतित्वयोः अतित्वाकम् पदं भवेत् ।
अतिमम अतिमयोः अतिमाकं भवेत् पदम् ॥ १०४८

सप्तमी

अतित्वयि अतित्वायोः अतित्वासु पदं भवेत् ।
अतिमयि अतिमयोः अतिमासु भवेत् पदम् ॥ १०४९

अतियुष्मद् = अतिक्रान्तो युवाम् (युष्मद् द्वित्वे)

अति-अस्मद् = अतिक्रान्त आवाम् (अस्मद् द्वित्वे)

प्रथमा

अतित्वम् स्याद् अतियुवाम् अतियूयं पदं भवेत् ।
अत्यहम् स्यात् अत्यावाम् स्याद् अतिवयं भवेत् पदम् ॥ १०५०

द्वितीया

अतियुवाम् अतियुवाम् अतियुवान् पदं भवेत् ।
अत्यावाम् स्याद् अत्यावाम् स्याद् अत्यावान् च भवेत् पदम् ॥ १०५१

तृतीया

स्यादतियुवया तत्र टा यदि च परे भवेत् ।
भवेद् अतियुवाभ्याम् च यदा भ्याम् च भवेत् परे ॥ १०५२
भवेद् अतियुवाभिश्च भिस् यदि स्यात् परे पुनः ।
युष्मद् यदा भवेद् द्वित्वे तदा पदं भवेत्-तथा ॥ १०५३

अत्यावया पदं च स्याद् अत्यावाभ्याम् पदं भवेत् ।
अत्यावभिः पदं च स्यात् अष्मद् द्वित्वे भवेद् यदा ॥ १०५४

चतुर्थी

अतितुभ्यम् पदं च स्यात् ङे यदि च परे भवेत् ।
भवेद् अतियुवभ्याम् च भ्याम् यदा च भवेत् परे ॥ १०५५
भवेद् अतियुवभ्यम् च भ्यम् यदि च परे भवेत् ।
युष्मद् यदा भवेद् द्वित्वे तदा रूपं भवेत् तथा ॥ १०५६
अतिमह्यम पदं च स्याद् अत्यस्माभ्याम् भवेत् पदम् ।
अत्यस्मभ्यम् पदं च स्याद् अस्मद् द्वित्वे यदा भवेत् ॥ १०५७

पञ्चमी

अतियुष्मद् पदं च स्यात् ङस् यदा च भवेत् परे ।
भवेद् अतियुष्माभ्याम् च भ्याम् यदा च परे भवेत् ॥ १०५८
अतियुष्मत् पदं च स्यात् भ्यम् यदि च भवेत् परे ।
युष्मद् यदा भवेद् द्वित्वे तदा रूपं तथा भवेत् ॥ १०५९
अत्यस्मत् स्यात् पदं तत्र यदा ङस् च परे भवेत् ।
अत्यस्मभ्याम् पदं च स्यात् यदा भ्याम् च भवेत् परे ॥ १०६०
अत्यस्मत् स्यात् पदं तत्र भ्यस् यदा च परे भवेत् ।
अष्मद् यदा भवेद् द्वित्वे पदं तदा भवेत् तथा ॥ १०६१

षष्ठी

अतितव पदं च स्याद् ङस् यदा च परे भवेत् ।
स्याद् अतियुष्मयोः पदम् ओस् यदा च भवेत् परे ॥ १०६२
पदं स्याद् अतियुष्माकम् आम् यदि स्यात् परे पुनः ।
युष्मद् यदा भवेद् द्वित्वे पदं तदा तथा भवेत् ॥ १०६३
अतिमम पदं च स्याद् ङस् यदा च परे भवेत् ।
अत्यस्मयाः पदं च स्यात् ओस् यदा च भवेत् परे ॥ १०६४
अत्यस्माकम् पदं च स्यात् आम् यदा च परे भवेत् ।
अष्मद् यदा भवेद् द्वित्वे तदा रूपं भवेत् तथा ॥ १०६५

सप्तमी

पदम् अतियुष्मयि स्यात् ङि परे चेत् प्रवर्त्तते ।
पदम् अतियुष्मयोः स्यात् औस् इह चेत् परे भवेत् ॥ १०६६

पदम् अतियुष्मासु स्यात् सुप् यदि च परे भवेत् ।
युष्मद् यदा भवेद् द्वित्वे तदा रूपं भवेत् तथा ॥ १०६७
अत्यस्मयि पदं च स्याद् अत्यस्मयोः पदं भवेत् ।
अत्यस्मासु पदं च स्याद् अस्मद् द्वित्वे भवेद् यदा ॥ १०६८

अतियुष्मद् = अतिक्रान्तो युष्मान् (युष्मद् बहुत्वे)
अति अस्मद् = अतिक्रान्तः अस्मान् (अस्मद् बहुत्वे)

प्रथमा

अतित्वम् स्याद् अतियुष्माम् अतियूयं पदं भवेत् ।
अत्यहम् स्याद् अत्यस्माम् स्यात् अतिवयं भवेत् पदम् ॥ १०६९

द्वितीया

अतियुष्माम् अतियुष्माम् अतियुष्मान् पदं भवेत् ।
अत्यस्मान् स्याद् अत्यस्माम् स्यात् अत्यस्मान् च भवेत् पदम् ॥ १०७०

तृतीया

स्याद् अतियुष्मया तत्र टा यदि च परे भवेत् ।
पदम् अतियुष्माभ्याम् स्यात् भ्याम् यदि च भवेत् परे ॥ १०७१
पदं स्याद् अतियुष्माभिः भिस् यदि च परे भवेत् ।
बहुत्वे च यदा युष्मद् तदा पदं भवेत् तथा ॥ १०७२
अत्यस्मया पदं च स्याद् टा यदि च भवेत् परे ।
पदं भवेद् अत्यस्माभ्याम् भ्याम् यदि च परे भवेत् ॥ १०७३
पदं भवेद् अत्यस्माभिः भिस् यदि च भवेत् परे ।
अस्मद् यदा बहुत्वे स्यात् पदं तदा तथा भवेत् ॥ १०७४

चतुर्थी

अतितुभ्यम् पदं च स्याद् ङे यदा च परे भवेत् ।
पदं स्याद् अतियुष्माभ्याम् भ्याम् यदा च भवेत् परे ॥ १०७५
पदं स्याद् अतियुष्मभ्यम् भ्यम् यदा च परे भवेत् ।
अस्मद् यदा बहुत्वे स्याद् पदं तदा भवेत् तथा ॥ १०७६
अतिमह्यम् पदं च स्याद् ङे यदा च परे भवेत् ।
पदं स्याद् अत्यस्मभ्यम् च भ्यम् यदा च भवेत् परे ॥ १०७७
अत्यस्मभ्यम् पदं च स्यात् भ्यस् यदा च परे भवेत् ।
अस्मद् यदा बहुत्वे स्यात् तदा रूपं भवेत् तथा ॥ १०७८

पञ्चमी

अतियुष्मत् पदं च स्यात् ङसि यदा भवेत् परे ।
पदं स्यादतियुष्माभ्याम भ्याम् यदा च परे भवेत् ॥ १०७९
अतियुष्मत् पदं च स्यात् भ्यस् यदा च भवेत् परे ।
युष्मद् यदा वहुत्वे स्यात् तदा रूपं भवेत् तथा ॥ १०८०
अत्यस्मत् स्यात् पदं तत्र ङसि यदा परे भवेत् ।
अत्यस्माभ्याम पदं च स्यात् भ्याम् यदा च भवेत् परे ॥ १०८१
अत्यस्मत् स्यात् पदं तत्र भ्यस् यदा च परे भवेत् ।
अस्मद् यदा वहुत्वे स्यात् तदा पदं तथा भवेत् ॥ १०८२

षष्ठी

अतितव पदं च स्याद् ङस् यदा च परे भवेत् ।
पदं स्याद् अतियुष्मयो ओस् यदा च भवेत् परे ॥ १०८३
पदं स्याद् अतियुष्पाकम् आम् यदा च परे भवेत् ।
युष्मद् यदा वहुत्वे स्यात् तदा पदं भवेत् तथा ॥ १०८४
अतिमम पदं च स्यात् ङस् यदा च परे भवेत् ।
अत्यस्मयोः पदं च स्यात् ओस् यदा च भवेत् परे ॥ १०८५
अत्यस्माकम् पदं च स्यात् आम् यदा च परे भवेत् ।
अस्मद् यदा वहुत्वे स्यात् तदा रूपं भवेत् तथा ॥ १०८६

सप्तमी

स्याद् अतियुष्मस् च तत्र ङि यदि च भवेत् परे ।
पदं स्याद् अतियुष्मयोः ओस् यदि च परे भवेत् ॥ १०८७
पदं स्याद् अतियुष्मासु सुप् यदा च परे भवेत् ।
युष्मद् यदा वहुत्वे स्यात् तदा रूपं भवेत् तथा ॥ १०८८
अत्यस्मयि पदं च स्यात् ङि परे चेत् प्रवर्त्तते ।
अत्यस्मयोः पदं च स्यात् ओस् परे च भवेद् यदा ॥ १०८९
अत्यष्मासु पदं च स्यात् सुप् परे चेत् प्रवर्त्तते ।
अस्मद् यदा वहुत्वे स्यात् तदा रूपं भवेत् तथा ॥ १०९०

४०१ । पदस्य । ८।१।१६

अधिकारे स्थितं सूत्रम् अधिकारो विधीयते ।
इतश्च प्रागपदान्ताद् यत् स्यात् तत् स्यात् पदस्य हि ॥ १०९१

**४०२। पदात्। ८।१।१७**

अधिकारे स्थितं सूत्रम् अधिकारो विधीयते।
"प्राक्कुत्सने" स्थितं सूत्रं ततः प्राग् यत् पदात् हि तत्॥ १०९२

**४०३। अनुदात्तं सर्व्वमपादादौ। ८।१।१८**

अधिकारे स्थितं सुत्रं एवमधिकृतं भवेत्।
अनुदात्तमपदादौ सर्व्वमिति त्रयं च तत्॥ १०९३

**४०४। युष्मदस्मदोः षष्ठी-चतुर्थी-द्वितीयास्थयोः वाम्-नावौ। ८।१।२०**

यदा षष्ठी चतुर्थी स्यात् द्वितीया स्याद् यदा पुनः।
युष्मदो वाम् भवेद् द्वित्वे नौ द्वित्वे चास्मदो भवेत्॥ १०९४
अनुदात्तो भवेत् वाम् सः अनुदात्तः स नौ पुनः।
पदात् परमपादादौ विविश्चाय प्रयुज्यते॥ १०९५

**४०५। वहुवचनस्य वस्नसौ। ८।१।२१**

यदा षष्ठी-चतुर्थी स्यात् द्वितीया स्याद् यदा पुनः।
युष्मदो वस् वहुत्वे स्याद् अस्मदो नस् तथा भवेत्॥ १०९६
अनुदात्तो भवेद् वस् सः अनुदात्तः स नस् पुनः।
पदात् परमपादादौ विविश्चाय प्रयुज्यते॥ १०९७

**४०६। ते मे एकवचनस्य। ८।१।२२**

यदा षष्ठी चतुर्थी स्यात् स्यादेकवचनं यदा।
युष्मदस्ते भवेत्तत्र मे भवेत् अस्मदः पुनः॥ १०९८
अनुदात्तो भवेत् ते स अनुदात्तः स मे भवेत्।
पदात् परम् अपादादौ विविश्चाय प्रयुज्यते॥ १०९९

**४०७। त्वामौ द्वितीयायाः। ८।१।२३**

द्वितीया स्याद् यदा तत्र स्यादेकवचनं यदा।
युष्मदस्त्वा भवेत्तत्र मा तत्र चास्मदो भवेत्॥ ११००
अनुदात्तो भवेत् त्वा सः अनुदात्तः स मा पुनः।
पदात् परमपादादौ विधिश्चाय प्रयुज्यते॥ ११०१
कथमिह प्रयोगः स्यात् तदुच्यते परं पुनः।
प्राचीनाः कारिकाः काश्चिद् प्रदीयन्ते यथास्थितम्॥ ११०२

"श्रीशस्त्वाऽवतु माऽपीत्र दत्तात्ते मेऽपि शर्म सः।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥ ११०३
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः।
सोऽव्याद् वो नः शिवं वो नो दद्यात् सेव्योऽत्र वः स नः" ॥ ११०४

पदात् परमिति प्रोक्तं वाक्यादौ न भवेत्ततः।
"त्वां पातु" च प्रयोगः स्यात् "त्वा पातु" न प्रयुज्यते ॥ ११०५
पुनः प्रोक्तम् "अपादादौ" पादादौ न भवेत्ततः।
"अस्मान् कृष्णः" प्रयोगः स्यात् नसित्येवं भवेन्न च ॥ ११०६
"स्थ"-ग्रहणं कृतं सूत्रे विभक्तिश्चेद् तदा भवेत्।
"युष्मत्पुत्र" विभक्तिर्न तस्माद् "तव" न युज्यते ॥ ११०७

समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः (वा)

युष्मदश्चास्मदस्तत्र समादेशा भवन्ति ये।
एकवाक्ये सदा ते स्युः निघातेऽपि तथैव च ॥ ११०८
एकतिङ् चेद् भवेद् वाक्यम् एकवाक्यं तदा भवेत्।
निघात एकवाक्ये स्यात् वामादिकं तथैव च ॥ ११०९
"हे राम ओदनं पच भक्ष्यं तव भविष्यति।"
एकवाक्यं न तावत् स्यात् तस्मात् "ते" न प्रयुज्यते ॥ १११०
"शालीनामोदनं तेऽहं दास्यामि च सुनिश्चयम्।"
एकवाक्यं भवेदत्र तस्मात् "ते" च प्रयुज्यते ॥ ११११

एते वामनावादयः आदेशा

अनवादेशे वा वक्तव्याः (वा)

वामादिकं विभाषा स्यात् अन्वादेशो न चेद् भवेद्।
अन्वादेशो यदा तत्र नित्यं खलु भवेद् विधिः ॥ १११२
"धाता ते भक्तो भवति" इत्येवं च प्रयुज्यते।
धाता तव भक्तश्चेति प्रयोगोऽपि भवेत् खलु ॥ १११३
विभाषा च प्रयोगः स्यात् इह खलु निदर्शने।
अन्वादेशो न तावत् स्यात् "ते" "तव" च तथा भवेत् ॥ १११४
अन्वादेशो यदा तत्र नित्यं खलु भवेद् विधिः।
"तस्मै ते नम" इत्यत्र नित्यं "ते" च प्रयुज्यते ॥ १११५

४०८। न चवाहाहैवयुक्ते। ८।१।२४

यदि "च" स्यात् यदि "वा" स्यात् "अह" "न" च भवेद् यदि।
"एवं" यदि भवेत्तत्र समादेशो न युज्यते ॥ १११६
"रक्षतु हरिस्त्वां मां च" भवेदिह निदर्शनम्।
त्वां मामिह प्रयोगः स्यात् "त्वा" "मा" खलु न युज्यते ॥ १११७
"युक्त" इति पदं सूत्रे मुनिनेह प्रयोजितम्।
साक्षाद्योगे निषेधः स्यात् गौणे न च निषेधनम् ॥ १११८
"हतो हरिश्च मे स्वामो" भवेदिह निदर्शनम्।
इह योगो भवेद् गौणस्तस्मात् "ने"ति न युज्यते ॥ १११९

४०९। पश्यार्थैश्चानालोचने। ८।१।२५

ज्ञानं यदि प्रतीतं स्यात् चाक्षुषं न भवेद् यदि।
तदा न ते समादेशाः "वामादिकं तदा च न ॥ ११२०
निदर्शनं भवेत्तावत् "चेतसा त्वां समीक्षते"।
इह ज्ञानं भवेदर्थः न ज्ञानं चाक्षुषं पुनः ॥ ११२१

अपि गौणे च सम्बन्धे निषेधोऽयं प्रवर्त्तते।
"भक्तस्तत्र रूपं ध्यायेद्" गौणेऽपि च निषेधनम् ॥ ११२२
चाक्षुषं चेद् भवेद् ज्ञानं समादेशो भवेत् खलु।
भक्तस्त्वा चक्षुषा खलु पश्यतीति निदर्शनम्। ११२३

४१०। सपूर्व्वायाः प्रथमाया विभाषा। ८।१।२६

प्रथमान्तात् पदात् पूर्व्वं पदमन्यद् यदा भवेत्।
समादेशो विभाषा स्यात् आवादेशो स्थितेऽपि च ॥ ११२४
निदर्शनं भवेदत्र यथा परे प्रदर्शितम्।
"भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स माम् ॥ ११२५

विधिस्तावद् विभाषा च पुनरिह प्रवर्त्तते।
तस्मात् त्वा च भवेदत्र तस्मादत्र भवेच्च मा ॥ ११२६
अपादादौ यदा च स्याद् वामादिकं प्रयुज्यते।
इह तावत् मया पूर्व्वमेतत् खलु प्रदर्शितम् ॥ ११२७
"अग्रे तव" यदा च स्यात् अपादादौ तदा भवेत्।
पदं ते च तदा तत्र भवेत् प्राप्तमिति स्थितिः ॥ ११२८

पदं "ते" च न तत्र स्यात् पदं "ते" च न युज्यते ।
विषये च पुनस्तस्मिन् सूत्रं परं प्रवर्त्तते ॥ ११२९

**४११ । साऽमन्त्रितम् । २।३।४८**

प्रथमा सम्बोधने च यदा खलु प्रयुज्यते ।
प्रथमान्तं पदं तत्र भवेद् आमन्त्रितं तदा ॥ ११३०

**४१२ । आमन्त्रितं पूर्व्वमविद्यमानवत् । ८।१।७२**

आमन्त्रितं स्थितं पूर्व्वं न स्थितमिव मन्यते ।
स्थिते तस्मिन् भवेद् यत् च न तदिह भवेत् खलु ॥ ११३१
असति यद् भवेत् कार्य्यं तत् कार्य्यं च पुनर्भवेत् ।
वामादिकः समादेशः प्रकृते च न युज्यते ॥ ११३२

"अग्ने तव" यदा तत्र "अग्ने" भवेदामन्त्रितम् ।
स्थितमपि स्थितं न तत् अपादादौ ततश्च न ॥ ११३३
अपादादौ यतो न स्यात् वावादिकं न युज्यते ।
पदं "तव" भवेत्तत्र पदं "ते" तु भवेन्न च ॥ ११३४
आमन्त्रितं स्थितं पूर्व्वं न स्थितमेव मन्यते ।
स्थिते तस्मिन् भवेद् यच्च न तदिह भवेत् खलु ॥ ११३५
असति यद् भवेत् कार्य्यं तत् कार्य्यं च पुनर्भवेत् ।
आमन्त्रितनिघातो न न तिङन्तनिघातनम् ॥ ११३६

**४१३ । नामन्त्रिते समानाधिकरणे सामान्यवचनम् । ८।१।७३**

समानाधिकरणं चेद् आमन्त्रितं भवेत् परे ।
विशेष्यम् अविद्यमानवत् न हि तदा मतं भवेत् ॥ ११३७
हरे दयालो नः पाहि भवेदिह निदर्शनम् ।
अग्ने तेजस्विन् इति च निदर्शनं परं भवेत् ॥ ११३८

**४१४ । विभाषितं विशेषवचने । ८।१।७४**

समानाधिकरणं चेद् आमन्त्रितं भवेत् परे ।
विशेष्यं यद् बहुत्वे स्यात् नाविद्यमानवत् हि तत् ॥ ११३९
स्याद् "यूयं प्रभवो देवाः शरण्या" हि निदर्शनम् ।
"युष्मान् भजे वो भजे" स्यात् समादेशो विभाषया ॥ ११४०

सुपाद्

सुपाद् सुपात् सुपादौ स्यात् सुपादः स्यात् पदं तथा ।
सुपादम् स्यात् सुपादौ स्यात् पदमिह यथाक्रमम् ॥ ११४१

सुपाद् यदा भवेच्च शब्दः प्रत्ययः शस् परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रवर्त्तते ॥ ११४२

**४१५ । पादः पत् । ६।४।१३०**

पाच्छब्दान्तं यदङ्गं भं प्रक्रियायां प्रवर्त्तते ।
तदवयवस्य पादः स्यात् पदादेश इति स्थितिः ॥ ११४३

सुपदः स्यात् पदं तत्र शस् यदा च परे भवेत् ।
सुपदा स्यात् पदं तत्र टा यदा च भवेत् परे ॥ ११४४

सुपाद्भ्यां स्यात् पदं तत्र सुपाद्भिश्च पदं भवेत् ।
शेषं पदं बुधैरूह्यं न विशेषः स्थितः क्वचित् ॥ ११४५

इति दान्ताः

**अथ थकारान्तप्रकरणम्**

अग्निमथ् (अग्नि-मन्थ+क्विप्)

अग्निमथ् स्यात् यदा शब्दः प्रत्ययः सु परे यदा ।
अग्निमत् स्यात् तदा रूपं अग्निमद् च भवेत् पुनः ॥ ११४६

अग्निमथौ पदं च स्यात् अग्निमद्भ्यां पदं भवेत् ।
अग्निमद्भिः पदं च स्यात् शेषमूह्यं पुनर्बुधैः ॥ ११४७

इति थान्ताः

प्राञ्च् (गतौ)

उपसर्गो यदा "प्र" स्यात् धातुरञ्चु गतौ यदा ।
"ऋत्विग्" इति प्रत्ययः क्विन् तदा खलु प्रयुज्यते ॥ ११४८

प्राञ्च् इति च तदा रूपं प्रजायते इति स्थितिः ।
ततः परं भवेद् योज्यं सूत्रमिह यथा परे ॥ ११४९

**४१६ । अनिदितां हल उपधायाः क्ङिति । ६।४।२४**

प्रत्ययः कित् प्रत्ययः ङित् यदा परे प्रवर्त्तते ।
अनिदितां हलन्तानामुपधायाः प्रयाति नः ॥ ११५१

नकारस्य यदा लोपः प्राच् इति च तदा भवेत् ।
सुवादिकं ततः पश्चात् प्रयुज्यते यथायथम् ॥ ११५२

यदा प्राञ्च् स्यात् यदा सु स्यात् पदं साध्यं भवेद् यदा ।
"उगिदचां" भवेद् योज्यं रूपं प्रान्च् च तदा भवेत् ॥ ११५३
"संयोगान्तस्य" च सूत्रं च पुनरिह प्रयुज्यते ।
चकारस्य भवेल्लोङ् रूपं प्रापो हि तदा भवेत् ॥ ११५४
"क्विन्"—इति च पुनः सूत्रं ततः परं प्रयुज्यते ।
कुत्वेन च ङकारः स्यात् पदं प्राङ् हि भवेद् तदा ॥ ११५५
प्राञ्चौ भवेत् ततः पश्चात् प्राञ्चः भवेत् ततः परम् ।
प्राञ्चम् प्राञ्चौ पदं पश्चात् अनुस्वारः सवर्णता ॥ ११५६
प्राच् यदा च स्थितः शब्दः प्रत्ययः शस् परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ ११५७

**४१७ । अचः । ६।४।१३८**

अञ्चतेश्चेद् नलोपः स्यात् अच् यदि च प्रजायते ।
अकारस्य तदा भस्य भवेत् खलु विलोपनम् ॥ ११५८

अकारस्य यदा लोपः "प्र च्" रूपं च तदा भवेत् ।
ततः परं पुनः सूत्रं भवेद् योज्यं यथा परे ॥ ११५९

**४१८ । चौ । ६।३।१३८**

अकारश्च नकारश्च यदा खलु विलुप्यते ।
पूर्वस्याणस्तदा दीर्घः स्यादञ्चतौ परे खलु ॥ ११६०

अकारस्य यदा दीर्घः प्र "प्रा" तदा भवेदिह ।
प्राचः भवेत् पदं तत्र पदमिष्टं तदेव हि ॥ ११६१

प्राचा भवेत् पदं तत्र विशेषस्तु न विद्यते ।
प्राङ्भ्यां भवेत् पदं तत्र न विशेषः स्थितः पुनः ॥ ११६२

प्रत्यञ्च्

प्रत्यङ् भवेत् पदं तत्र प्रत्यञ्चौ च पदं भवेत् ।
प्रत्यञ्चः स्यात् पदं तत्र विशेषश्च न विद्यते ॥ ११६३
प्रत्यञ्चं स्यात् पदं तत्र प्रत्यञ्चौ च पदं भवेत् ।
न विशेषः स्थितः कश्चित् न विशेषः प्रवर्त्तते ॥ ११६४
प्रत्यञ्च् भवेद् यदा शब्दः प्रत्ययः शस् भवेद् यदा ।
प्रतीचः स्यात् पदं तत्र विशेषो वर्त्तते खलु ॥ ११६५

प्रति अञ्च् शस् यदा तत्र सूत्रद्वयं प्रवर्त्तते ।
"इक" श्चेति भवेद् योज्यम् "अचः" योज्यं भवेत्तथा ॥ ११६६
अन्तरङ्गं भवेत् कार्य्यम् "इक"श्चेति यदा भवेत् ।
यण्निमित्तमकारो यः अन्तरेव स विद्यते ॥ ११६७
वहिरङ्गं भवेत् कार्य्यम् "अच"श्चेति यदा भवेत् ।
लोपो यः स्यादकारस्य तन्निमित्तं वहिश्च शस् ॥ ११६८
अन्तरङ्गं भवेत् कार्य्यं वहिरङ्गं भवेन्न च ।
अन्तरङ्गपरिभाषा पुनरिह प्रयुज्यते ॥ ११६९
परिभाषा परन्तु सा नेह खलु प्रवर्त्तते ।
"अकृते"ति परिभाषा गतिरिह भवेत् खलु ॥ ११७०
प्रतीचः स्यात् पदं तावद् "अकृते"ति यदा भवेत् ।
पदं तावत् प्रतीचः स्यादिष्टमिह सतां पुनः ॥ ११७१
प्रतीचा स्यात् पदं तत्र विशेषश्च न वर्त्तते ।
परं पदं वुधैर्ज्ञेयं नेह मया प्रदीयते ॥ ११७२

अमुमञ्चति इति

अदस्+अञ्च्+क्विन्

अमुमञ्चतीति तत्र विग्रहस्तु भवेद् यदा ।
प्रत्ययः क्विन् भवेद् योज्यः अदस् अञ्च् क्विन् तदा भवेत् ॥ ११७३
एवं यदा स्थितं तत्र शब्दः कार्य्यो भवेद् यदा ।
तदा सूत्रं भवेद् योज्यं यथा परे प्रदर्शितम् ॥ ११७४

**४१९ । विष्वकदेवयोश्च टेरद्र्यञ्चतौ वप्रत्यये । ६।३।९२**

अञ्चतिर्वप्रत्ययान्तो यदा परे प्रवर्त्तते ।
अनयोः सर्व्वनाम्नश्च टेरद्रि स्यात् तदा पुनः ॥ ११७५

अदस् अञ्च् क्विन् यदा तत्र टेरद्रि स्यात् यदा पुनः ।
"अदद्रि अञ्च" तदा तत्र भवेद् रूपमिति स्थितिः ॥ ११७६
अदद्रि अञ्च् यदा तत्र सन्धि र्यदा पुनर्भवेत् ।
"अदद्र्य् अञ्च्" च तदा तत्र रूपं खलु प्रजायते ॥ ११७७

अदद्र्य् अञ्च्

एवं यदा स्थितं तत्र शब्दः कार्यो भवेद् यदा ।
पुनः सूत्रं भवेद् योज्यं यथा परे प्रदर्शितम् ॥ ११७८

४२० । अदसोऽसेर्दादु दो मः । ८।२।८०

व्याख्यात्रयं स्थितं शास्त्रे शब्दत्रयं तथा भवेत् ।
व्याख्यात्रयं च सूत्रस्य यथाक्रमं प्रदर्शितम् ॥ ११७९

प्रथमा व्याख्या

दकारस्य परे यः स्यात् उद्भूत् तस्य प्रजायते ।
दकारस्य पुनः मः स्यात् असान्तश्चेद् भवेद् अदस् ॥ ११८०
उ इति च पदं सूत्रे मुनिनेह प्रदर्शितम् ।
समाहारे भवेद् द्वन्द्व उत् ऊद् इति च गृह्यते । ११८१

ह्रस्व-व्यञ्जनयोर्ह्रस्व उकारस्य भवेदिह ।
दीर्घस्य स्यात् पुनर्दीर्घं आन्तरतम्यतावशात् ॥ ११८२

अदद्र्य् अञ्च् च स्थितं तत्र पूर्वं मया प्रदर्शितम् ।
अकारश्च रकारश्च दकारात् परतो भवेत् ॥ ११८३
उकारः स्यात् उकारः स्यात् तस्य तस्य पुनर्यदा ।
अददुय् अञ्च् तदा तत्र रूपं खलु प्रजायते ॥ ११८४
दकारस्य यदा तत्र मकारश्च पुनर्भवेत् ।
अमुमुय् अञ्च् तदा तत्र रूपं भवेदिति स्थितिः ॥ ११८५
अमुमुयञ्च् तदा शब्दः प्रक्रियायां प्रजायते ।
अमुमुयञ्च् भवेच् शब्दः सुबुत्पत्तिः ततः परम् ॥ ११८६

अमुमुयञ्च्

अमुमुयञ्च् यदा शब्दः प्रत्ययः सु यदा पुनः ।
अमुमुयङ् पदं तत्र विशेषश्च न दृश्यते ॥ ११८७
पदम् अमुमुयञ्चौ स्यात् प्रत्यय औ भवेद् यदा ।
पदम् अमुमुयञ्चः स्यात् प्रत्ययो जश् यदा परे ॥ ११८८
पदम् अमुमुयञ्चं स्यात् अम् यदा च परे भवेत् ।
भवेद् अमुमुयञ्चौ च प्रत्यय औट् परे यदा ॥ ११८९
पदम् अमुमुईचः स्यात् शस् यदा च परे भवेत् ।
पदम् अमुमुईचा स्यात् टा यदा च भवेत् परे ॥ ११९०
पदम् अमुमुयग्भ्यास् स्यात् भ्याम् यदा च परे भवेत् ।
परं पदं बुधेशह्यं न विशेषः स्थितः क्वचित् ॥ ११९१

पूर्व्वपक्षः

पदम् अमुमुईचः स्यात् इति शसि प्रदर्शितम् ।
सन्धेरिह प्रसङ्गः स्यात् सन्धिर्न क्रियते कथम् ॥ ११९२

उत्तरपक्षः

मुत्वं तावदसिद्धं स्यात् तस्मात् सन्धिर्न वर्त्तते ।
"अदस" श्चाष्टमे तत्र षष्ठे "इकः" खलु स्थितम् ॥ ११९३

द्वितीया व्याख्या

दकारस्य परे यः स्यात् उदूत् तस्य प्रजायते ।
दकारस्य पुनः मः स्यात् असान्तश्चेद् भवेद् अदस् ॥ ११९४
द्वितीयो यो दकारः स्यात् तस्य भवेत् मकारता ।
प्रथमो यो दकारः स्यात् न तस्य हि तथा भवेत् ॥ ११९५
परिभाषा स्थिता शास्त्रे सा प्रमाणं भवेदिह ।
परिभाषा भवेदत्र यथा परे प्रदर्शितम् ॥ ११९६

अन्त्यबाधे अन्त्यसदेशस्य (वा)

अदद्र्य् अञ्च् स्यात् तदा तत्र पूर्व्वमेव प्रदर्शितम् ।
द्वितीयस्य विधिश्च स्यात् अदमुयञ्च् तदा भवेत् ॥ ११९७
अदमुयञ्च् यदा शब्दः प्रत्यय सु परे यदा ।
अदमुयञ्च् पदं च स्यात् विशेषेन स्थितः खलु ॥ ११९८

तृतीया व्याख्या

अः सेः यस्य स तावत् च बहुव्रीहौ भवेद् "असिः" ।
असेस्तस्य मकारः स्यात् नान्यस्य स्यात् मकारता ॥ ११९९

"त्यदादीनाम" इत्येवं यस्य भवेद् अकारता ।
तस्यैव हि मकारः स्यात् नान्यस्य च तथा भवेत् ॥ १२००
इह तावत् सकारस्य मकारता न जायते ।
"अद्रि" भवेत् समादेशः नहि भवेद् "अ"कारता ॥ १२०१
अकारता न तावत् स्यात् तस्मात् सूत्रं न युज्यते ।
मकारता ततो नास्ति मगर्भश्च न सिध्यति ॥ १२०२
"अदद्र्य् अञ्च्" यत् स्थितं पूर्व्वं तदेव खलु तिष्ठति ।
अदद्र्यञ्च् च भवेच् शब्दः स इह प्रकृतिर्भवेत् ॥ १२०३

अदद्र्यञ्च्

अदद्र्यञ्च् स्याद् यदा शब्दः प्रत्ययः सु परे यदा ।
अदद्र्यङ् स्यात् पदं तत्र विशेषश्च न दृश्यते ॥ १२०४

प्रचीना कारिका काचित् भाष्ये खलु समुद्धृता ।
इहापि भवतां तृप्त्यै सा दीयते परे मया ॥ १२०५
"अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेहि दृश्यते ॥" १२०६

उदञ्च्

उदङ् भवेत् पदं तत्र उदञ्चौ स्यात् पदं तथा ।
उदञ्चः स्यात् पदं तत्र विशेषश्च न दृश्यते ॥ १२०७
उदञ्चं स्यात् पदं तत्र स्याद् उदञ्चौ पदं पुनः ।
उदञ्च् यदा यदा शस् स्यात् सूत्रं परं प्रयुज्यते ॥ १२०८

४२१ । उद ईत् । ६।४।१३९

उत्परं स्यादञ्चेश्चेत् नकारस्य विलोपनम् ।
अकारस्य तदा भस्य भवेद् ईत् च मतां मतं ॥ १२०९

अकारस्य यदा स्याद् ईत् उदीचः स्यात् पदं तदा ।
उदीचा स्यात् पदं तत्र स्यादुदग्भ्याम पदं परम ॥ १२१०
उदञ्च् यदा यदा भिस् स्यात् उदग्भिश्च पदं भवेत् ।
परं पदं बुधेरूह्यं विशेषश्च न दृश्यते ॥ १२११

सम्यञ्च्

सम्यञ्च् यदा भवेच् शब्दः प्रत्ययः सु परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयुज्यते ॥ १२१२

४२२ । समः समि । ६।३।९३

अञ्चतिर्वप्रत्ययान्तः परे यदि प्रवर्त्तते ।
समः "समि" समादेशस्तदा खलु प्रयुज्यते ॥ १२१३

सम्यक् सम्यङ् पदं तत्र सम्यञ्चौ च पदं भवेत् ।
सम्यञ्चः स्यात् पदं तत्र विशेषश्च न दृश्यते ॥ १२१४
सम्यञ्चौ स्यात् पदं तत्र समीचः च पदं भवेत् ।
परं पदं बुधेरूह्यं विशेषश्च न दृश्यते ॥ १२१५

४२३। सहस्य सध्रिः। ६।३।९५

अञ्चतिर्वप्रत्ययान्तः परे यदि प्रवर्त्तते।
सहस्य स्यात् तदा सध्रिः रूपं सध्र्यञ्च् तदा भवेत्॥ १२१६

सध्रि + अञ्च् = सध्र्यञ्च्

सध्र्यङ् भवेत् पदं तत्र सध्र्यञ्चौ च पदं भवेत्।
सध्र्यञ्चः स्यात् पदं तत्र विशेषश्च न दृश्यते॥ १२१७
सध्रीचः स्यात् पदं तत्र सध्रीचा च पदं भवेत्।
परं पदं बुधेरूह्यं नेह मया प्रदीयते॥ १२१८

तिरस् + अञ्च् + क्विन् = तिर्य्यञ्च्

४२४। तिरसस्तिरि अलोपे। ६।३।९४

अञ्चतिर्वप्रत्ययान्तः परे यदि प्रवर्त्तते।
अकारस्य न लोपश्चेत् तिरसः स्यात् तदा "तिरि"॥ १२१९

तिरि + अञ्च् = तिर्य्यञ्च्

तिर्य्यङ् भवेत् पदं तत्र तिर्य्यञ्चौ च पदं भवेत्।
तिर्य्यञ्चः स्यात् पदं तत्र विशेषश्च न दृश्यते॥ १२२०
तिर्य्यञ्चं स्यात् पदं तत्र तिर्य्यञ्चौ च पदं भवेत्।
तिरश्चः स्यात् पदं तत्र पदमूह्यं परं बुधैः॥ १२२१

प्राञ्च् (पूजायाम्)

उपसर्गो यदा प्र स्यात् अञ्च् स्यात् पूजने यदा।
"ऋत्विग्"—इति प्रत्ययः क्विन् तदा खलु प्रयुज्यते॥ १२२२
एवं यदा स्थितं तत्र तदा प्रश्नो भवेदिह।
"अनिदिताम्" इति तत्र नकारो लुप्यते नवा॥ १२२३
एवमिह स्थिते प्रश्ने समाधानं प्रयोजनम्।
समाधाने भवेत् सूत्रं यथा परे प्रदर्शितम्॥ १२२४

४२५। नाञ्चेः पूजायाम्। ६।४।३०

अञ्चतिश्चेद भवेद् धातुः पूजा यदि प्रतीयते।
उपधाया नकारस्य न हि भवेद् विलोपनम्॥ १२२५

उपधाया नकारस्य यदा नास्ति विलोपनम्।
तदा रूपं भवेत् प्राञ्च् हि स इह प्रकृतिर्भवेत्॥ १२२६

## प्राञ्च्

प्राञ्च् यदा स्यात् यदा सु स्यात् पदं प्राङ् हि तदा भवेत् ।
नलोपो न भवेत्तत्र तस्माद् न नुम् प्रयुज्यते ॥ १२२७
प्राञ्चौ भवेत् पदं तत्र पदं प्राञ्चः तथा भवेत् ।
प्राञ्चम् प्राञ्चौ भवेत्तत्र विशेषश्च न दृश्यते ॥ १२२८
यदा प्राञ्च् स्यात् यदा शस् स्यात् पदं प्राञ्चः तदापि च ।
लोपो नास्ति नकारस्य अकारोऽपि न लुप्यति ॥ १२२९
प्राचा भवेत् पदं तत्र प्राङ्भ्याम् भवेत् पदं तथा ।
प्राङ्षु प्राङ्क्षु पदं च स्यात् पदमूह्यं परं बुधैः ॥ १२३०
प्रत्यञ्च् शस् स्यात् यदा तत्र स्याद् अञ्च् पूजने यदा ।
अकारस्य न लोपः स्यात् प्रत्यञ्चः स्यात् पदं तदा ॥ १२३१
अदद्र्यञ्च् शस् यदा तत्र स्याद् अञ्च् पूजने यदा ।
अकारस्य न लोपः स्यात् अमुमुयञ्च एव हि ॥ १२३२
उदञ्च् शस् स्यात् यदा तत्र स्याद् अञ्च् पूजने यदा ।
अकारस्य न लोपः स्यात् स्याद् उदञ्चा पदं तदा ॥ १२३३
अञ्च् यदि भवेत्तत्र पूजा यदि प्रतीयते ।
अकारस्य न लोपः स्यात् शसि तत्र च तत्र च ॥ १२३४

## क्रुञ्च्

अल्पीभावे च कौटिल्ये धातुः क्रुञ्च् प्रवर्त्तते ।
प्रत्ययः क्विन् भवेदत्र "ऋत्विगि"ति प्रयुज्यते ॥ १२३५
नलोपस्य पुनश्चात्र "अभावो यो हि दृश्यते ।
स चापि भवेत् सिद्धः पुनरिह निपातनात् ॥ १२३६

क्रुञ्च् यदा च भवेच्च् शब्दः प्रत्ययः सु भवेद् यदा ।
पदं क्रुङ् स्यात् तदा तत्र विशेषश्च न दृश्यते ॥ १२३७
क्रुञ्चौ भवेत् पदं तत्र पदं क्रुञ्चः तथा भवेत् ।
पदं क्रुङ्भ्याम् भवेत् तत्र शेषमूह्यं पदं बुधैः ॥ १२३८

## पयोमुच्

पयोमुच् स्याद् यदा शब्दः प्रत्ययः सु परे यदा ।
पयोमुक् स्यात् पयोमुग् स्यात् "चोः कुरि"ति प्रयुज्यते ॥ १२३९

पयोमुचौ पदं तत्र पयोमुचः पदं भवेत् ।
शेषमूह्यं पदं बुधैः न विशेषः स्थितः क्वचित् ॥ १२४०

सुवृश्च्

सु शोभनं वृश्चतीति प्रत्ययः क्विप् प्रयुज्यते ।
"ग्रहिज्या"—चे प्रसारः स्यात् शब्दः सुवृश्च् तदा भवेत् ॥ १२४१
सुवृश्च् यदा भवेच्च् शब्दः प्रत्ययः सु परे यदा ।
"हल्ङ्याब्भ्य"श्च भवेद् योज्यं प्रत्ययः सु विलुप्यति ॥ १२४२
सुवृश्च् तदा भवेद् रूपं व्रश्चेति युज्यते पुनः ।
चकारस्य तदा तत्र भवेत् खलु षकारता ॥ १२४३
चकारस्य षकारः स्यात् सुवृश्च रूपं तदा भवेत् ।
"स्को"रिति च पुनर्योज्यं "सः" दन्त्यश्च विलुप्यति ॥ १२४४

पूर्व्वपक्षः

दन्त्यो यदि सकारः स्यात् सूत्रं "स्कोः" युज्यते तदा ।
शकारः इह तालव्यः सूत्रं "स्कोः" युज्यते कथम् ॥ १२४५

उत्तरपक्षः

आदौ धातुर्भवेद् "व्रस्चु" दन्त्यः सः श्रूयते खलु ।
तालव्यः शो भवेत् पश्चात् "श्चुना" यदा प्रयुज्यते ॥ १२४६
दन्त्य एव सकारो हि यस्मिन्नादौ प्रवर्त्तते ।
स एव गृह्यते "व्रस्चु" आदि "व्रश्चु" हि गृह्यते ॥ १२४७
दन्त्य एव सकारो हि यदा तत्र स्थितो भवेत् ।
तदा "स्को"श्च भवेद् योज्यं बाधा काचिद् न दृश्यते ॥ १२४८
दन्त्यो भवेत् सकारो यस्तस्य भवेद् विलोपनम् ।
दन्त्यः सश्चेद् विलुप्तः स्यात् तालिव्यः शः कुतो भवेत् ॥ १२४९

पूर्व्वपक्षः

"श्चुना" यदि प्रयुक्तं स्यात् तालव्यः शः प्रजायते ।
तालव्यं शं तमाश्रित्य कार्य्यं समुचितं भवेत् ॥ १२५०

उत्तरपक्षः

"श्चुना" चेति भवेत् श्चुत्वं "श्चुना" हि चाष्टमे स्थितम् ।
श्चुत्वं तावदसिद्धं स्यात् न कार्य्यं स्यात् तदाश्रितम् ॥ १२५१

तालव्यं शं समाश्रित्य कार्य्यमिह भवेन्न च ।
दन्त्यं सं तु समाश्रित्य सूत्रं "स्को"रिह युज्यते ॥ १२५२
दन्त्यः सः स्याद् यदा लुप्तः तालव्यः शो न तिष्ठति ।
सूत्रम् भवेन् तदा रूपं ततः कार्य्यं भवेन् परम् ॥ १२५३
"झलां जश्" च प्रयुक्तं स्यात् जशत्वं तथा भवेदिह ।
"वावसाने" भवेन् चर्त्वं सुवृट् सुवृड् पदं भवेत् ॥ १२५४
सुवृश्चौ स्यात् पदं तत्र सुवृश्चः स्यात् पदं तथा ।
सुवृट्सु स्यात् सुवृट्त्सु स्यात् पदमूह्यं परं बुधैः ॥ १२५५

इति

चान्ताः

## अथ तकारान्त प्रकरणम्

### महत्

"वर्त्तमाने" स्थितं सूत्रं महत्-शब्दः प्रजायते ।
शतृवच्च भवेन् कार्य्यमित्यपि जायते पुनः ॥ १२५६

यदा महत् भवेच् शब्दः प्रत्ययः सु परे यदा ।
शतृवच्च भवेत् कार्य्यम् "उगित्"— नुम् च प्रवर्त्तते ॥ १२५७
"सान्त"—चेति स्थितं सूत्रं तदपि च प्रयुज्यते ।
उपधाया भवेद् दीर्घः रूपं महान्त् तदा भवेत् ॥ १२५८
"संयोगे"ति स्थितं सूत्रं तदपि च प्रयुज्यते ।
तकारस्य भवेल्लोपः पदं भवेत् तदा महान् ॥ १२५९
महान्तौ स्यात् पदं तत्र महान्तः स्यात् तथा पदम् ।
महान्तं स्यात् महान्तौ स्यात् महतः स्यात् पदं तदा ॥ १२६०
महता स्यात् पदं तत्र महद्भ्यां स्यात् पदं तथा ।
सम्बुद्धौ हे महत् स्याच्च सर्व्वं मया प्रदर्शितम् ॥ १२६१

### धीमत्

धीः यदा स्यात् यदा मतुप् शब्दो धीमत् भवेत् तदा ।
तद्धितान्तो भवेच् शब्दः प्रातिपदिकता ततः ॥ १२६२
धीमत् यदा भवेच् शब्दः प्रत्ययः सु परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयोजनम् ॥ १२६३

४२६। अत्वसन्तस्य चाधातोः। ६।४।१४

सु यदा स्यात् परे तत्र सम्बुद्धिर्न परे यदा।
अत्वन्तस्य भवेद् दीर्घ उपधाया इति स्थितिः॥ १२६४
असन्तश्च यदा शब्दस्तदापि च विधिर्भवेत्।
स तावद् अस् यदा धातोस्तदा विधिर्नयुज्यते॥ १२६५

यदा धीमत् यदा सु स्यात् दीर्घस्तदा भवेदिह।
पश्चान्नुम् च भवेदत्र रूपं धीमान्त् तदा भवेत्॥ १२६६
"संयोगे"ति स्थितं सूत्रं तदापि च प्रयुज्यते।
धीमान् भवेत् पदं तत्र पदमिष्टं तदेव हि॥ १२६७

पूर्व्वपक्षः

नुम्विधिस्तु भवेन्नित्यो नुम्विधिः स्यात् परोऽपि च।
तस्माद्द नुम् च भवेदादौ नुमादौ हि प्रवर्त्तते॥ १२६८

नुमो यदा प्रवृत्तिः स्यात् अत्वन्तता भवेन्न च।
न दीर्घश्च भवेत् प्राप्तः पदं धीमान् न सिध्यति॥ १२६९

उत्तरपक्षः

वचनस्य हि सामर्थ्यात् आदौ दीर्घः प्रवर्त्तते।
पश्चान्नुम च भवेत्तत्र पदं धीमान् तथा भवेत्॥ १२७०
धीमन्तौ स्यात् पदं तत्र धीमन्तः स्यात् पदं तथा।
हे धीमन् स्यात् पदं तत्र महत्-वत् च भवेत् परम्॥ १२७१
अमन्तश्चेद् भवेच्छब्दो दीर्घः खलु प्रजायते।
धातोश्चेदस् न दीर्घः स्यात् इति पूर्व्वं प्रदर्शितम्॥ १२७२
अत्वन्तश्चेद् भवेच्छब्दो गतिर्भवेत् पृथक् तदा।
धातोरपि स चेदत् स्यात् खलु दीर्घो विधीयते॥ १२७३
"गोमत् सु" स्याद्द यदा तत्र धातोरद् हि भवेत्तदा।
तथापि च भवेद् दीर्घः पदं गोमान् तथा भवेत्॥ १२७४
गोमन्तमिच्छतीति च यदा वाक्यं प्रयुज्यते।
गोमन् भवेत् तदा शब्दः क्यजन्तात् क्विप् प्रवर्त्तते॥ १२७५
गोमानिवाचरतीति वाक्यं स्यादथवा यदि।
शब्दो गोमान् तदापि स्यात् क्विबन्तात् स्तात् पुनश्च क्विप्। १२७६

आदौ तत्र धातोरत् स्यात् धातोरत् स्यात् परेऽपि च ।
तथापि च भवेद् दीर्घो दीर्घः खलु विधीयते ॥ १२७७
"उगिदचां" स्थितं सूत्रं तदापि च प्रयुज्यते ।
तेन तत्र भवेत् नुम च पदं गोमान् तथा भवेत् ॥ १२७८

पूर्व्वपक्षः

"उगिदचां" प्रयुक्तं स्यात् तेन च नुम भवेदिह ।
इति यद् भवता प्रोक्तं न साधु प्रतिभाति तत् ॥ १२७९
उगिदचां स्थितं सूत्रम् "अच" ग्रहणं कृतं खलु ।
धातोर्नुम चेद् भवेत् क्वचिद् अञ्चतेःकेवलं भवेत् ॥ १२८०
अज्-ग्रहणं कृतं सूत्रे नियमार्थं भवेत् हि तत् ।
केवलमञ्चतेरेव नुमागमो नियम्यते ॥ १२८१
अन्यो यदि भवेद्धातुर्न तावत् स्यात् नुमागमः ।
"स्रद्" अन्यः स्यात् "ध्वत्" अन्यः स्यात् नुमागमो भवेन्न च ॥ १२८२
इह "गोमत्" स्थितः शब्दो धातुरन्यो भवेदिह ।
नुमागमो न तावत् स्यात् "उगिदचां" न युज्यते ॥ १२८३

उत्तरपक्षः

अञ्चेः केवलं नुम स्यात् नान्यस्य नुम प्रयुज्यते ।
इति यद् भवता प्रोक्तं सत्यं हि तन् न संशयः ॥ १२८५
तदेव च पुनः सूत्रं योज्यमिह तथापि च ।
तेनैव नुम भवेदत्र दर्शयामि यथा परे ॥ १२८६
"उगिदचाम्" इति सूत्रे अन्यदपि पदं स्थितम् ।
"अधातो"रिति तत्र च पदं खलु प्रयोजितम् ॥ १२८७
न धातुश्चेत् स्थितः पूर्व्वं परे धातुर्भवेद् यदि ।
अधातुभूतपूर्व्वस्य भवेत् खलु नुमागमः ॥ १२८८
गोमत् इह स्थितः शब्दः क्यच् क्विप् इह प्रयुज्यते ।
क्यच् क्विप् यदा प्रयुक्तं स्यात् तदा भवेद् हि धातुता ॥ १२८९
क्यज् यदा न स्थितस्तत्र क्विप् यदा न स्थितः पुनः ।
न तदा धातुता तत्र धातुता न स्थिता तदा ॥ १२९०
क्यजुत्पत्तेः क्विबुत्पत्तेः प्राग् धातुता स्थिता हि न ।
अधातुता स्थिता तत्र सा दशा गृह्यते पुनः ॥ १२९१

अधातुता यदा च स्यात् "उगिदचां" प्रयुज्यते ।
सूत्रं यदा प्रयुक्तं स्यात् नुमपि च भवेत्तदा ॥ १२९२
नुमि पदं भवेत् गोमान् न बाधा दृश्यते क्वचित् ।
नुमागमो भवेत् प्राप्तः सर्व्वथैव न संशयः ॥ १२९३
गोमान् भवेत् पदं तत्र गोमन्तौ च पदं भवेत् ।
गोमन्तः स्यात् पदं तत्र विशेषश्च न वर्त्तते ॥ १२९४

भा + भवतु = भवत्

औणादिको यदा तत्र भातेश्च भवतुर्भवेत् ।
अत्वन्तश्च भवेच्च शब्दो दीर्घोऽपि च भवेत्ततः ॥ १२९५
भवान् भवेत् पदं तत्र दीर्घे नुमि पदं भवेत् ।
अन्यत्र न विशेषः स्यात् पदमूह्यं यथायथम ॥ १२९६

भू + शतृ = भवत्

"भू शतृ" स्याद् यदा तत्र शब्दो "भवत्" भवेत्तदा ।
अत्वन्तो न भवेच्च शब्दो दीर्घश्चापि न लभ्यते ॥ १२९७
"भवन्" भवेत् पदं तत्र दीर्घो न हि प्रयुज्यते ।
अन्यत्र न विशेषः स्यात् पदमूह्यं परं बुधैः ॥ १२९८

दा + शतृ = ददत्

दा शतृ चेद् भवेद् ददत् ऋदन्तश्च भवेत् शतृ ।
"उगिदचां" भवेत् प्राप्तं नुमपि लभ्यते तथा ॥ १२९९
परन्तु नुम् न तावत् स्याद् अभ्यस्तता भवेदिह ।
अभ्यस्तता कथं तत्र तदुच्यते प्रसङ्गतः ॥ १३००

**४२६ । उभे अभ्यस्तम् । ६।१।५**

द्वित्वप्रकरणे षष्ठे द्वे खलु विहिते स्थिते ।
अभ्यस्तमिति संज्ञा स्यात् मिलितयोस्तयोरिह ॥ १३०१

**४२७ । नाभ्यस्ताच्छतुः । ७।१।७८**

न चाभ्यस्तात् परं तत्र शतुर्नुम स्यादिति स्थितिः ।
ददत् ददद् पदं च स्यात् ददतौ ददतस्तथा ॥ १३०२

जक्षत्

जक्ष शतृ यदा तत्र शब्दो जक्षत् तदा भवेत् ।
शतृ पुनः ऋदन्तः स्यात् "उगिदचां" भवेच्च नुम् ॥ १३०३

नुमिह न भवेत् प्राप्तः स्थिता चाभ्यस्तता खलु ।
अभ्यस्तता यथा तत्र तथा सूत्रं परं भवेत् ॥ १३०४

४२८ । जक्षित्यादयः षट् । ६।१।६

अन्ये षट् धातवस्तत्र जक्षितिः सप्तमः पुतः ।
एषामभ्यस्तसंज्ञा स्यात् न तस्मात् नुम् प्रवर्त्तते ॥ १३०५
जक्षत् भवेत् पदं तत्र पदं जक्षद् तथा भवेत् ।
जक्षतौ जक्षतः स्यात्र पदमूह्यं परं बुधैः ॥ १३०६

एवं जाग्रत् दरिद्रत् स्यात् एवं शासत् भवेत् पुनः ।
एवं स्यात् चकासत् तत्र विशेषश्च न दृश्यते ॥ १३०७
दीध्यद् भवेदेवमेव व्येव्यत् एवं भवेत् पुनः ।
परस्मैपदिता वेदे ङित्वात् तङ् लोकतः खलु ॥ १३०८

इति तान्ताः

## अथ पकारान्तप्रकरणम्

### गुप्

चुरादौ गुप् यदा तत्र प्रत्ययः क्विप् परे यदा ।
गुप् तदा च भवेच्छब्दः स इह प्रकृतिर्भवेत् ॥ १३०९
गुप् गुब् स्यात्र पदं तत्र गुपौ गुपः पदं भवेत् ।
गुब्भ्याम भवेत् पदं तत्र पदमूह्यं परं बुधैः ॥ १३१०

इति पान्ताः

## अथ शकारान्तप्रकरणम्

### तादृश्

तादृश् इति स्थितः शब्दः स कथं वा भवेदिह ।
उत्पत्तिः स्यात् कथं तस्य तदिह दर्शितं परे ॥ १३११

४३० । त्यदादिषु दृशोऽनालोचने कञ् च । ३।२।६०

त्यदादिकं यदा पूर्व्वं न ज्ञाने च यदा दृशिः ।
प्रत्ययः कञ् तदा च स्यात् चकारात् क्विन् भवेदपि ॥ १३१२

तद् इह च भवेत् पूर्व्वं धातुः दृशिः भवेत् पुन ।
प्रत्ययः क्विन् भवेदत्र तद् दृश् क्विन् च तदा स्थितम् ॥ १३१३

एवं यदा स्थितं तत्र पुनः सूत्रं प्रयोजनम् ।
सूत्रमिह भवेद् योग्यं यथा परे प्रदर्शितम् ॥ १३१४

४३१ । आ सर्व्वनाम्नः । ६।३।९१

दृक् दृश् यदा परे तत्र स्याद् अवतु परे यदा ।
अन्तादेश आकारः स्यात् सर्व्वनाम्नस्तदा पुनः ॥ १३१५
तद् दृश् क्विन् च स्थितं रूपम् इति पूर्व्वं प्रदर्शितम् ।
आकारः स्याद् दकारस्य तादृश् रूपं भवेत् तदा ॥ १३१६
तादृश् इति भवेच्च शब्दः स इह प्रकृतिर्भवेत् ।
तादृश् सु स्यात् यदा तत्र तादृक् तादस् भवेत् तदा ॥ १३१७

तादृश् सु स्याद् यदा तत्र क्विन् इति "कुः" भवेदिह ।
परं कुत्वम् असिद्धं स्यात् न कार्य्यं स्यात् तदाश्रितम् ॥ १३१८
"व्रश्चे"ति च स्थितं सूत्रं तदिह च प्रयुज्यते ।
तादृश् इति शकारस्य तथा भवेत् षकारता ॥ १३१९
तादृष् तदा भवेत्तत्र "झलां जश्" च प्रयुज्यते ।
षकारस्य डकारः स्यात् रूपं तादृड् तदा भवेत् ॥ १३२०
क्विन् इति च स्थितं तत्र तत्तदा च प्रयुज्यते ।
डकारस्य कवर्गं स्यात् रूपं तादृग् तदा भवेत् ॥ १३२१
"वावसाने" स्थितं सूत्रं तत् तदा च प्रयुज्यते ।
गकारस्य ककारः स्यात् रूपं तादृक् तदा भवेत् ॥ १३२२
तादृक् स्याच्च पदं तत्र तादृग् स्याच्च पदं पुनः ।
सु यदा स्यात् परे तत्र पदद्वयं तथा भवेत् ॥ १३२३
तादृशौ स्यात् पदं तत्र तादृशः स्यात् पदं पुनः ।
सु औ जश् स्यात् यदा तत्र पदं भवेत् तथा तथा ॥ १३२४

तादृक् चेति ककारान्तं पदं तत्र प्रदर्शितम् ।
स्थितश्चात्र मते भेदः तदुच्यते परे मया ॥ १३२५

कैयटमतम्

"तादृश् सु" स्याद् यदा तत्र पदं तादृख् तदा भवेत् ।
खकारान्तं पदं च स्यात् ककारान्तं न सिध्यति ॥ १३२६

"व्रश्चे"ति च शकारस्य भवेत् खलु षकारता।
"क्विन्नि"ति च भवेत्तावत् शकारता कवर्गता ॥ १३२७
"व्रश्चेति" यत् स्थितं सूत्रं तदिह न प्रयुज्यते ।
"क्विन्नि"ति यत् भवेत् सूत्रं तदेव युज्यते खलु ॥ १३२८
अपवादे च पूर्व्वस्य परं सूत्रं भवेदिह ।
अपवादे च षत्वस्य कुत्वमिह भवेद् वरम् ॥ १३२९
शकारस्य कवर्गश्च यदा प्राप्तो भवेदिह ।
तदा खलु भवेत् प्रश्नः को वा वर्गो भवेत् पुनः ॥ १३३०
सदृशतम आदेशः पुनरिह प्रयुज्यते ।
शकारस्य खकारो हि स्यात् सदृशतमः खलु ॥ १३३१
अघोषश्च महाप्राणः शकारो हि सतां मते ।
अघोषश्च महाप्राणः खकारो हि पुनर्मतः ॥ १३३२
सदृशतम आदेशो यदा खलु प्रयुज्यते ।
शकारस्य खकारो हि तदा प्राप्तो भवेदिह ॥ १३३३
शकारस्य खकारश्च यदा तत्र प्रयुज्यते ।
तादृख् स्याच्च पदं तत्र खकारान्तं भवेत् पदम् ॥ १३३४

## हरदत्तमतम्

"तादृश् सु" स्याद् यदा तत्र पदं तादृश् तदा भवेत् ।
खकारान्तं पदं च स्यात् गकारान्तं न सिध्यति ॥ १३३५
"क्विन्नि"ति च कवर्गः स्यात् तेन भवेत् खकारता ।
"झलां जश्" च भवेद् योज्यं गकारता तदा भवेत् ॥ १३३६
"क्विन्नि"ति यत् स्थितं शास्त्रं परे तच्च प्रवर्त्तते ।
"झलां" यच्च स्थितं शास्त्रं पूर्व्वं हि तत् स्थितं खलु ॥ १३३७
पूर्व्वं प्रति परं शास्त्रमसिद्धं स्यादिति स्थितिः ।
जश्त्वं प्रति चासिद्धं स्यात् कुत्वमिह च सर्व्वथा ॥ १३३८
"क्विन्निति यः खकारः स्यात् स चासिद्धो भवेदिह ।
"झलाम्" इति गकारस्तु तस्मादिह न वर्त्तते ॥ १३३९
तादृख् चेति खकारान्तं पदं खलु भवेदिह ।
तादृग् चेति गकारान्तं पदं खलु न सिध्यति ॥ १३४०

मन्तव्याम

षकारो यो भवेदत्र स चासिद्धो भवेदिह ।
इति यत्र भवेदुक्तं न सङ्गतं भवेदि तत् ॥ १३४१
खकारं तु समाश्रित्य सकारो वर्त्तते खलु ।
"दिगादिभ्यः" स्थितं सूत्रं प्रमाणं तद् भवेदिह ॥ १३४२
तादृग् चेति गकारान्तं पदं तस्माच्च सिध्यति ।
तादृग् चेति गकारान्तं पदं ग्राह्यं भवेदिह ॥ १३४३

विश्

विश् यदा स्यात् यदा क्विन् स्यात् शब्दश्च विश् तदा भवेत् ।
विश् इह च भवेच् शब्दः सुबुत्पत्तिस्ततः परम् ॥ १३४४
विश् यदा स्यात् यदा सु स्यात् हलङ्याब्भ्यश्च प्रयुज्यते ।
सुलोपश्च भवेत्तत्र रूपं विश् च तदा भवेत् ॥ १३४५
व्रश्चेति यत् स्थितं सूत्रं तदपि च प्रयुज्यते ।
शकारस्य तदा तत्र भवेत् खलु षकारता ॥ १३४६
झलां जश् च भवेद् युक्तं षकारस्य डकारता ।
विड् भवेच्च तदा तत्र पदमिष्टं तदेव हि ॥ १३४७
"वावसाने" स्थितं सूत्रं तदपि च प्रयुज्यते ।
चर् विभाषा भवेत्तत्र पदं च विट् तदा भवेत् ॥ १३४८

विट् विड् भवेत् पदं तत्र पदं विशौ भवेत् पुनः ।
विशः स्याच्च पदं यत्र विशम् पदं भवेत् तथा ॥ १३४९

नश्

नश् यदा स्यात् यदा सु स्यात् पदं साध्यं भवेद् यदा ।
सूत्रं तदा भवेद् योज्यं यथा परे प्रदर्शितम् ॥ १३५०

४३२ । नशेर्वा । ८।२।६३

अन्तादेशः कवर्गः स्याद् पदान्ते च नशेरिह ।
आदेशो यो भवेच्चायं स भवेच्च विभाषया ॥ १३५१
नट् नड् स्याच्च पदं तत्र नक् नग् स्याच्च पदं तथा ।
सु यदा स्यात् परे तत्र पदचतुष्टयं तदा ॥ १३५२

घृतस्पृश्

यदा "घृतं स्पृशती"ति वाक्यमिह प्रयुज्यते ।
प्रत्ययः क्विन् तदा तत्र सूत्रमत्र परं भवेत् ॥ १३५३

४३३ । स्पृशोऽनुदके क्विन् । ३।२।५८

पूर्व्वं यदि सुबन्तं स्यात् उदकं चेत् न पूर्व्वतः ।
स्पृशः क्विन् प्रत्ययः स्याच्च घृतस्पृश् स्यात् तथा पुनः ॥ १३५४

"घृतस्पृश् सु" यदा तत्र घृतस्पृक् स्यात् पदं तदा ।
घृतस्पृग् स्यात् पदं तथा ष-ड़-ग काः यथायथम् ॥ १३५५

क्विप् प्रत्ययो भवेद् यस्मात् स हि क्विन्-प्रत्ययो भवेत् ।
एवं चेत् स्यात् बहुव्रीहि क्विपि चापि भवेच्च कुः ॥ १३५६

स्पृशतीति यदा क्विप् स्यात् शब्दः स्पृश् च तदा भवेत् ।
शब्दः स्पृश् च प्रकृतिः स्यात् सुबुत्पत्तिः ततः परम् ॥ १३५७
यदा "स्पृश सु" भवेदत्र पदं च स्पृक् तदा भवेत् ।
इहापि च भवेत् कुत्वं पूर्व्ववच्च यथायथम् ॥ १३५८

इति शान्ताः

## अथ षकारान्तप्रकरणम्

दधृष्

ञि धृषा च स्थितो धातुः प्रागल्भ्ये च प्रवर्त्तते ।
"ऋत्विग्" इति भवेद् योज्यं प्रत्ययः क्विन् तथा भवेत् ॥ १३५९
निपातनाद् भवेद् क्वित्त्वम् आन्तोदात्तं निपातनात् ।
दधृष् स्याच्च तदा शब्दः स इह प्रकृतिर्भवेत् ॥ १३६०

दधृष् सु स्याद् यदा तत्र दधृक् दधृग् पदं भवेत् ।
आदौ जश्त्वे डकारः स्यात् पश्चात् कुत्वं प्रवर्त्तते ॥ १३६१
दधृषौ स्यात् पदं तत्र दधृषः स्यात् पदं तथा ।
दधृग्भ्यां च पदं तत्र पदमूह्यं परं बुधैः ॥ १३६२

रत्नमुष्

रत्नानि मुष्णातीति चेत् यत्नमुष् च भवेदिह ।
रत्नमुष् सु यदा तत्र रत्नमुट् रत्नमुड् भवेत् ॥ १३६३

रत्नमुषौ भवेत्तत्र रत्नमुषः पदं तथा ।
विशेषो न स्थितः कश्चित् पदमूह्यं परं बुधैः ॥ १३६४

षष्

षष् यदा च भवेच्छब्दः जश् शस् यदा परे भवेत् ।
"षड्भ्यो लुक्" च भवेद् योज्यं जश्शसोर्लुक् भवेत्तथा ॥ १३६५
षट् भवेच्च पदं तत्र षड् भवेच्च पदं तथा ।
जसि षट् षड् शसि षट् षड् उभयत्र समं पदम् ॥ १३६६
षष् यदा स्यात् यदा भिस् स्यात् षड्भिः भवेत् पदं तदा ।
षष् यदा स्यात् यदा भ्यस् स्यात् षड्भ्यः पदं तदा भवेत् ॥ १३६७
षष् यदा स्यात् यदा स्याद् आम् पदं षण्णाम् भवेत्तदा ।
इह तावद् विशेषः स्यात् विशेष उच्यते परे ॥ १३६८
षष् यदा स्यात् यदा स्याद् आम् "षट्चतुर्भ्यः" प्रयुज्यते ।
नुटागमो भवेत्तत्र रूपं षट् नाम तदा भवेत् ॥ १३६९
"न पदान्ताट्टोरनाम्" च पुनरिह प्रसज्यते ।
"अनामिति" भवेदुक्तं ष्टुत्वं तस्माद् भवेदिह ॥ १३७०
ष्टुत्वं यदा भवेत्तत्र षट् णाम् रूपं भवेत्तदा ।
"यरोऽनुनासिके" सूत्रं पुनः प्राप्तं भवेदिह ॥ १३७१
विकल्प इह च प्राप्तः बाधितश्च भवेत् खलु ।
"प्रत्यये भाषायां नित्यम्" तत्सूत्रे वार्त्तिकं स्थितम् ॥ १३७२
वार्त्तिकं बलवत् स्याच्च नित्यं स्यादनुनासिकः ।
टकारस्य यदा तत्र स्यादनुनासिकः पुनः ॥ १३७३
"षण्" भवेच्च तदा तत्र परे "णाम्" च स्थितं पुनः ।
यदा द्वयोर्भवेद् योगः पदं षण्णाम् तदा भवेत् ॥ १३७४

षष् यदा स्यात् यदा स्यात् सुप् षट्सु पदंभवेत्तदा ।
षट्त्सु चापि पदं तत्र पदद्वयं भवेत् सुपि ॥ १३७५

प्रियषष्-षष् मुख्ये

समासो वा भवेत्तत्र षष् मुख्ये चेन् प्रवर्त्तते ।
"षड्भ्यो लुक्" च "षट्चतुर्भ्यः" सममेव प्रयुज्यते ॥ १३७६
परमषष् यदा तत्र जश् शस् यदा परे भवेत् ।
परमषट् परमषड् पदं भवेत् समं खलु ॥ १३७७

परमषष् यदा तत्र प्रत्यय आम् परे यदा ।
पदं स्यात् परमषण्णाम् पूर्व्ववत् प्रक्रिया भवेत् ॥ १३७८
केवलं षष् यदा तत्र तदा यो यो विधिर्भवेत् ।
समासे षष् यदा मुख्ये स स विधिस्तदापि च ॥ १३७९
तस्मिन् भवेद् यथा तत्र तदन्तेऽपि तथा भवेत् ।
षषि यथा तथैव स्यात् परमषषि निश्चितम् ॥ १३८०

प्रियषष्-षष् गौणे

समासः स्याद् यदा तत्र गौणो षष् च भवेद् यदा ।
न तदा तु भवेत्तत्र पूर्व्वं यथा प्रदर्शितम् ॥ १३८१
प्रियषष् स्याद् यदा तत्र षष् गौणो च भवेद् यदा ।
जशि शसि परे तत्र प्रियषषः पदं भवेत् ॥ १३८२
आम् यदा स्यात् परे तत्र प्रियषषम् पदं तदा ।
"षड्भ्यो लुक् "च" षट् चतुर्भ्यः" नेह खलु प्रयुज्यते ॥ १३८३

पिपठिष्

पिपठिष् च भवेद् धातुः प्रत्ययः क्विप् प्रयुज्यते ।
पिपठिष् स्यात् तदा शब्दः सुबुत्पत्तिस्ततः परम् ॥ १३८४
पिपठिष् सु यदा तत्र "हल्ङ्याब्भ्यः" सु विलुप्यति ।
पिपठिष् च तदा रूपं भवेत् प्राप्तमिति स्थितिः ॥ १३८५
"ससजुषोः स्थितं सूत्रं तत्तदा च प्रयुज्यते ।
सकारस्य रकारः स्यात् पिपठिर् च तदा भवेत् ॥ १३८६

पूर्व्वपक्षः

मूर्द्धन्यः षः स्थितस्तत्र दन्त्यः स न स्थितः पुनः ।
"ससजुषोः" कथं योज्यं दन्त्यस्य हि विधिर्भवेत् ॥ १३८७

उत्तरपक्षः

"इणः ष"श्च स्थितं सूत्रं मूर्धन्यः षस्तथा भवेत् ।
"इणः यश्च" स्थितं पश्चात् अष्टकस्य क्रमे खलु ॥ १३८८
षत्वं तस्मादसिद्धं स्यात् न स्थितम् इव मन्यते ।
आदौ दन्त्यः सकारो यः स इह गृह्यते खलु ॥ १३८९
दन्त्यो यदा सकारः स्यात् "ससजुषोः" प्रयुज्यते ।
रुत्वं तथा भवेत् प्राप्तं पिपठिर् स्यात् तथा पुनः ॥ १३९०

ह्रस्वं यदा भवेत्तत्र पिपठिर् च तदा भवेत् ।
पश्चात् सूत्रं भवेद् योज्यं यथा परे प्रदर्शितम् ॥ १३९१

४३४ । **र्वोरुपधाया दीर्घ इकः ।** ८।२।७६

वान्तो यदा भवेच्च शब्दः रान्तः शब्दो यदा भवेत् ।
उपधाया इको दीर्घस्तदा खलु प्रसज्यते ॥ १३९२
उपधाया यदा दीर्घः पिपठीर् स्यात् तदा पुनः ।
पिपठीर् स्यात् पदं चात्र पदमिष्टं तदेव हि ॥ १३९३

पिपठिषौ पदं च स्यात् पिपठिषः पदं भवेत् ।
पिपठीर्भ्याम् पदं च स्यात् पदमूह्यं परं बुधैः ॥ १३९४

पिपठिष् सुप् यदा तत्र पदं साध्यं भवेद् यदा ।
प्रक्रिया स्यात् तदा तत्र यथा परे प्रदर्शिता ॥ १३९५
पिपठिष् सुप् यदा तत्र सूत्रमेतत् प्रयुज्यते ।
एतेन च भवेद् दीर्घः पिपठीष् सु तदा भवेत् ॥ १३९६
"वा शरि" च भवेद् योज्यं विसर्गः स्याद् विभाषया ।
पिपठीःसु तदा तत्र रूपं भवेदिति स्थितिः ॥ १३९७
"सु" चेति यः सकारः स्यात् इणः कोर्न परे च सः ।
"आदेशप्रत्यये"ति च सकारोऽपि भवेत् पुनः ॥ १३९८
न तस्माच्च सकारस्य तस्य भवेत् षकारता ।
सूत्रमन्यद् भवेद् योज्यं षकारता यथा भवेत् ॥ १३९९

४३५ । **नुम्विसर्जनीयशर्व्यवायेऽपि ।** ८।३।५८

प्रत्येकं व्यवधानेऽपि सकारस्य षकारता ।
इणः परे यदि स्यात् सः कोः परे सः भवेद् यदि ॥ १४००
विसर्गेन व्यवायश्च पुनरिह प्रवर्त्तते ।
इणः परं सकारोऽपि तस्मात् षत्वं भवेदिह ॥ १४०१
षत्वं यदा भवेत्तत्र पिपठीः षु तदा भवेत् ।
तदेकं च पदं तत्र सुपि परे भवेदिह ॥ १४०२

अपरं च पदं तत्र सुपि प्राप्तं भवेदिह ।
पिपठीष्षु पदं तत् च तत् दर्शितं परे यथा ॥ १४०३

"वा शरि" स्याद् यदा तत्र विसर्गः स्याद् विभाषया।
विसर्गो न यदा तत्र दन्त्यो हि "सः" तदा भवेत्॥ १४०४
"पिपठीस् सु" तदा तत्र रूपं भवेदिति स्थितिः।
द्वितीयस्य सकारस्य भवेत् पुनः षकारता॥ १४०५
प्रथमेन सकारेण व्यवधानं शरा स्थितम्।
इणः परं भवेच्चापि ईकाराद्धि परे भवेन्॥ १४०६
द्वितीयस्य सकारस्य यदा भवेत् षकारता।
पिपठीस् षु तदा तत्र स्थितं रूपमिति स्थितिः॥ १४०७
एवं यदा स्थितं तत्र "ष्टुना ष्टु"श्च प्रयुज्यते।
प्रथमस्य सकारस्य पुनर्भवेत् षकारता॥ १४०८
एवं यदा भवेत्तत्र पिपठीष्षु पदं भवेत्।
पदं तद्धि द्वितीयं स्यात् तथापि च पदं सुपि॥ १४०९
एकस्य चेदधिकेन व्यवधानं भवेत् क्वचित्।
न तदा च भवेत् षत्वमिति ज्ञेयं भवेदिह॥ १४१०
निंस्स्व निंस्से पदं तत्र व्यवधानं द्वयेन च।
न च तस्मात् भवेत् षत्वं दन्त्यः स हि स्थतः खलु॥ १४११

पूर्व्वपक्षः

"शरि"ति च पदं सूत्रे मुनिनेह प्रयोजितम्।
शरिति चेद् भवेदुक्तमनुस्वारोऽपि गृह्यते॥ १४१२
"शर्षु जश्भावषत्वे" च वार्त्तिकं तत्र वर्त्तते।
अनुस्वारः शरा ग्राह्यः षत्वाय हि प्रकल्पते॥ १४१३
षत्वार्थमनुस्वाराय पुन "नुम" न प्रयोजनम्।
"शर्" इति वर्त्तते सूत्रे तेनैव हि गतार्थता॥ १४१४

उत्तरपक्षः

"नुम" इति यत् पदं सूत्रे न हि तत् स्याद् निरर्थकम्।
"शर्" इति ग्रहणात् सूत्रे नापि तत्र गतार्थता॥ १४१५
"नुम" इति च पदं सूत्रे मुनिनेह प्रयोजितम्।
नुमो यः स्यादनुस्वारः स इह लक्षितो भवेत्॥ १५१६
नुमो यः स्यदनुस्वारस्तेन व्यवहितं यदि।
तदा तत्र भवेत् षत्वं यजूंषि च निदर्शनम्॥ १४१७

अन्यश्चेत् स्यादनुस्वारो न हि षत्वं भवेत् तदा ।
"सुहिन्सु पुंसु" चान्यः स्यात् षत्वं तस्मात् न वर्त्तते ॥ १४१८
अनुस्वारः शरा ग्राह्यो नेह खलु विवक्षितः ।
अनुस्वारः शरा ग्राह्यो नेह वा लक्षितो भवेत् ॥ १४१९
"शर्" इति चेद् भवेदुक्तं लक्ष्यं सिद्धं भवेन्न च ।
"शर्" इति चेद् भवेदुक्तम् इष्टम् उक्तं भवेन्न हि ॥ १४२०
नुमो यः स्यादनुस्वारः स षत्वाय प्रकल्पते ।
एतद् दर्शयितुं सूत्रे "नुम्" इत्यस्य प्रयोजनम् ॥ १४२१
शर् ग्रहणात् न चात्र च गतार्थता कथञ्चन ।
"नुम्" इत्यस्य पृथङ्न्यासः सूत्रे खलु प्रयोजनम् ॥ १४२२

चिकीर्ष

चिकीर्षतेर्यदा क्विप् स्यात् चिकीर्ष् शब्दस्तदा भवेत् ।
प्रकृतिः स्याद् इह चिकीर्ष् सुबुत्पत्तिस्ततः परम् ॥ १४२३
चिकीर्ष् यदा यदा सु स्यात् "हल्ङ्याब्भ्यः" सु विलुप्यति ।
सु यदा च विलुप्तः स्यात् रूपं चिकीर्ष् तदा भवेत् ॥ १४२४
"रात्सस्य" च स्थितं सूत्रं तत्तदा च प्रयुज्यते ।
सकारस्य भवेल्लोपः पदं चिकी तदा भवेत् ॥ १४२५

पूर्व्वपक्षः

चिकीर्ष् इति षकारः स्यात् स चासिद्धो भवेदिह ।
चिकीस् इति सकारान्तं रूपं खलु च गृह्यते ॥ १४२७
"रात् सस्य" च भवेद् युक्तं सकारश्च विलुप्यति ।
तदा भवेत् पदं चिकीः पदमिष्टं तदेव हि ॥ १४२८
चिकीर्ष् यदा यदा सुप् स्यात् चिकीर्ष् स्यात् पदं तदा ।
"रो सुपि" नियमात् तत्र न विसर्गः प्रवर्त्तते ॥ १४२९
रोरेव चेद् रकारः स्यात् विसर्गः स्यात् तदैव च ।
रोरिह न रकारः स्यात् विसर्गो न भवेत्ततः ॥ १४३०

दोष्

दम् यदा च भवेद् धातु डोस् यदा स्यादुणादिके ।
दोष् भवेच्च तदा शब्दः डित्वादम च विलुप्यति ॥ १४३१
दोष् यदा च भवेच् शब्दः प्रत्ययः सु परे यदा ।
"हल्ङ्याब्भ्य"श्च भवेद् योज्यं रूपं दोष् स्यात् तदा पुनः ॥ १४३२

"ससजुषोः" स्थितं सूत्रं तत् पुनश्च प्रयुज्यते ।
सकारस्य भवेद् रुत्वं विसर्गः स्यात् भवेच्च दोः ॥ १४३३

**पूर्व्वपक्षः**

दोष् यदा च भवेच् शब्दो मूर्द्धन्य षः भवेत् तदा ।
"ससजुषोः" कथं योज्यं दन्त्यः सः न स्थितः खलु ॥ १४३४

**उत्तरपक्षः**

षत्वं तावदसिद्धं स्यात् मूर्धन्यः षो न गृह्यते ।
दोस् इति सो भवेद् दन्त्यः स इह गृह्यते पुनः ॥ १४३५

दोषो भवेत् पदं तत्र पदं दोषः भवेत् तथा ।
दोषम् दोषौ भवेत् तत्र विशेषो न स्थितः क्वचित् ॥ १४३६
दोष् यदा स्यात् यदा शस् स्यात् पदं दोषस्तदा भवेत् ।
"पद्दन्" इति प्रयुक्तं चेत् दोष्णः स्याच्च पदं तदा ॥ १४३७
दोष्णा दोषा यदा टा स्यात् दोष्णे दोषे यदा च ङे ।
भ्यामादिके न चान्यत्र विशेषो वर्त्तते क्वचित् ॥ १४३८

**विविक्ष्**

यदा वेष्टुमिच्छतीति विग्रहस्तु भवेदिह ।
विशेः सन् प्रत्ययस्तत्र "हलन्ताच्च" गुणो न हि ॥ १४३९
"सन्यङो"श्च भवेद् द्वित्वं हलादिः शिष्यते पुनः ।
"व्रश्चे"ति च शकारस्य भवेत् खलु षकारता ॥ १४४०
"षढोः कः सि" स्थितं सूत्रं तदपि च प्रयुज्यते ।
षकारस्य ककारस्तु तथा खलु प्रजायते ॥ १४४१
प्रत्ययस्यावयवत्वात् सस्य षत्वं भवेत् पुनः ।
"विविक्ष च तदा तत्र रूपं खलु प्रजायते ॥ १४४२
"सनाद्यन्ताः"—स्थितं सूत्रं धातुता च भवेत् तदा ।
धातुता स्याद् यदा तत्र क्विप् चापि प्रत्ययो भवेत् ॥ १४४३
"विविक्ष क्विप्" तदा तत्र रूपं भवेद् इति स्थितिः ।
"अतो लोपः" भवेद् योज्यं विविक्ष् रूपं तदा भवेत् ॥ १४४४

विविक्ष् यदा भवेच् शब्दः प्रत्ययः सु परे यदा ।
"हल्ङ्याब्भ्यः" च भवेद् योज्यं प्रत्ययः सु विलुप्यति ॥ १४४५

प्रत्ययः सु यदा लुप्तो रूपं विविक्ष् तदा पुनः ।
"संयोगान्त"—सकारस्य पुनर्भवेत् विलोपनम् ॥ १४४६
षकारस्य यदा लोपः विविक् रूपं तदा भवेत् ।
एवं यदा स्थितं तत्र परे कार्य्यं भवेद् यथा ॥ १४४७

पूर्व्वपक्षः

विविक् यदा स्थितं तत्र स्कोरिति च प्रयुज्यते ।
अन्त्यस्य च ककारस्य तथा लोपः प्रसज्यते ॥ १४४८

उत्तरपक्षः

"षढोः कः सि:" परं शास्त्रं तेन कश्च भवेदिह ।
स चासिद्धो भवेदत्र "स्कोरिति कः" न लुप्यति ॥ १४४९

रूपं विविक् स्थितं तत्र पूर्व्वमेव प्रदर्शितम् ।
"व्रश्चे"ति च शकारस्य भवेत् खलु षकारता ॥ १४५०

पूर्व्वपक्षः

रूपं विविक् यदा तत्र ककारो हि तदा भवेत् ।
शकारो न भवेत्तत्र "व्रश्चे"ति वा भवेत् कथम् ॥ १४५१

उत्तरपक्षः

रूपं विविक् स्थितं तत्र ककार एव हि स्थितः ।
तथापि च भवेद् "व्रश्च"—दर्शयामि यथा परे ॥ १४५२
सनो दन्त्यः सकारो हि यदा परे प्रवर्त्तते ।
तदेव तं समाश्रित्य "षढोः कः सि:" भवेद् हि कः ॥ १४५३
ककारे च निमित्तं स्यात् स सकारः सनः खलु ।
सकारश्च यदा लुप्तः ककारोऽपि विलुप्यति ॥ १४५४
निमित्तं न यदा तत्र नैमित्तिकं न तिष्ठति ।
न यदा सः न तदा कः मूर्द्धन्यः षस्तदा भवेत् ॥ १४५५
विविष् तदा भवेत्तत्र मूर्द्धन्यः षो भवेत् यदा ।
व्युत्क्रमेण विविष् चेति रूपं तत्र च लभ्यते ॥ १४५६
विविष् इति षकारे च निमित्तं झल् पुरा स्थितम् ।
झलं तु तं समाश्रित्य "व्रश्चे ति" च प्रयोजितम् ॥ १४५७
सनो दन्त्यः सकारोः यः स खलु झल् भवेदिह ।
झलो यदा भवेल्लोपः "व्रश्चे ति" च प्रयोजितम् ॥ १४५८

निमित्तं न यदा तत्र नैमित्तिकं न तिष्ठति ।
न यदा सः न तदा षः तालव्यः शस्तदा भवेत् ॥ १४५९
तालव्यशो यदा तत्र विविश् रूपं भवेत्तदा ।
व्यत्क्रमेण पुना रूपं विव्रिश् चेति च लभ्यते ॥ १४६०
विव्रिश् भवेद् यदा तत्र तालव्यः शो भवेद् यदा ।
"व्रश्चे"ति च तदा सूत्रम् अवश्यं युज्यते खलु ॥ १४६१

"व्रश्चेति" च यदा युक्तं मूर्द्धन्यः षस्तदा भवेत् ।
विविश् इति तदा तत्र भवेद् रूपमिति स्थितिः ॥ १४६२
"झलां जश्" च भवेद् योज्यं रूपं विविड् तदा भवेत् ।
"वावसाने" विभाषा चर् पदं विविट् भवेत् तथा ॥ १४६३

विविक्षौ स्यात् पदं तत्र विविक्षः स्यात् पदं तथा ।
अन्यत्र न विशेषः स्यात् आरभ्यते परं पुन ॥ १४६४

तक्ष्

तक्षु स्थितस्तनूकारे तस्मात् क्विप् च प्रयुज्यते ।
तक्ष् तत्र च भवेद् शब्दः स इह प्रकृतिर्भवेत् ॥ १४६५
यदा तक्ष् स्यात् यदा सु स्यात् हल्ङ्याभ्यश्च प्रयुज्यते ।
प्रत्ययः सु विलुप्तः स्यात् रूपं तक्ष् च तदा भवेत् ॥ १४६६
"को"रिति च भवेद् योज्यं ककारस्य विलोपनम् ।
तष् भवेच्च तदा रूपं तट् तड् पदं ततो भवेत् ॥ १४६७
तक्षौ भवेत् पदं तत्र तक्षः स्याच्च पदं परम् ।
अन्यत्र न विशेषः स्यात् आरभ्यये परं पुनः ॥ १४६८

गोरक्ष् ( गो + रक्ष् + क्विप्

गोरट् गोरड् पदं तत्र पूर्व्ववच्च भवेत् पदम् ।
गोरक्षौ स्यात् गोरक्षः स्यात् विशेषो न स्थितः पुनः ॥ १४८९

गोरक्ष् (गो + रक्ष + णिच् + क्विप् + णिलोपः)

तक्ष् (तक्ष् + णिच् + क्विप् णिलोपः)

तक्ष् रक्ष् तत्र स्थितो धातुः "हेतुमति" भवेच्च णिच् ।
तक्षि रक्षि तदा च स्याद् "सनाद्यन्ताः"-- च धातुता ॥ १४७०

धातुता स्याद् यदा तत्र प्रत्ययः क्विप् प्रयुज्यते ।
"णेरनिटि" णिचो लोपः क्विपपि च विलुप्यति ॥ १४७१
तक्ष् रक्ष् तदा भवेच् शब्दः स स च प्रकृतिर्भवेत् ।
ततः परं सुबादिकं भवेत्तत्र यथायथम् ॥ १४७२
तक्ष् यदा च भवेच् शब्दः प्रत्ययः सु परे यदा ।
"हल्ङ्याब्भ्य"श्च भवेद् योज्यं प्रत्ययः सु विलुप्यति ॥ १४७३
सु यदा च विलुप्तः स्यात् रूपं तक्ष् च तदा भवेत् ।
पुनः प्रश्नो भवेदत्र "स्को"रिति युज्यते न वा ॥ १४७४
"स्को"रिति यत् स्थितं सूत्रं तदिह तु न युज्यते ।
णिलोपो यो भवेदत्र स स्थानिवत् भवेत् खलु ॥ १४७५
णिः यदा स्यात् परे तत्र सूत्रं "स्कोः" न प्रयुज्यते ।
ककारस्य ततो नास्ति पुनरिह विलोपनम् ॥ १४७६

पूर्व्वपक्षः

पूर्व्वत्रासिद्धे न स्थानिवत् (वा)

न च पूर्व्वत्रासिद्धीये स्थानिवत्त्वं प्रसज्यते ।
वार्त्तिकं तु स्थितं तत्र प्रमाणं तद् भवेत् खलु ॥ १४७७

उत्तरपक्षः

तस्य दोषः संयोगादिलोप लत्व-णत्वेषु (वा)

संयोगादे विलोपश्चेत् लत्वं णत्वं भवेद् यदि ।
भवेच्च स्थानिवद्भावः स्थानिवत्त्वं हि गृह्यते ॥ १४७८
संयोगादे विलोपश्च प्रकृते विषयो भवेत् ।
स्थानिवत्त्वं ततश्च स्यात् स्थानिवत्त्वं च गृह्यते ॥ १४७९
यद्यपि णेर्विलोपः स्यात् णिः स्थित इव मन्यते ।
णेरिति स्कोः ककारस्य न प्राप्नोति विलोपनम् ॥ १४८०
संयोगान्तस्य विलोपस्तत एव गतिर्भवेत् ।
षकारस्य तथा तत्र भवेत् खलु विलोपनम् ॥ १४८१
षकारस्य यदा तत्र तथा भवेद् विलोपनम् ।
तक् तदा भवेद् तत्र पदमिष्टं तदेव हि ॥ १४८२
तग् चापि च पदं तत्र यथायथं भवेत् खलु ।
तक्ष् यदा स्यात् यदा सु स्यात् पदद्वयं भवेत् तथा ॥ १४८३

रक्ष् इह चेद् भवेत् शब्दः समा खलु गतिर्भवेत् ।
गोरक्ष् यदा भवेच्च् शब्दः तदापि स्यात् तथैव च ॥ १४८४
गोरक् भवेत् पदं तत्र गोरग् पदं भवेत् तथा ।
परत्र न विशेषः स्यात् पदमूह्यं यथायथम् ॥ १४८५

पिपक्ष् (पच् + सन् + क्विप्)

डुपचष् च भवेत् पाके प्रत्ययः सन् प्रयुज्यते ।
"सन्यङो"श्च भवेद् द्वित्वं हलादिः शिष्यते पुनः ॥ १४८६
"सनत्य"श्च स्यादिकारः "चोः कुः" कुत्वं प्रवर्त्तते ।
पिपक्ष् भवेत् तदा शब्दः स इह प्रकृतिर्भवेत् ॥ १४८७

पिपक्ष् यदा यदा सु स्यात् "हलङ्याब्भ्यः" सु विलुप्यति ।
पिपक्ष् तदा भवेत् रूपं षकारश्च विलुप्यति ॥ १४८८

पूर्व्वपक्षः

"स्को"रिति च ककारस्य प्राप्तं खलु विलोपनम् ।

उत्तरपक्षः

"चोः कुरि'ति भवेत् कुत्वं तदसिद्धं भवेदिह ॥ १४८९
पिपक् पिपग् पदं तत्र विशेषश्च न वर्त्तते ।

दिधक् (दह + सन् + क्विप्)

दिधक् दिधग् पदं च स्यात् न विशेष इहापि च । १४९०

इति षान्ताः

## अथ सकारान्तप्रकरणम्

सुपिस् ( सु + पिस् + क्विप् )

सुष्ठु स पेसतीति च शब्दः सुपिस् भवेदिह ।
पिस्लृ गतौ स्थितो धातुः प्रत्ययः क्विप् ततः परम् ॥ १४९१
सुपिस् सु स्यात् यदा तत्र सुपीः पदं भवेत् तदा ।
"र्वो"रिति च स्थितं सूत्रं तेन दीर्घः प्रजायते ॥ १४९२
सुपिसौ स्यात् पदं तत्र सुपिसः स्यात् पदं पुनः ।
सुपिसा स्यात् सुपीर्भ्याम स्यात् सुपीर्भिः स्यात् तथा पदम् ॥ १४९३
सुपीःषु स्यात् पदं तत्र सुपीष् षु स्यात् पदं पुनः ।
अन्यत्र न विशेषः स्यात् पदमूह्यं यथायथम् ॥ १४९४

सुतुस् (सु+तुस्+क्विप्)

सु सुष्ठु तोसतीति च शब्दः सुतुस् भवेदिह ।
तुस च खण्डने धातुः तस्मात् क्विप् प्रत्ययो भवेत् ॥ १४९५
सुपिस् सु स्याद् यदा तत्र सुतुः पदं भवेत् तदा ।
"वौ"रिति च स्थितं सूत्रं दीर्घत्वेन प्रजायते ॥ १४९६
सुतुषौ स्यात् पदं तत्र सुतुसः च पदं भवेत् ।
परत्र न विशेषः स्यात् पदमूह्यं यथायथम् ॥ १४९७

विद्वस्

अदादौ च "विद ज्ञाने" "लटः शतृ" प्रयुज्यते ।
"विदेः शतुर्वसु" स्तत्र शब्दो विद्वस् भवेत्तथा ॥ १४९८
विद्वस् यदा भवेच् शब्दः प्रत्ययः सु परे यदा ।
रूपं तदा भवेद् विद्वस् स् ततः कार्य्यं यथायथम् ॥ १४९९
"वसु"र्भवेद् उगित् तत्र उगित्वात् नुम् प्रवर्त्तते ।
नुम् यदा स्यात् तदा रूपं विद्वन्स्स् भवेदिति स्थितिः ॥ १५००
सूत्रं "सान्तमहत"श्च पुनस्तत्र प्रयुज्यते ।
तेन तत्र भवेद् दीर्घः रूपं विद्वान्स्स् तदा भवेत् ॥ १५०१
"हल्ङ्याब्भ्य"श्च भवेद् योज्यं प्रत्ययः सु विलुप्यति ।
सु यदा च विलुप्तः स्यात् रूपं विद्वान्स् तदा पुनः ॥ १५०२
"संयोगान्तस्य लोप"श्च पुनरिह प्रसज्यते ।
सकारस्य यदा लोपः रूपं विद्वान् तदा भवेत् ॥ १५०३

पूर्व्वपक्षः

नकारस्य पुनर्लोप इह खलु प्रसज्यते ।

उत्तरपक्षः

लोपो यः स्यात् सकारस्य स चासिद्धो भवेदिह ॥ १५०४
विद्वांसौ स्यात् परं तत्र विद्वांसः स्यात् पदं तथा ।
विद्वांसम् स्यात् पदं तत्र विद्वांसौ च भवेत् पदम् ॥ १५०५
हे विद्वन् स्यात् पदं तत्र सम्बुद्धिश्चेत् परे भवेत् ।
विद्वस् यदा यदा शस् स्यात् सूत्रं परं भवेत् तदा ॥ १५०६

४३६ । वसोः सम्प्रसारणम् । ६।४।१३१

वस्वन्तश्च यदा भः स्यात् तदा तस्य प्रसारणम् ।
विदुषः स्यात् प्रसारे च पूर्व्वरूपं वकारता ॥ १५०७

विद्वषा स्यात् पदं तत्र प्रत्ययष्टा यदा भवेत् ।
विद्वद्भ्याम् स्यात् पदं तत्र "वसु-स्रंसु"—दकारता ॥ १५०८

सेदिवस् ( षद्लृ + क्वसु )

विशरणे गतौ षद्लृ षद्लृ स्याद् चावसादने ।
"धात्वादेः षः" सकारः स्यात् तथा च सद् भवेदिह ॥ १५०९
"भाषायां" च स्थितं सूत्रं लिटः क्वसु प्रयुज्यते ।
"लिटि धातो"र्भवेद् द्वित्वं हलादिः शिष्यते पुनः ॥ १५१०
तस्याभ्यासलोपौ तत्र "अत" श्चेति भवेद् यदा ।
"वस्वेकाजात्"— भवेद इट् च सेदिवस् च तथा भवेत् ॥ १५११

सेदिवस् स्याद् यदा शब्दः प्रत्ययः सु परे यदा ।
सेदिवस् सु तदा तत्र भवेद् रूपमिति स्थितिः ॥ १५१२
उगित् क्वसुर्भवेत्तावत् नुम तस्मात्र प्रयुज्यते ।
नुम यदा स्यात् तदा तत्र सेदिवन्स्म् च भवेदिह ॥ १५१३
सूत्रं "सान्तमहत"श्च पश्चात् तत्र प्रयुज्यते ।
तेन तत्र भवेद् दीर्घः सेदिवान्स्स् च भवेत् तदा ॥ १५१४
"हलङ्याब्भ्य"श्च स्थितं सूत्रं तत् तदा च प्रयुज्यते ।
प्रत्ययः सु विलुप्तः स्यात् सेदिवान्स् च भवेत्तदा ॥ १५१५
"संयोगान्तस्य लोप"श्च पुनस्तत्र प्रसज्यते ।
सकारस्य भवेल्लोपः सेदिवान् स्यात् पदं तदा ॥ १५१६

पूर्व्वपक्षः

लोप इह नकारस्य भवेत् प्राप्त इति स्थितिः ।

उत्तरपक्षः

लोपः यः स्यात् सकारस्य स चासिद्धो भवेदिह ॥ १५१७

सेदिवांसौ पदं च स्यात् सेदिवांसः पदं भवेत् ।
सेदिवांसम् सेदिवांसौ पदं तत्र भवेत् पुनः ॥ १५१८
सेदिवस् स्याद् यदा शब्दः प्रत्ययः शस् परे यदा ।
सेदुषः स्यात् पदं तत्र "वसोः" प्रसारणं भवेत् ॥ १५१९

पूर्व्वपक्षः

"वस्वेकाजात्" स्थितं सूत्रम् इडागमो भवेत् तथा ।
अन्तरङ्गं भवेत् कार्य्यम् इडागमो यदा भवेत् ॥ १५२०

उत्तरपक्षः

प्रसारणे च कर्त्तव्ये न तावत् स्याद् इडागमः ।
"अकृतव्यूहा"—चेति च परिभाषा प्रवर्त्तते ॥ १५२१

सेदुषा स्यात् पदं तत्र सेदिवद्भ्यां पदं भवेत् ।
सेदुषे स्यात् पदं तत्र पदमूह्यं परं बुधैः ॥ १५२२

सुहिन्स्

सुष्ठु हिनस्तीति तत्र विग्रहस्तु भवेद् यदा ।
प्रत्ययः क्विप् भवेद् योज्यः शब्दः सुहिन्स् तदा भवेत् ॥ १५२३

सुहिन्स् यदा भवेच् शब्दः प्रत्ययः सु परे यदा ।
"हल्ङ्याब्भ्य"श्च भवेद् योज्यं प्रत्ययः सु विलुप्यति ॥ १५२४
प्रत्ययः सु यदा लुप्तः सुहिन्स् रूपं तदा भवेत् ।
"संयोगान्तस्य" लोपे च पदं सुहिन् भवेत् पुनः ॥ १५२५

पूर्व्वपक्षः

नकारस्य पुनर्लोपः खलु प्राप्तो भवेदिह ।

उत्तरपक्षः

लोपो यः स्यात् सकारस्य स चासिद्धो हि मन्यते ॥ १५२६
सुहिन् भवेत् पदं तत्र प्रत्ययः सु परे यदा ।
यदा सुहिन्स् यदा सु स्यात् पदमिष्टं तदेव हि ॥ १५२७

पूर्व्वपक्षः

सूत्रं "सान्तमहत"श्च पुनस्तत्र प्रयुज्यते ।
उपधायास्ततश्चात्र दीर्घो भवेदिति स्थितिः ॥ १५२८

उत्तरपक्षः

संयोगः स भवेत् सान्तः स्यात् प्रातिपदिकस्य च ।
संयोग इह च धातोः सूत्रं तस्मात् न युज्यते ॥ १५२९
उपधायास्ततो दीर्घो नेह खलु प्रसज्यते ।
ह्रस्वे पदं भवेत् सुहिन् पदमिष्टं तदेव हि ॥ १५३०
सुहिंसौ स्यात् पदं तत्र सुहिंसः स्यात् पदं तथा ।
सुहिंभ्यः स्यात् पदं तत्र विशेषश्च न वर्त्तते ॥ १५३१

सुहिन्स्सु स्यात् पदं तत्र सुहिनसु स्यात् पदं तथा ।
अन्यत् पदं बुधैरूह्यं विशेषो न स्थितः क्वचित् ॥ १५३२

ध्वन्स्

ध्वत् भवेच्च पदं तत्र ध्वद् भवेच्च पदं तथा ।
ध्वंसौ ध्वंसः पदं च स्यात् पदं ध्वद्भ्यां तथा भवेत् ॥ १५३३

स्रन्स्

स्रन् भवेच्च पदं तत्र स्रद् भवेच्च पदं तथा ।
स्रंसौ स्रंसः पदं च स्यात स्रद्भ्याम भवेत् पदं तथा ॥ १५३४

पुमस्

पूञ् पवने स्थितो धातुः पूञो डुंसुन् उणादिके ।
पुमस् भवेच्च तदा शब्दः सुव्युत्पत्तिस्ततः परम ॥ १५३५

पुमस् यदा भवेत् शब्दः प्रत्ययः सु परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयोजनम ॥ १५३६

४३७ । पुंसोऽसुङ् । ७।१।८९

सर्व्वनामस्थानं यदि विवक्षितं भवेदिह ।
पुंसस्तदा समादेशो भवेदसुङ् इति स्थितिः ॥ १५३७
प्रत्ययश्च भवेद् असुङ् उकारश्च भवेदिह ।
उच्चारणे सहायः स्यात् स उकार इति स्थितिः ॥ १५७८

पूर्व्वपक्षः

प्रत्ययश्च भवेदसुङ् उकार इद् भवेदिह ।
नुमर्थं स उकारः स्यात् प्राचीनैः कथितं तथा ॥ १५७९

उत्तरपक्षः

असुङः "उ" नुमर्थं स्यात् इति न रुचिरं भवेत् ।
डुंसुनि य उकारः स्यात् तेनैव नुम प्रसिध्यति ॥ १५४०
वहुपुंसी पदं च स्यात् असुङः "उ" न वर्त्तते ।
उकारेण हि डुंसुन "उगितश्च" भवेद् हि नुम ॥ १५४१

पुंस् यदा च भवेच्च् शब्दः प्रत्ययः सु परे यदा ।
असुङ् तदा भवेद् योग्यः "पुमस् स" स्याच्च तदा पुनः ॥ १५४२

उगित्वेन च ङु सुनो नुमपि च प्रयुज्यते ।
"पुमन्स् स् तदा च भवेद् रूपं ततः कार्य्यं परं भवेत् ॥ १५४३
सूत्रं "सान्तमहत"श्च ततो योज्यं भवेदिह ।
तेन तत्र भवेद् दीर्घः पुमान्स् स् रूपं भवेत्तदा ॥ १५४४
"हल्ङ्याब्भ्य"श्च भवेद् योज्यं प्रत्ययः सु विलुप्यति ।
प्रत्ययः सु यदा लुप्तः पुमान्स् रूपं तदा भवेत् ॥ १५४५
"संयोगान्तस्य" लोपश्च पुनस्तत्र प्रयुज्यते ।
सकारस्य भवेल्लोपः "पुमान्" रूपं भवेत् तदा ॥ १५४६
लोपः यः स्यात् सकारस्य स चासिद्धो भवेदिह ।
नकारस्य पुनर्लोपस्तस्मान्न च प्रसज्यते ॥ १५४७
पुमांसौ स्यात् पुमांसः स्यात् पुंसः पुंसा पदं भवेत् ।
पुम्भ्यां पुम्भिः पदं तत्र पुंसि पुंसः भवेत् पदम् ॥ १५४८

उशनस्

"वश कान्तौ" स्थितो धातुः स्याद् "वशेः कनसिः" पुनः ।
"ग्रहिज्या"—च प्रसारः स्यात् उशनस् च भवेत् तथा ॥ १५४६
उशनस् स्याद् यदा शब्दः सम्बुद्धौ सु परे यदा ।
वार्त्तिकं च भवेद् योज्यं यथा परे प्रदर्शितम् ॥ १५५४

अस्य सम्बुद्धौ वा अनङ्
नलोपश्च वा वाच्यः (वा)

हे उशनस् पदं च स्यात् हे उशन पदं भवेत् ।
हे उशनः पदं च स्यात् पदत्रयं भवेदिह ॥ १५५५

उशनोभ्याम पदं च स्यात् उशनोभिः पदं भवेत् ।
परत्र न विशेषः स्यात् पदमूह्यं यथायथम ॥ १५५६

अनेहस्

अनेहा स्यात् पदं तत्र अनेहसौ पदं भवेत् ।
अनेहसः पदं च स्यात् हे अनेहः भवेत् पुनः ॥ १५५७
अनेहोभ्यां पदं च स्यात् अनेहोभिः पदं भवेत् ।
अन्यत्र न विशेषः स्यात् पदमूह्यं यथायथम ॥ १५५८

वेधस्

वेधाः स्यात् वेधसौ स्याच्च वेधसः स्यात् पदं पुनः ।
हे वेधः स्यात् वेधोभ्याम् स्यात् पदमूह्यं परं बुधैः ॥ १५५९

सुवस्

वस आच्छादने धातुः "सु" पूर्व्वं च भवेदिह ।
प्रत्ययः क्विप् भवेद् योज्यः शब्दः सुवस् तदा भवेत् ॥ १५६०
सुवस् यदा भवेच् शब्दः प्रत्ययः सु परे यदा ।
"हलङ्याब्भ्य"श्च सुलोपः स्यात् रूपं सुवस् भवेत् तदा ॥ १५६१
रत्वं भवेद् विसर्गश्च सुवः स्याच्च पदं तदा ।
सुवस् सु स्याद् यदा तत्र तदेव हि पदं भवेत् ॥ १५६२

पूर्व्वपक्षः

"अत्वस्"—इति स्थितं सूत्रं तेन दीर्घो भवेदिह ।

उत्तरपक्षः

"अधातो"रिति तत्र च दीर्घता न भवेत्ततः ॥ १५६३

सुवसौ स्यात् पदं तत्र सुवसः स्यात् पदं तथा ।
परं पदं बुधैरूह्यं नेह मया प्रदीयते ॥ १५६४

पिण्डग्रस्—पिण्डग्लस्

पिण्डग्रः स्यात् पदं तत्र पिण्डग्लः स्यात् पदं तथा ।
सुवस्-वच्च भवेद् रूपम् ऊह्यं बुधैर्यथायथम् ॥ १५६५

अदस्

अदस् यदा भवेच् शब्दः प्रत्ययः सु परे यदा ।
पदं यदा भवेत् साध्यं सूत्रं परं प्रयोजनम् ॥ १५६६

४३८ । अदस औ सुलोपश्च । ७।२।१०७

प्रत्ययः सु परे स्याच्चेत् अदस औ प्रयुज्यते ।
अन्तादेशो भवेत्तत्र प्रत्ययः सु विलुप्यति ॥ १५६७

अदस् सु स्याद् यदा तत्र "अद औ" च तदा भवेत् ।
"तदोः सः सौ" सकारः स्यात् पदम् असौ भवेत् तदा ॥ १५६८

औत्वप्रतिषेधः साकच्कस्य वा वक्तव्यः

सादुत्वं च। (वा)

अदसश्चेद् भवेदकच् औत्वं न वा विधीयते।
औत्वं न चेत् सकारात्तु परम् उत्वं भवेदपि॥ १५६९

अदस् अकच् यदा तत्र अदकस् स्यात् तदा पुनः।
अदकस्सु तदा तत्र अद्कस्स् च तदा भवेत्॥ १५७०
औत्वं यदा न तत्र स्यात् तदोः सः सौ प्रयुज्यते।
दकारस्य सकारः स्यात् असकस्स् च तदा भवेत्॥ १५७१
सकारस्य परे तावद् अकारो यः प्रवर्त्तते।
तस्य तावद्‌ भवेद् उत्वम् अनेन वार्त्तिकेन च॥ १५७२
यदा तत्र भवेद् उत्वम् अमुकस्स् स्यात् तदा पुनः।
"त्यदादीनां" भवेद्‌ योज्यम् असुकस् च तदा भवेत्॥ १५७३
पररूपं भवेत्तत्र स्याद् असुकस् तदा पुनः।
रुत्वं भवेत् विसर्गश्च असुकः स्यात् तदा पदम्॥ १५७४

अदकस्स् च यदा तत्र भवेद् औत्वं यदा पुनः।
अदकौस् स्यात् तदा तत्र भवेद्‌ रूपम् इति स्थितिः॥ १५७५
"तदोः दः सः" भवेद् योज्यं दकारस्य सकारता।
असकौ स्यात् पदं तत्र पदमिष्टं तदेव च॥ १५७६

अदस् + औ = अमू

अदस् औ स्याद् यदा तत्र रूपम् अदौ भवेत् तदा।
त्यदाद्यत्वं परं रूपं वृद्धिस्तत्र प्रवर्त्तते॥ १५७७

"अदसोऽसे"—भवेद् योज्यं दीर्घं ऊ च तथा भवेत्।
दकारस्य मकारः स्याद् पदम् अमू तथा भवेत्॥ १६७८

अदस् + जश् = अमी

अदस् जश् चेद्‌ भवेत्तत्र त्यदादीनाम् अकारता।
अदजश् च तदा तत्र भवेद्‌ रूपमिति स्थितिः॥ १५७९
"जशः शी" च भवेद् योज्यम् अद ई स्यात् तदा पुनः।
"अदे" भवेत् तथा तत्र ततः सूत्रं परं भवेत्॥ १५८०

### ४३९। एत ईद् बहुवचने। ८।२।८१

अदस् यदि भवेच् शब्दः स्याद् बहुवचनं यदि।
दात् परस्य स्याद् एत ईत् दकारस्य मकारता॥ १५८१

एत इत् चेत् भवेत्तत्र भवेद्रूपम् "अदी" तदा।
दकारस्य मकारश्चेत् पदम् अमी तदा भवेत्॥ १५८२

अदस् + अम = अमुम

अदस् अम् स्याद् यदा तत्र पदं साध्यं भवेद् यदा।
"त्यदादीनां" भवेद्‌ योऽयम् अद अम् स्यात् तदा पुनः॥ १५८३
"अदसोऽसेः" स्थितं सूत्रं परं च तत् प्रयुज्यते।
उत्वं भवेत् भवेद् मत्वम् अमुम् भवेत् पदं तदा॥ १५८४
आदौ विभक्तिकार्य्यं स्यात् "त्यदादीनां" प्रयुज्यते।
"अदसोऽसेः" भवेत् पश्चात् उत्वं मत्वं भवेत् तथा॥ १५८५

अदस् + टा = अमुना

अदस् यदा भवेद अमु घिसंज्ञा च प्रयुज्यते।
ना तदा च भवेत् तत्र स्याद् अमुना तदा पदम्॥ १५८६

पूर्व्वपक्षः

"अदसोऽसेः" परं शास्त्रं तदसिद्धं भवेदिह।
"आङो ना" च भवेत् पूर्व्वं तत् कथं वा भवेद् गतिः॥ १५८७
पूर्व्वत्रासिद्धमित्येतत् नेह खलु प्रवर्त्तते।
मुनिना च कृतं सूत्रं तेन गतिर्भवेदिह॥ १५८८

### ४४०। न मु ने। ८।२।३

नाभावश्चेद् भवेत् कार्य्यः कृतो यदि भवेत् पुनः।
मुभावश्च तदा तत्र नासिद्धः स्यादिति स्थितिः॥ १५८९

अमुना स्यात् पदं तत्र बाधा क्वचिद् न वर्त्तते।
अदस् टा स्याद् यदा तत्र पदं पुंसि तथा भवेत्॥ १५९०
अमुना स्यात् पदं तत्र यथा मया प्रदर्शितम्।
अमूभ्यां स्यात् पदं पश्चाद् अमीभिः स्यात् पदं पुनः॥ १५९१
अमुष्मै स्याद् अमूभ्यां स्याद् अमीभ्यः स्यात् पदं तथा।
अमुष्मात् स्याद् अमूभ्याम् स्यात् अमीभ्यश्च पदं भवेत्॥ १५९२

अमुष्मात् स्यात् अमुयोः स्यात् अमीषाम् च भवेत् पदम् ।
अमुष्मिन् स्यात् अमुयोः स्याद् अमीषु स्यात् पदं परम् ॥ १५९३

इति सान्ताः

इति हलन्तपुंलिङ्गप्रकरणम

---

इह मया गते वर्षे (१९७४) पुंसीह कारिकाः कृताः ।
शतत्रयं द्विषष्टिश्च संख्यास्तासां स्थितास्तदा ॥ १
प्रदर्शितं तदा रूपं शब्दानाञ्च समासतः ।
स्पृष्टं मया तदा सूत्रं न विस्तरः कृतस्तदा ॥ २
गते वर्षे रुजा देहे महती चाभवत् मम ।
रक्ते मे शर्करा दृष्टा देहे क्लान्तिश्च सर्व्वदा ॥ ३
महती च रुजा देहे पीड़ा चासीद् बलीयसी ।
जीवामि वा न जीवामि संशयो मे स्थितस्तदा ॥ ४
न ग्रन्थे स्याद् यथा च्छेदस्तथा चेष्टा कृता मया ।
शब्दानान्तु समासेन रूपं तदा प्रदर्शितम् ॥ ५
अस्मिन् वर्षे (१९७५) कथञ्चिच्च देहे स्वस्ति प्रतिष्ठितम् ।
विषयानामुपन्यासे पुनर्यत्नः कृतो मया ॥ ६
गते वर्षे कृताः श्लोकाः सर्व्वथा च विसर्ज्जिताः ।
श्लोकेभ्यश्च पुनस्तेभ्य एकोऽपि च न गृह्यते ॥ ७
अस्मिन् वर्षे कृताः श्लोकाः सर्व्वथा नूतनाश्च ते ।
विस्तरोऽपि मया दत्तः कालो दत्तो यथा परे ॥ ८

रचनाकालः

२।५।१९७५-१०।५।१९७५ ९ दिवसाः-२९० श्लोकाः (१-२९०)
११।५।१९७५-२०।५।१९७५ १० दिवसाः-४५३ श्लोकाः (२९१-७४३)
२१।५।१९९५ — १ दिवसः-९२ श्लोकाः (७४४-८३५)
२२।५।१९७५-१।६।१९७५ ११ दिवसाः-१७४ श्लोकाः (८३६-१००९)
२।६।१९७५-३।६।१९७५ २ दिवसौ-८४ श्लोकाः (१०१०-१०९३)
२४।८।१९७५-१३।९।१९७५ २१ दिवसाः-५०० श्लोकाः (१०९४-१५९३)

इति—

श्रीभुवनमोहन-मृणालिनी-सुत-श्रीहरिपददत्त-विरचितायां
व्याकरणकारिकायाम् हलन्तपुंलिङ्गशब्दप्रकरणम् ।

आरम्भः २६।४।१९७५

## हलन्तस्त्रीलिङ्गे

### हकारान्तप्रकरणम्

उपानह् च यदा शब्दः प्रत्ययः "सु" परे यदा ।
"वे"रिति च भवेद् योज्यं "हल्" इति च प्रयुज्यते ॥ १
सूत्रद्वयं यदा युक्तं प्रत्ययः "सु" विलुप्यति ।
उपानह् च तदा तत्र ततः सूत्रं परं भवेत् ॥ २

**४४१ । नहो धः । ८।२।३४**

झलि परे पदान्ते च नहो हस्य धकारता ।
हकारस्य धकार स्यात् उपानध् चैं तदा भवेत् ॥ ३

उपानध् च यदा तत्र सूत्रं परं प्रयोजनम् ।
"झलां जशः" स्थितं सूत्रं तदिह च प्रयुज्यते ॥ ४
तदिह च यदा युक्तं धकारस्य दकारता ।
उपानद् च पदं तत्र तथा खलु प्रजायते ॥ ५
दकारस्य यदा तत्र पुनर्भवेत् तकारता ।
उपानत् स्यात् तदा तत्र पदद्वयं तथा भवेत् ॥ ६
उपानहौ पदं तत्र उपानहः पदं भवेत् ।
उपानद्भ्यां भवेत्तत्र उपानत्सु तथा पुनः ॥ ७

उष्णिह्

ष्णिह प्रीतौ स्थितो धातुः "उत्" पूर्व्वे च भवेत् पुनः ।
प्रत्ययः क्विन् यदा पश्चात् शब्द उष्णिह् तदा भवेत् ॥ ८
तकारस्य भवेल्लोपः पुनरिह निपातनात् ।
षकारस्य नकारस्य षत्वं णत्वं भवेत् क्रमात् ॥ ९

उष्णिह् यदा भवेच् शब्दः प्रत्ययः "सु" परे यदा ।
"वे"रिति च भवेद् योज्यं "हलि"ति च प्रयुज्यते ॥ १०
सूत्रद्वयं यदा युक्तं प्रत्ययः "सु" विलुप्यति ।
उष्णिह् तदा भवेत्तत्र सूत्रं परं प्रयुज्यते ॥ ११
"क्विन्नि"ति च स्थितं सूत्रं तद् योज्यं च भवेदिह ।
कुत्वं तदा भवेत्तत्र शब्दः उष्णिघ् तदा भवेत् ॥ १२

"झलां जशः" स्थितं सूत्रं तत् पुनश्च प्रयुज्यते ।
घकारस्य गकारः स्यात् पदम् उष्णिग् तदा भवेत् ॥ १३
गकारस्य ककारश्च पुनर्यदा भवेदिह ।
पदम् उष्णिक् तदा तत्र पदद्वयं तथा भवेत् ॥ १४
उष्णिहौ स्यात् पदं तत्र उष्णिहः स्यात् पदं तथा ।
उष्णिग्भ्याम् स्यात् पदं तत्र स्याद् उष्णिक्षु तथा पदम् ॥ १५

दिव्

पदं द्यौश्च भवेत्तत्र पदं दिवौ भवेत्तथा ।
पदं दिवः भवेत्तत्र पदं द्युःषु तथा भवेत् ॥ १६

गिर्

गीः गिरौ च गिरस्तत्र पदमूह्यं परं बुधैः ।

पुर्

पुः पुरौ च पुरस्तत्र पदमन्यद् भवेत् तथा ॥ १७

चतुर्

चतसृ स्यात् समादेशः चतस्रः स्यात् पदं जशि ।
शसि चापि चतस्रः स्यात् चतसृणां भवेत् परे ॥ १८

किम्

"किमः कः" च स्थितं सूत्रं तदिह च प्रयुज्यते ।
कादेशे च कृते तत्र पुनष्टाप् च भवेत् स्त्रियाम् ॥ १९
का भवेच्च पदं तत्र के भवेच्च पदं पुनः ।
काः स्यात् तत्र पुनः पश्चात् पदमूह्यं परं बुधैः ॥ २०

४४२ । यः सौ । ७।२।११०

इदम्

इदम् यदा भवेच् शब्दः स्त्रियां शब्दो यदा पुनः ।
दकारस्य यकारः स्यात् "सु" यदि स्यात् परे खलु ॥ २१
"इदम्" यदा यदा "सु" स्यात् "इदमो मः" प्रयुज्यते ।
मकारश्च स्थितस्तत्र यथा पूर्वं स्थितः पुनः ॥ २२
"इदम्" भवेत् तदा तत्र पदमिष्टं तदेव हि ।
"इदम्" यदा यदा स्याद् "औ" तदा भवेद् यथा परम् ॥ २३
"त्यदादीनाम्" स्थितं सूत्रं तदिह स्यात् प्रयोजनम् ।
"दश्च" पुनः स्थितं सूत्रं तदपि च प्रयुज्यते ॥ २४
सूत्रद्वयं यदा तत्र प्रयुक्तं स्याद् यथायथम् ।
इमे भवेत् पदं तत्र इमाः पदं तथा भवेत् ॥ २५

इमाम् भवेत् पदं तत्र पदम् इमे ततः परम् ।
इमाः पदं ततः पश्चात् द्वितीयायां पदानि च ॥ २६

इदम् यदा यदा टा स्यात् "अनाप्यकः" प्रयुज्यते ।
अन् आदेशस्तथा तत्र अनया च पदं भवेत् ॥ २७

इदम् यदा यदा भ्याम् च "हलि लोपः" प्रयुज्यते ।
इदो लोपो भवेत्तत्र पदम् आभ्याम् तथा भवेत् ॥ २८

तृतीयायां चतुर्थ्यां च द्वित्वे पदं तथैव च ।
न विशेषः स्थितस्तत्र विशेषस्तु न दृश्यते ॥ २९

इदम् यदा भवेत्तत्र ङिस् यदा च परे भवेत् ।
आभिः भवेत् तदा तत्र विशेषो न स्थितः पुनः ॥ ३०

इदम् यदा यदा ङे स्यात् "सर्वनाम्नः" प्रयुज्यते ।
अस्यै भवेत् पदं तत्र पदमिष्टं तदेव हि ॥ ३१

इदम् यदा यदा ङसि यदा ङस् च भवेत् पुनः ।
अस्याः पदं भवेत्तत्र विशेषश्च न वर्त्तते ॥ ३२

इदम् यदा यदा ओस् स्यात् "ओसि चे"ति प्रयुज्यते ।
अनयोः स्यात् पदं तत्र पदमिष्टं तदेव हि ॥ ३३

इदम् यदा यदा स्याद् आम् सूत्रद्वयं प्रयोजनम् ।
"आमि" सूत्रं भवेद् योज्यं "हलि" योज्यं भवेत् पुनः ॥ ३४

पदम् आसाम् तथा तत्र पदमिष्टं तदेव हि ।
अस्याम् भवेत् पदं ङौ च आसु भवेत् पुनः सुपि ॥ ३५

अन्वादेशो यदा तत्र पदं भवेद् यथा परे ।
एनाम् एने एनाः तत्र एनया एनयोः पुनः ॥ ३६

### अथ जकारान्तप्रकरणम्

#### स्रज्

"ऋत्विगि"ति स्थितं सूत्रं सृजेः क्विन् स्याद् अडागमः ।
तदा शब्दो भवेद् स्रज् च पदं भवेद् यथा परे ॥ ३७

स्रक् भवेच्च पदं तत्र स्रग् भवेच्च तथैव च ।
स्रजौ स्रजः भवेत् पश्चात् स्रक्षु भवेत् पुनः पदम् ॥ ३८

### अथ दकारान्तप्रकरणम्

#### त्यद्

त्यद् इह च स्थितः शब्दः स्त्रियां टाप् च भवेद् यदा ।
"त्यदादीनां" भवेद् योज्यं "त्वा" भवेच्च तदा पुनः ॥ ३९

त्या भवेच्च भवेत् त्ये च त्याः भवेच्च तथैव च ।
परं पदं बुधैरूह्यं न च मया प्रदीयते ॥ ४०
एवं तद् स्यात् एवं यद् स्यात् एवम् एतद् भवेदिह ।
विस्तरो न मया दत्तः पदं साध्यं यथायथम् ॥ ४१

अथ चकारान्तप्रकरणम्

वाच्

वाच् यदा च भवेच् शब्दः पदं भवेत् यथा परे ।
भवेद् वाक् वाग् भवेद् वाचौ भवेद् वाचः पदं पुनः ॥ ४२
वाग्भ्यां भवेत् पदं तत्र पदं वाक्षु तथा भवेत् ।
अन्यत् पदं भवेद् यद् यत् तत्तदूह्यं पुनर्बुधैः ॥ ४३

अथ पकारान्तप्रकरणम्

अप्

पकारान्ते भवेद् अप् च बहुत्वे स भवेत् सदा ।
यथा तस्य भवेद् रूपं तथा परे प्रदर्शितम् ॥ ४४

अप् यदा च भवेच् शब्दः प्रत्ययो जश् परे यदा ।
"अप्तृन्" इति स्थितं सूत्रं तत् तदा च प्रयुज्यते ॥ ४५
सूत्रं यदा भवेद् युक्तं दीर्घस्तदा प्रसज्यते ।
पदम् "आपः" भवेत्तत्र शसि पदं तदेव च ॥ ४६
अप् यदा च भवेच् शब्दः प्रत्ययो भिस् परे यदा ।
सूत्रं तदा भवेद् योज्यं यथा परे प्रदर्शितम् ॥ ४७

४४३ । अपो भि । ७।४।४८

अपस्तत्र तकारः स्याद् भ्यादौ च प्रत्यये परे ।
अद्भिः पदं तथा तत्र अद्भ्यः अद्भ्यस्तथा भवेत् ॥ ४८
अपां भवेत् पदं तत्र पदम् अप्सु तथा पुनः ।
सर्व्वासु च विभक्तिषु पदं मया प्रदर्शितम् ॥ ४९

अथ शकारान्तप्रकरणम्

दिश्

दिक् दिग् भवेत् पदं तत्र दिशौ दिशः पदं भवेत् ।
दिग्भ्यां दिक्षु पदं च स्यात् ऊह्यं पदं परं बुधैः ॥ ५०
"त्यदादिषु" स्थितं सूत्रं दृशेः क्विन् च विधीयते ।
अन्यत्रापि भवेत् कुत्वं यथा परे प्रदर्शितम् ॥ ५१

दृक् दृग् भवेत् पदं तत्र दृशौ दृशः पदं भवेत् ।
परं पदं भवेद् यद् यत् तत्तदूह्यं पुनर्बुधैः ॥ ५२

### अथ षकारान्तप्रकरणम्

त्विट् त्विड् भवेत् पदं तत्र त्विषौ त्विषः पदं भवेत् ।
त्विड्भ्याम् त्विट्सु तथा त्विट्त्सु पदमिह भवेदपि ॥ ५३

#### सजुष्

यदा "सह जुषते" स्यात् तदा शब्दः भवेद् सजुष् ।
रूपं तस्य भवेदत्र यथा परे प्रदर्शितम् ॥ ५४
सजूः भवेत् पदं तत्र सजुषौ सजुषः पुनः ।
सजूर्भ्याम् स्यात् सजूष्षु स्यात् सजूर्षु स्यात् पुनः पदम् ॥ ५५
"ष्टुना ष्टु" च परं शास्त्रं तदसिद्धं भवेदिह ।
"ससजुषोः" स्थितं पूर्व्वं रुत्वं तेन सजूर्षु च ॥ ५६

#### आशीष्

आशीः स्यात् आशिषौ स्याच्च आशिषः स्यात् तथैव च ।
आशीर्भ्याम् स्याद् पदं तत्र पदमूह्यं परं बुधैः ॥ ५७

### अथ सकारान्तप्रकरणम्

#### अदस्

अदस् यदा भवेच् शब्दः प्रत्ययः "सु" परे यदा ।
असौ भवेत् पदं तत्र "त्यदादीनाम्" प्रयुज्यते ॥ ५८
अदस् यदा भवेच् शब्दः प्रत्ययः औ परे यदा ।
अमू भवेत् पदं तत्र "अदस"श्च प्रयुज्यते ॥ ५९
अमूः भवेत् बहुत्वे च अमूम् अमू ततः परम् ।
अमूः भवेत् पदं तत्र बहुत्वे च परे शसि ॥ ६०
अमुया स्यात् अमूभ्यां स्यात् अमुभिः स्यात् ततः परम् ।
अमूष्मै स्यात् पदं तत्र "सर्व्वनाम्नः" प्रयुज्यते ॥ ६१
अमूभ्यां स्याद् यथापूर्व्वं अमूभ्यः स्यात् ततः पदम् ।
अमूष्याः स्यात् पदं तत्र अमूभ्यां च पदं भवेत् ॥ ६२
अमूभ्यः स्यात् पदं पश्चात् अमूष्याः च ततः परम् ।
अमूयोः स्यात् पदं तत्र अमूषां स्यात् पदं पुनः ॥ ६३
अमूष्यां स्यात् अमुयोः स्यात् अमूषु स्याद् पदं तथा ।
इह यत् यत् स्थितं तत्तत् सर्व्वं मया प्रदर्शितम् ॥ ६४

हलन्तस्त्रीलिङ्गप्रकरणम् समाप्तिः २६।४।१९७५

आरम्भः २७।४।१९७५

## हलन्तनपुंसकलिङ्गप्रकरणम्

### हकारान्तप्रकरणम्

#### स्वनडुह्

स्वनडुह् स्याद् यदा शब्दः प्रत्ययः "सु" परे यदा ।
सूत्रं "स्वमो" भवेद् योज्यं प्रत्ययः "सु" विलुप्यते ॥ १
स्वनडुह् स्यात् तदा तत्र "होढः" पुनः प्रयुज्यते ।
स्वनडुत् स्यात् पदं तत्र स्वनडुद् च पदं भवेत् ॥ २

स्वनडुह् स्याद् यदा शब्दः प्रत्ययः औ परे यदा ।
"नपुंसकात्" भवेद् योज्यम् स्वनडुही तदा भवेत् ॥ ३
स्वनडुह स्याद् यदा शब्दः प्रत्ययो जश् परे यदा ।
सूत्रं "चतुर्—" भवेद् योज्यं स्वनड्वांहि तदा भवेत् ॥ ४
प्रथमायां यथा तत्र द्वितीयायां तथा भवेत् ।
परत्र च भवेत् पुंवद् ऊह्यं यथायथं बुधैः ॥ ५

### वकारान्तप्रकरणम्

#### विमलदिव्

विमलदिव् यदा शब्दः प्रत्ययः "सु" परे यदा ।
"दिव उत्" च भवेद् योज्यं विमलद्यु पदं भवेत् ॥ ६

विमलदिव् यदा तत्र प्रत्ययः औ परे यदा ।
स्याद् विमलदिवी तत्र न विमलदिवौ पुनः ॥ ७

#### पूर्व्वपक्षः

प्रत्ययस्य विलोपेऽपि पूर्व्वं पदमिहोच्यते ।
प्रत्ययलक्षणं कार्य्यं विलोपेऽपि भवेदिह ॥ ८
यदा "राजपुरुषः" स्यात् प्रत्ययो लुप्यते तदा ।
प्रत्ययलक्षणं कार्य्यं लोपेऽपि च भवेदिह ॥ ९

प्रत्ययस्य यदा लोपस्तदा पूर्व्वं "पदं" यदि ।
प्रत्ययलक्षणं कार्य्यं पूर्व्वस्य चेद् भवेत्तदा ॥ १०
प्रत्ययस्य यदा लोपः परमपि "पदं" भवेत् ।
प्रत्ययलक्षणं कार्य्यं परस्यापि भवेत्तदा ॥ ११

पूर्व्वस्य स्याद् यथा तत्र परस्यापि तथा भवेत् ।
पूर्व्वस्य चेत् पदसंज्ञा पदसंज्ञा परस्य च ॥ १२
विमलदिव् यदा तत्र दिव् शब्दश्च परे तदा ।
परस्य स्यात् पदसंज्ञा पदसंज्ञं भवेन्न "दिव्" ॥ १३
विमलदिव् यदा तत्र प्रत्यय औ परे यदा ।
दिवः स्यात् पदकार्य्यं च स्याद् "विमलदिवौ" तदा ॥ १४
विमलदिव् यदा तत्र प्रत्यय औ परे यदा ।
स्याद् "विमलदिवौ" तत्र न "विमलदिवी" पुनः ॥ १५

उत्तरपक्षः

परस्य चेद् "दिव"स्तत्र पदसंज्ञा प्रवर्त्तते ।
तदेव च पदं तत्र स्याद् "विमलदिवौ" खलु ॥ १६
परस्य च पदसंज्ञा नेह खलु प्रसज्यते ।
वार्त्तिकं च स्थितं तत्र तदिह स्याद् यथा परम् ॥ १७
उत्तरपदत्वे च अपदादिविधौ प्रतिषेधः (वा)
उत्तरं च पदं तत्र पदसंज्ञं भवेन्न च ।
प्रत्ययलक्षणं कार्य्यं न तस्य च प्रवर्त्तते ॥ १८
पदादिश्चेद् भवेत्तत्र निषेधो न प्रयुज्यते ।
पदसंज्ञा भवेत्तत्र पदकार्य्यं भवेदपि ॥ १६

विमलदिव् यदा शब्दः पदसंज्ञं न "दिव्" भवेत् ।
पदसंज्ञा न तस्य स्यात् भसंज्ञा च भवेद् वरम् ॥ २०
भसंज्ञा च यदा तत्र "नपुंसकात्" प्रवर्त्तते ।
समादेशो भवेत् "शी" च स्याद् "विमलदिवी" तथा ॥ २१

पदादौ स निषेधो न पुनरिह प्रवर्त्तते ।
पदसंज्ञा भवेत्तत्र दधिसेचौ निदर्शनम् ॥ २२
दधिसेचौ यदा तत्र सकार आदितो भवेत् ।
पदसंज्ञा भवेत्तत्र षत्वं तत्र निषिध्यते ॥ २३

आदितश्चेद् विधिर्योज्यस्तदेव न निषेधनम् ।
अन्ते यदि विधिर्योज्यो निषेधो वर्त्तते तदा ॥ २४
"सिच्" यदा च स्थितः शब्दः चकारः स्यात् तदान्तिमे ।
न तत्र पदसंज्ञा स्यात् कुत्वमपि न वर्त्तते ॥ २५

## अथ रेफान्तप्रकरणम्

### वार्

वार् भवेच्च पदं तत्र पदं वारी भवेत् तथा ।
जशि वारि भवेत्तत्र अझलन्तात् न नुम् भवेत् ॥ २६

### चतुर्

चतुर् यदा भवेच् शब्दो जश् शस् यदा परे भवेत् ।
चत्वारि स्यात् पदं तत्र चत्वारि च भवेत् पदम् ॥ २७

## अथ मकारान्तप्रकरणम्

### किम्

किम् यदा च भवेच् शब्दः प्रत्ययः "सु" परे यदा ।
सूत्रं "स्वमो" भवेद् योज्यं प्रत्ययः सु विलुप्यते ॥ २८
लुक्शब्देन पुनश्चात्र लोपः खलु विधीयते ।
कादेशो न भवेत्तस्मात् "किम्" तत्र च पदं भवेत् ॥ २९
किम् के कानि पदं तत्र भवेत् खलु यथाक्रमम् ।
परं पदं बुधैरुह्यं न च मया प्रदीयते ॥ ३०

### इदम्

इदम् भवेद् भवेद् इमे इमानि च पदं भवेत् ।
परं पदं बुधैरुह्यं न च मया प्रदीयते ॥ ३१
अन्वादेशे नपुंसके एनद् वक्तव्यः (वा)
अन्वादेशो यदा तत्र एनद् भवेत् नपुंसके ।
एनत् एने एतानि च एतेन एतायास्तथा ॥ ३२

## अथ नकारान्तप्रकरणम्

### ब्रह्मन्

ब्रह्म ब्रह्मणी ब्रह्माणि भवेदिह यथाक्रमम् ।
हे ब्रह्मन् स्यात् च सम्बुद्धौ हे ब्रह्म स्यात् तथैव च ॥ ३३

### अहन्

अहन् यदा यदा सु स्यात् सुप्रत्ययो विलुप्यति ।
"रोऽसुपि" च भवेद् योज्यं पदम् अहर् भवेत्तथा ॥ ३४
अहन् यदा भवेच् शब्दः प्रत्यय औ परे यदा ।
"विभाषे"ति भवेद् योज्यम् अह्नी स्याद् अहनी तथा ॥ ३५

प्रत्ययो जश् परे यत्र पदं भवेद् "अहानि" च।
शेषं पदं बुधैरूह्यं न च मया प्रदीयते॥ ३६

अहन् यदा यदा भ्याम् स्यात् पदसंज्ञा तदा भवेत्।
सूत्रं तदा भवेद् योज्यं यथा परे प्रदर्शितम्॥ ३७

४४४। अहन्। ८।२।६८

अहन् यदा भवेत्तत्र पदान्ते रुर्भवेत्तदा।
अहोभ्याम् स्यात् पदं तत्र स्याद् अहोभिस्तथैव॥ ३८

पूर्व्वपक्षः

"अहन् सु" स्याद् यदा तत्र पदं तदा भवेद् "अहर्"।
अहन् भ्याम् स्याद् यदा तत्र "अहोभ्याम" स्यात् पदं तदा॥ ३९
पदद्वयं तथा तत्र भवद्भिश्च प्रदर्शितम्।
पदद्वयं तथा न स्यात् कारणं स्याद् यथा परे॥ ४०
"रोऽसुपि" स्यात् परं शास्त्रं "अहन्" शास्त्रं परं पुनः।
रेफादेशो भवेदाद्ये आदेशो रुर्भवेत् परे॥ ४१
"नलोप"श्च स्थितं शास्त्रं नकारश्च विलुप्यति।
एतत् शास्त्रं स्थितं पूर्व्वं प्रसक्तं स्यादिह त्रयम्॥ ४२
परं शास्त्रमसिद्धं स्यादिति विधिः स्थितः खलु।
पूर्व्वं शास्त्रं भवेद् योज्यमिति गतिर्भवेदिह॥ ४३
"रोऽसुपि" स्याद् असिद्धं च स्यादसिद्धम "अहन्" पुनः।
रत्वमिह न तावत् स्यात् रुत्वमपि भवेन्न च॥ ४४
"नलोप"श्च स्थितं पूर्व्वं तदिह च प्रयुज्यते।
नकारस्य भवेल्लोपो रत्वं रुत्वं न सिध्यति॥ ४५
पदम् "अहर्" न तत्र स्यात् अहोभ्यां न पदं भवेत्।
भवद्भि र्यत् पदं दत्तं पदं तत्तु न सिध्यति॥ ४६

उत्तरपक्षः

पदद्वयं यथा दत्तं तथैव च भवेदिह।
पदान्तरं न तत्र स्यात् पदान्तरं न सिध्यति॥ ४७
व्याख्यानमिह सूत्रस्य स्यादन्यथा सतां मते।
व्याख्यानं स्याद् यथा तस्य तथा परे प्रदर्शिता॥ ४८

"अहन्" इति स्थितं सूत्रम् एकपदं स्थितं च तत् ।
"अहन्" भवेद् द्विरावृत्तम् "अहन् अहन्" तथा भवेत् ॥ ४९
द्विरावृत्या यदा सूत्रम् "अहन् अहन्" भवेदिह ।
तदा तस्य भवेद् व्याख्या यथा परे प्रदर्शिता ॥ ५०
अहन् यत् प्रथमे तत्र तदेकवचनं भवेत् ।
नकारश्च स्थितस्तत्र न तस्य च विलोपनम् ॥ ५१
मुनिनेह नकारस्य लोपो न हि प्रदर्शितः ।
तदिदं ज्ञापकं भवेत् नकारो न विलुप्यति ॥ ५२
अहन्शब्दो यदा तत्र नकारो न विलुप्यति ।
प्रथमे यत् "अहन्" तत्र तस्य व्याख्या भवेदियम् ॥ ५३
"अहन्" यद् द्वितीयं तत्र तदिदानीं च गृह्यते ।
तस्य व्याख्या भवेदत्र यथा परे प्रदर्शिता ॥ ५४
अहन्शब्दो यदा तत्र पदान्तश्च यदा पुनः ।
तदा तस्य भवेद् रुश्च व्याख्या चेष्टा भवेदिह ॥ ५५
अहन् यत् प्रथमे तत्र तस्य व्याख्या कृता खलु ।
अहन् यत् द्वितीये तत्र तस्य व्याख्या कृता तथा ॥ ५६
व्याख्याद्वयं यदा तत्र मिलितं च भवेत् पुनः ।
सूत्रस्य च भवेदर्थो यथा च दर्शितः परे ॥ ५७
अहन् यदा भवेच् शब्दः पदान्तश्च यदा पुनः ।
नकारस्य न लोपः स्यात् रुरपि च पुनर्भवेत् ॥ ५८
एवं व्याख्या यदा तत्र पदद्वयं प्रसिध्यति ।
"अहर्" भवेत् पदं तत्र "अहोभ्याम्" च पदं भवेत् ॥ ५९

## दीर्घाहन्

दीर्घाण्यहानि यस्मिन् च विग्रहश्च भवेद् यदा ।
दीर्घाहन् स्यात् तदा शब्दो बहुव्रीहौ तथा भवेत् ॥ ६०
दीर्घाहश्च निदाघः स्यात् वाक्यतश्च-निदर्शनम् ।
दीर्घाहश्च पुनः शब्द इह पुंसि प्रवर्त्तते ॥ ६१
दीर्घाहन् स्याद् यदा शब्दः पुंसि शब्दो यदा भवेत् ।
तदा रूपं कथं तत्र तदपि च प्रदीयते ॥ ६२

अहन् शब्दो यदा तत्र तदा तस्य यथा भवेत् ।
तदन्तश्च यदा शब्दो भवेत्तस्य तथैव च ॥ ६३
भवेद् रत्वं भवेद् रुत्वं यथाप्राप्तं भवेद् द्वयम् ।
"रोऽसुपि" स्यात् "अहन्" स्यात्र यथायोग्यं द्वयं भवेत् ॥ ६४

"दीर्घाहन्" स्याद् यदा पुंसि प्रत्ययः "सु" परे यदा ।
"दीर्घाहः" स्यात् पदं तत्र पदमिष्टं तदेव हि ॥ ६५

"दीर्घाहन् सु" यदा तत्र "हल्ङ्याब्भ्य"श्च प्रयुज्यते !
सूत्रं यदा भवेद् युक्तं प्रत्ययः "सु" विलुप्यति ॥ ६६
प्रत्ययस्य विलोपश्च तथा खलु भवेद् यदा ।
प्रत्ययलक्षणं कार्य्यं तदा तत्र प्रसज्यते ॥ ६७
"अहन्" इति स्थितं सूत्रं तदिह च भवेत्तदा ।
नकारस्य तदा रुत्वं तथा लब्धं भवेदिह ॥ ६८

पूर्व्वपक्षः

"रोऽसुपि" च स्थितं सूत्रं तत् प्रयोज्यं भवेदिह ।
तेन रत्वं भवेदत्र रत्वं तथा च लभ्यते ॥ ६९

उत्तरपक्षः

"असुपि" च पदं सूत्रे मुनिनेह प्रयोजितम् ।
सुपि यदा परे तत्र तदा रत्वं भवेन्न च ॥ ७०
सुप्रत्ययः स्थितस्तत्र परश्चात्र स विलुप्यति ।
प्रत्ययस्य विलोपेऽपि कार्य्यं भवेत् तदाश्रितम् ॥ ७१
यद्यपि सुप् न तत्र स्यात् सुप्कार्य्यं तु स्थितं खलु ।
"असुपी"ति निषेधाच्च न तत् सूत्रं प्रयुज्यते ॥ ७२
"रोऽसुपि" यत् स्थितं सूत्रं तेन रत्वं भवेन्न च ।
"असुपि" च पदं सूत्रे सुप्कार्य्यमिह हि स्थितम् ॥ ७३

अहन् तत्र स्थितं सूत्रं तदेव च प्रयुज्यते ।
तत् सूत्रं तु यदा युक्तं रुत्वं तदा च लभ्यते ॥ ७४

हत्वमिह तथा लब्धं पुनरपि न युज्यते ।
असिद्धं च भवेद् रुत्वं न सिध्यति ततश्च तत् ॥ ७५
"अहन्" इति परं शास्त्रं रुत्वं तेन भवेदिह ।
"सर्व्वनाम"—स्थितं पूर्व्वं तेन दीर्घश्च लभ्यते ॥ ७६
परं शास्त्रमसिद्धं स्यात् पूर्व्वमिह प्रयुज्यते ।
तेन दीर्घो भवेदत्र "दीर्घाह्नाः" च पदं भवेत् ॥ ७७
हे दीर्घाहो निदाघेति सम्बुद्धौ तु पदं भवेत् ।
"हल्ङ्याभ्यः" स्याद् "अहन्" स्याच्च "हशि" स्याच्च पुनः ॥ ७८
दीर्घाहानौ पदं तत्र दीर्घाहानः पदं भवेत् ।
दीर्घाह्ना स्यात् पदं तत्र दीर्घाह्नाङ्यां भवेत् तथा ॥ ७९

दण्डिन्

दण्डि स्याद् दण्डिनी स्याच्च दण्डीनि स्यात् पदं तथा ।
हे दण्डि स्यात् पदं तत्र पदमूह्यं परं बुधैः ॥ ८०

स्रग्विन्

स्रग्वि स्यात् स्रग्विनी स्याच्च स्रग्वीनि स्यात् तथा पदम् ।
परं पदं बुधैरूह्यं न च मया प्रदीयते ॥ ८१

वाग्मिन्

वाग्मि स्यात् वाग्मिनी स्याच्च वाग्मीनि स्यात् पदं तथा ।
परं पदं बुधैरूह्यं न च मया प्रदीयते ॥ ८२

बहुवृत्रहन्

पदं बहुवृत्रह स्यात् बहुवृत्रहनी भवेत् ।
पदं बहुवृत्रघ्नी स्यात् स्याद् बहुवृत्रहाणि च ॥ ८३

बहुपुषन्

बहुपुष बहुपुष्णी स्याद् बहुपूषणी तथा ।
पदं बहुपुषाणि स्यात् पदमूह्यं परं बुधैः ॥ ८४

बह्वर्यमन्

बह्वर्य्यन् पदं च स्यात् बह्वर्यम्णी पदं भवेत् ।
स्याद् बह्वर्यमनी तत्र भवेद् बह्वर्यमाणि च ॥ ८५

## अथ जकारान्तप्रकरणम्

### असृज्

अस्रृज् यदा भवेच् शब्दः प्रत्ययः "सु" परे यदा ।
तदा तत्र भवेत् कुत्वं विधानाद् हि सृजेः क्विनः ॥ ८६
असृग् भवेत् पदं तत्र कुत्वं यदा प्रवर्त्तते ।
असृक् स्याच्च पदं तत्र शकारस्य षकारता ॥ ८७

### पूर्व्वपक्षः

विश्वसृज् स्याद् यदा शब्दः प्रत्ययः "सु" परे यदा ।
विश्वसृग् विश्वसृक् स्याच्च कुत्वं भवेत् तदापि च ॥ ८८

### उत्तरपक्षः

विश्वसृज् स्याद् यदा शब्दः प्रत्ययः "सु" परे यदा ।
न स्म भवेत् तदा कुत्वं न च तथा पदं भवेत् ॥ ८९
"सृजिदृशोः" स्थितं सूत्रं तत्र भाष्यं स्थितं खलु ।
"रज्जुसृड्भ्याम्" पदं भाष्ये तत् प्रमाणं भवेदिह ॥ ९०
"रज्जुसृड्भ्याम्" पदं तत्र कुत्वं तत्र न दृश्यते ।
विश्वसृज् स्याद् यदा शब्दः कुत्वं न स्यात् तदापि च ॥ ९१

"व्रश्चे"ति च स्थितं सूत्रं प्रमाणमथवेह तत् ।
सृजियज्योः पदान्ते हि षत्वं तत्र विधीयते ॥ ९२
न च कुत्वं भवेत्तत्र तत्र कुत्वमपोद्यते ।
अपवादात् च कुत्वस्य न हि कुत्वं भवेदिह ॥ ९३

### पूर्व्वपक्षः

"ऋत्विगि"ति स्थितं सूत्रं स्रग् ऋत्विक् तत्र दृश्यते ।
तत्र तत्र भवेत् कुत्वं कुत्वं भवेदिहापि च ॥ ९४

### उत्तरपक्षः

स्रक्शब्दो यः स्थितस्तत्र ऋत्विक् शब्दः स्थितश्च यः ।
स स निपातनात् तत्र कुत्वं तत्र निपात्यते ॥ ९५

अथवा च समाधानमन्यथापि भवेदिह ।
अस्यतेः प्रत्ययः ऋच् स्यात् पुनरौणादिके खलु ॥ ९६

असृज् शब्दस्तथा सिध्येत् समाधानं भवेत्तथा ।
न सृजिति तत्पुरुषो नैव खलु हि गृह्यते ॥ ९७
असृग्, असृक् तथा सिध्येत् यथापूर्व्वं प्रदर्शितम् ।
असृजी स्यात् ततः पश्चात् स्याद् असृजि ततः परम् ॥ ९८
"पद्दिन्नि"ति स्थितं सूत्रं तदिह चेत् प्रयुज्यते ।
असन् भवेत् समादेशः पदम् असन् तथा भवेत् ॥ ९९
असानि स्यात् पदं तत्र अस्ना स्याद् असृजा तथा ।
असृग्भ्याम् स्याद् असभ्याम् स्यात् पदमूह्यं परं बुधैः ॥ १००

ऊर्ज्

पदम् ऊर्क् स्यात् पदम् ऊर्ग् स्यात् ऊर्जी भवेत् ततः परम् ।
ऊर्न्जि स्याच्च पदं तत्र नरजानां च मेलनम् ॥ १०१

वहूर्जि नुम्प्रतिषेधः (वा)

अन्त्यात् पूर्व्वो वा नुम् (वा)

"वहूर्जि" स्यात् पदं तत्र न नुमिह प्रयुज्यते ।
"वहूर्जि" स्यात् पदं तत्र अन्त्यात् पूर्व्वे यदा च नुम् ॥ १०२

## अथ दकारान्तप्रकरणम्

त्यद्

"त्यद्" स्यात् खलु पदं तत्र "त्यत्" पदं च तथा भवेत् ।
त्ये भवेच्च पदं तत्र पदं त्यानि भवेत्तथा ॥ १०३

तद्

तद् स्यात् खलु पदं तत्र "तत्" पदं च तथा भवेत् ।
ते भवेच्च पदं तत्र पदं तानि भवेत्तथा ॥ १०४

यद्

यद् स्यात् खलु पदं तत्र "यत्" पदं च तथा भवेत् ।
ये भवेच्च पदं तत्र पदं यानि भवेत्तथा ॥ १०५

एतद्

एतद् स्याच्च पदं तत्र पदम् एतत् तथा भवेत् ।
एते स्याच्च पदं तत्र पदम् एतत् तथा भवेत् ॥ १०६

एतद् यदा भवेच् शब्दः अन्वादेशो भवेद् यदा ।
पदं भवेत् तदा तत्र एनं खलु सतां मते ॥ १०७

बेभिद्

बेभिद्धनेः यदा क्विप् स्यात् शब्दो बेभिद् भवेत्तदा ।
बेभिद् भवेत् पदं तत्र पदं बेभित् पुनर्भवेत् ॥ १०८
बेभिद् यदा भवेच् शब्द प्रत्ययः औ परे यदा ।
बेभिदी स्यात् पदं तत्र विशेषश्च न वर्त्तते ॥ १०९
बेभिद् यदा भवेच् शब्दः प्रत्ययो जश् परे यदा ।
आदेशः शि भवेदत्र बेभिदि च पदं भवेत् ॥ ११०

पूर्व्वपक्षः

आदेश "शि" यदा तत्र नुम् तदा च प्रवर्त्तते ।
बेभिन्दि स्यात् पद तत्र बेभिदि न पदं भवेत् ॥ १११

उत्तरपक्षः

आदेशः "शि" स्थितस्तत्र अल्लोपश्च स्थितः पुनः ।
अल्लोपः स्थानिवत् तत्र झलन्तता तथा च न ॥ ११२
झलन्तता यदा न स्यात् न नुमपि भवेत्तदा ।
बेभिन्दि न पदं हि स्यात् बेभिदि च पदं भवेत् ॥ ११३

पूर्व्वपक्षः

अजन्तलक्षणं नुम् च पुनस्तत्र प्रवर्त्तते ।
बेभिन्दि स्याात् पदं तत्र न बेभिदि पदं भवेत् ॥ ११४

उत्तरपक्षः

स्वविधौ स्थानिवत्त्वं न मतमिह भवेत् सताम् ।
न नुम् तत्र न बेभिन्दि बेभिदि च पदं भवेत् ॥ ११५
चेच्छिद् यदा भवेच् शब्दः प्रत्यतो जश् परे यदा ।
चेच्छिदः स्यात् पदं तत्र समं विधिः प्रवर्त्तते ॥ ११६

२६।४।१९७५—
२७।४।१९७५
द्वौ दिवसौ – ११६ श्लोकाः

आरम्भः २०।४।१६७५
रविवारः

## अथ चकारान्तप्रकरणम्

### गवाक् शब्दप्रक्रिया

गो + अञ्च् + क्विन् =

(१) गोअञ्च्, गवाञ्च्, गोऽञ्च् (नकारे पूजायाम्)
(२) गोअच्, गवाच्, गोऽच् (नलोपे गतौ)

रूपाणि कानि वा तत्र भवन्ति कुत्र कानि वा।
विषये च पुनस्तस्मिन् वादः कश्चित् स्थितः पुरा॥ ११७

नरपतिसभामध्ये आक्षेपः केनचित् कृतः।
समाधानं पुनर्दत्तं तत्रैव तस्य केनचित्॥ ११८

आक्षेपः

"जायन्ते नव सौ तथाऽमि च नव भ्याम्भिस्भ्यसां सङ्गमे
षट्संख्यानि नवैव सुप्यथ जशि त्रीण्येव तद्वच्छसि।
चत्वार्य्यन्यवचःसु कस्य विबुधाः शब्दस्य रूपाणि तद्
जानन्तु प्रतिभाऽस्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः॥"

समाधानम्

"गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः।
असन्ध्यवङ्पूर्व्वरूपै नवाधिकं शतं मतम्॥
स्वम्सुप्सु नव षड् भादौ षट्केस्यु स्त्रीणि जश्शसोः।
चत्वारि शेष दशके रूपाणीति विभावय॥"

समाधानं समाश्रित्य पद्यानि दर्शयामि ते।
यथाक्रमं यथासंख्यमिह दत्तं पदं मया॥ ११६

गामञ्चति यदा तत्र प्रत्ययः क्विन् यदा पुनः।
पूजा यदा भवेदर्थो नकारश्च भवेत्तदा॥ १२०

नकारः स्याद् यदा तत्र "गो अञ्च्" रूपं तदा भवेत्।
सन्धेरिह प्रसङ्गः स्यात् सन्धौ शब्दो भवेद् यथा॥ १२१

"सर्व्वत्रे"ति स्थितं सूत्रं तद् यदा च प्रयुज्यते।
तदा प्रकृतिभावः स्यात् "गोअञ्च्" शब्दस्तदा भवेत्॥ १२२

"अवङ्"—इति स्थितं सूत्रं तद् यदा च प्रयुज्यते ।
अवङ् तदा भवेत्तत्र "गवांच्" शब्दो भवेत्तदा ॥ १२३
पूर्व्वरूपं यदा तत्र पुनः सन्धौ प्रजायते ।
"गोऽञ्च्" भवेच्च तदा शब्दः शब्दत्रयं भवेत्तथा ॥ १२४

"गोअञ्च्" तत्र भवेच् शब्दः "गवांच्" शब्दो भवेत् पुनः ।
"गोऽञ्च्" शब्दश्च भवेत्तत्र प्रत्येकं प्रकृतिर्भवेत् ॥ १२५

## (क) सु [१]

"गोअञ्च्" यदा भवेच् शब्दः प्रत्ययः "सु" परे यदा ।
नस्य कुत्वे पुनर्ङत्वे "गोअङ्" पदं तदा भवेत् ॥ १२६
"गवांच्" यदा भवेच् शब्दः प्रत्ययः "सु" परे यदा ।
नस्य कुत्वे पुनर्ङत्वे "गवाङ्" पदं तदा भवेत् ॥ १२७
"गोऽञ्च्" भवेच्च यदा शब्दः प्रत्ययः "सु" परे यदा ।
नस्य कुत्वे पुनर्ङत्वे पदं च "गोऽङ्" भवेत्तदा ॥ १२८
"गोअङ्" पदं भवेत्तत्र "गवाङ्" पदं भवेत् पुनः ।
पदं "गोऽङ्" च भवेत्तत्र पदत्रयं तथा भवेत् ॥ १२९
गामञ्चति यदा तत्र प्रत्ययः क्विन् यदा पुनः ।
गतिर्यदा भवेदर्थो नकारश्च विलुप्यति ॥ १३०
नकारं च विना तत्र "गो अच्" रूपं तदा भवेत् ।
सन्धेरिह प्रसङ्गः स्यात् सन्धौ शब्दो भवेद् यथा ॥ १३१

"सर्व्वत्रे"ति स्थितं सूत्रं तद् यदा च प्रयुज्यते ।
तदा प्रकृतिभावः स्यात् "गोअच्" शब्दस्तदा भवेत् ॥ १३२
"अवङ्"—इति स्थितं सूत्रं तद् यदा च प्रयुज्यते ।
अवङ् तदा भवेत्तत्र "गवाच्" शब्दस्तदा भवेत् ॥ १३३
पूर्व्वरूपं यदा तत्र पुनः सन्धौ प्रजायते ।
"गोऽच्" भवेच्च तदा शब्दः शब्दत्रयं तथा भवेत् ॥ १३४

"गोअच्" तत्र भवेच् शब्दः "गवाच्" शब्दो भवेत् पुनः ।
"गोऽच्" शब्दश्च भवेत्तत्र प्रत्येकं प्रकृतिर्भवेत् ॥ १३५

[क] सु [२]

"गो अच्" यदा भवेच् शब्दः प्रत्ययः "सु" परे यदा ।
"गो अक्" तत्र पदं च स्यात् "गोअग्" पदं भवेत्तथा ॥ १३६
"गवाच्" यदा भवेच् शब्दः प्रत्ययः "सु" परे यदा ।
"गवाक्" भवेत् पदं तत्र "गवाग्" पदं भवेत्तथा ॥ १३७
"गोऽच्" तत्र च यदा शब्दः प्रत्ययः "सु" परे यदा ।
तदा "गोऽक्" स्यात् पदं तत्र पदं "गोऽग्" स्यात् तथैव च ॥ १३८
गतिर्यदा भवेदर्थो नकारो न भवेद् यदा ।
पदषट्कं तदा तत्र यथा मया प्रदर्शितम् ॥ १३९
पूजा यदा भवेदर्थो नकारश्च स्थितो यदा ।
पदत्रयं भवेत्तत्र यथा मया प्रदर्शितम् ॥ १४०
गतिर्यदा भवेदर्थो नकारो न स्थितो यदा ।
पदषट्कं तदा तत्र यथा मया प्रदर्शितम् ॥ १४१
पदत्रयं भवेदादौ पदषट्कं परे भवेत् ।
मिलितं चेत् द्वयं तत्र स्यात् पदनवकं तदा ॥ १४२

[ख] अम्

"सु" प्रत्यये पदं यद् यत् तत्तत् पदं भवेदमि ।
विशेषो न स्थितस्तत्र न किञ्चिदुच्यते ततः ॥ १४३

[ग] सुप्

पूजा यदा भवेदर्थो गवाञ्च् शब्दो भवेद् यदा ।
प्रत्ययः सुप् परे स्याच्चेत् "ङ्णो" रिति स्यात् कुगागमः ॥ १४४
गवाङ्क्षु स्यात् पदं तत्र गोअङ्क्षु स्यात् तथा पदम् ।
गोङ्क्षु पदं भवेत्तत्र सर्व्वत्रैव कुगागमः ॥ १४५
गवाङ्षु स्यात् पदं तत्र गोअङ्षु च पदं भवेत् ।
गोङ्षु तत्र पदं च स्यात् कुगागमो यदा च न ॥ १४६
गतिर्यदा भवेदर्थो "गवाच्" शब्दो भवेद् यदा ।
प्रत्ययः सुप् परे स्याच्चेत् पदं तदा भवेद् यथा ॥ १४७
गवाक्षु स्यात् पदं तत्र गोअक्षु स्यात् पदं पुनः ।
गोऽक्षु पदं भवेत्तत्र पदत्रयं तथा भवेत् ॥ १४८
आदौ षट्कं स्थितं तत्र त्रयं परे भवेत् पुनः ।
मिलितं चेद् द्वयं तत्र स्यात् पदनवकं तदा ॥ १४९

पूर्व्वपक्षः

गवाङ्क्षु च गोअङ्क्षु च गोङ्क्षु च पूजने त्रयम् ।
प्रातिष्विकं ककारस्तु पुनरिह प्रवर्त्तते ॥ १५०
गवाक्षु च गोअक्षु च गोक्षु चेति गतौ त्रयम् ।
प्रातिष्विकं ककारस्तु पुनरिह प्रवर्त्तते ॥ १५१
ककारवत् त्रयं पूर्व्वे ककारवत् त्रयं परे ।
ककारवत् भवेत् षट्कं संकलनं यदा भवेत् ॥ १५२

ककारवद् यदा षट्कं पुनरेकं भवेदिह ।
"चय"श्चेति स्थितं तत्र तन्प्रयोज्यं भवेत् पुनः ॥ १५३
"चय"श्चेति यदा तावत् प्रयुक्तं च भवेदिह ।
ककारस्य खकारः स्यात् प्रथमस्य द्वितीयता ॥ १५४
ककारवत् तदा तत्र पदष्टकं पुनर्भवेत् ।
पदषट्कं तथा तत्र समधिकं भवेत् पुनः ॥ १५५

उत्तरपक्षः

गवाक्षु च गोअक्षु च गोक्षु चेति गतौ त्रयम् ।
ककारस्तु भवेत्तत्र "खरि" यदा प्रयुज्यते ॥ १५६
"खरि" तावदसिद्धं स्यात् न तस्मात् "क" स्थितो भवेत् ।
"क" नास्ति च यदा तत्र "चय"श्चेति न युज्यते ॥ १५७
"चय"श्चेति न युक्तं चेत् खकारोऽपि भवेन्न च ।
खकारवत् पदं न स्यात् खकारवत् त्रयं च न ॥ १५८
गवाङ्क्षु च गोअङ्क्षु च गोङ्क्षु च पूजने त्रयम् ।
कुत्वं तत्र स्यादसिद्धं जश्त्वमपि भवेन्न च ॥ १५९

वरं पक्षे "चय"श्चेति पुनरिह प्रयुज्यते ।
प्रथमस्य द्वितीयः स्यात् तदा तत्र तथा खलु ॥ १६०
ककारस्य खकारश्च तदा तत्र प्रजायते ।
लभ्यते च खकारवत् पुनस्तत्र पदत्रयम् ॥ १६१

गतौ तत्र त्रयं धृत्वा पूजने च त्रयं पुनः ।
दर्शितं यत् षड़ाधिक्यं तन्न न्याय्यं भवेदिह ॥ १६२

आधिक्यं च त्रयाणां स्याद् वरमिह सतां मते ।
द्वादशैव पदानि स्युधृत्वा त्रयं परे सुपि ॥ १६३

पूर्व्वपक्ष:

"स्वमि"ति कारिका तत्र सा च लोके वहुश्रुता ।
सुपि नव पदानि स्युरिति तत्र प्रदर्शितम् ॥ १६४
इह यदा भवेत् व्याख्या संख्या स्यादन्यथा तदा ।
द्वादश च भवेत् संख्या विरोधश्च ततो भवेत् ॥ १६५

उत्तरपक्ष:

सूत्रकारमतेनैव नव तत्र पदानि ह ।
नवानां ग्रहणात् तत्र नवाधिकं शतं खलु ॥ १६६
व्याख्यातॄणां मते तत्र द्वादशैव पदानि च ।
ग्रहणाद् द्वादशानाञ्च स्यु द्वादशाधिकं शतम् ॥ १६७

द्वादशेति पुन: संख्या भवेदिह प्रदर्शिता ।
"ऊह्यमि"ति कारिकायां सा संख्या च प्रयोजनम् ॥ १६८
सुपि चतुरशीतिश्च संख्या तत्र प्रदर्शिता ।
इह यदा द्वादश स्युः तदा तत्र तथा भवेत् ॥ १६९

"स्वमि"ति च कारिका स्यात् सूत्रकारमतं यदि ।
"ऊह्यमि"ति कारिका स्यात् व्याख्यातॄणां मतं यदा ॥ १७०

[घ] भ्याम् भ्याम् भ्याम्

गतिर्यया भवेदर्थो गवाच् शब्दो भवेद् यदा ।
प्रत्ययोभ्याम परे स्याच्चेत् पदत्रयं तदा भवेत् ॥ १७१
गवाङ्भ्याम स्यात् पदं तत्र गोअङ्भ्याम च पदं भवेत् ।
गोङ्भ्याम स्याच्च पदं तत्र पदत्रयं तथा मतम् ॥ १७२
गतिर्यदा भवेदर्थो गवाच् शब्दो भवेद् यदा ।
प्रत्ययो भ्याम परे स्याच्चेत् पदत्रयं तथा मतम् ॥ १७३
गवाग्भ्याम स्यात् पदं तत्र गोअग्भ्याम् च पदं भवेत् ।
गोग्भ्याम् भवेत् पदं तत्र पदत्रयं तथा मतम् ॥ १७४
आदौ त्रयं त्रयं पश्चात् पदषट्कं तथा भवेत् ।
भ्यामि परे तृतीयाद्यां तथा तत्र पदानि षट् ॥ १७५

भ्यामि परे चतुर्थ्याञ्च पदानि षट् तथैव च ।
भ्यामिं परे पञ्चम्याञ्च तथैव हि पदानि षट् ॥ १७६

[ङ] भिस्

पूजा यदा भवेदर्थो गवाञ्च् शब्दो भवेद् यदा ।
प्रत्ययो भिस् परे स्याच्चेत् पदत्रयं तदा भवेत् ॥ १७७
गवाङ्भिः स्यात् पदं तत्र गोअङ्भिः च पदं भवेत् ।
गोङ्भिः भवेत् पदं तत्र पदत्रयं तथा मतम् ॥ १७८
गतिर्यदा भवेदर्थो "गवाच्" शब्दो भवेद् यदा ।
प्रत्ययो भिस् पुनः स्याच्चेत् पदत्रयं तदा भवेत् ॥ १७९
गवाग्भिः स्यात् पदं तत्र गोअग्भिः स्तात् पदं पुनः ।
पदं गोऽग्भिः भवेत् तत्र पदत्रयं तथा भवेत् ॥ १८०
आदौ त्रयं त्रयं पश्चात् पदषटकं भवेत्तथा ।
भिस् यदा स्यात् परे तत्र पदट्कं प्रजायते ॥ १८१

(च) भ्यस् भ्यस्

पूजा यदा भवेदर्थो "गवाञ्च्" शब्दो भवेद् यदा ।
प्रत्ययो भ्यास् परे स्याच्चेत् पदत्रयं तदा भवेत् ॥ १८२
गवाङ्भ्यः स्यात् पदं तत्र गोअङ्भ्यः स्यात् पदं पुनः ।
पदं गोऽङ्भ्यः भवेत्तत्र पदत्रयं भवेत्तथा ॥ १८३
गतिर्यदा भवेदर्थो "गवाच्" शब्दो भवेद् यदा ।
प्रत्ययो भ्यस् परे स्याच्चेत् पदत्रयं तदा भवेत् ॥ १८४
गवाग्भ्यः स्यात् पदं तत्र गोअग्भ्यः स्यात् पदं पुनः ।
पदं गोग्भ्य तथा च स्यात् पदत्रयं तथा भवेत् ॥ १८५
आदौ त्रयं त्रयं पश्चात् पदषटकं तथा भवेत् ।
भ्यस् यदा स्यात् परे तत्र पदट्कं प्रजायते ॥ १८६
पञ्चम्यां भ्यस् यदा तत्र पदं भवेत् तथैव च ।
पदषटकं च तत्रापि यथापूर्व्वं प्रजायते ॥ १८७

(छ) जश् जश्

पूजा यदा भवेदर्थो "गवाञ्च्" शब्दो भवेद् यदा ।
प्रत्ययो जश् परे स्याच्चेत् पदत्रयं तदा भवेत् ॥ १८८

"जश्शसोः शि" स्थितं सूत्रं तदिह च प्रयुज्यते ।
शिः सर्व्वनामस्थानं स्यात् नुमागमो भवेत्तथा ॥ १८९
गवाञ्चि स्यात् पदं तत्र गोअञ्चि च पदं भवेत् ।
पदं गोऽञ्चि भवेत्तत्र पदत्रयं तथा मतम् ॥ १९०
गतिर्यदा भवेदर्थो "गवाच्" शब्दो भवेद् यदा ।
प्रत्ययो जश् परे स्याच्चेत् पदत्रयं तदा भवेत् ॥ १९१
"जश्शसोः शिः" स्थितं सूत्रं तदिह च प्रयुज्यते ।
शिः सर्व्वनामस्थानं स्यात् नुमागमो भवेत्तथा ॥ १९२
गवाञ्चि स्यात् पदं तत्र गोअञ्चि स्यात् पदं पुनः ।
पदं गोऽञ्चि भवेत्तत्र पदत्रयं तथा मतम् ॥ १९३
गवाञ्च् यदा भवेच् शब्दस्तदा रूपं यथा भवेत् ।
गवाच् यदा भवेत् शब्दो रूपं तदा भवेत्तथा ॥ १९४
गतिपूजनयोस्तत्र रूपं भवेत् समं खलु ।
भेदोनास्ति तयो रूपे प्रपञ्चार्थं द्वयं धृतम् ॥ १९५
जशि परे यथा तत्र शसि परे तथैव च ।
यत् त्रयं स्यात् जशि तत्र त्रदेव हि त्रयं शसि ॥ १९६
सौ पदं च मया दत्तं दत्तम् अमि पदं मया ।
सुपि पदं मया दत्तं दत्तं दत्तेन सर्व्वशः ॥ १९७
भ्वादौ षट्के पदं दत्तं दत्तं जशि पुनः शसि ।
यत् स्थितं तत् मया दत्तं दत्तेनेह च सर्व्वथा ॥ १९८

सौ नव स्युर्नवामि स्युः सुपि स्युश्च पुनर्नव ।
स्युः सप्तविंशतिस्तस्मात् आनय योगतः सुधीः ॥ १९९
भ्वादौ षट्के पुनस्तत्र प्रत्येकं षट् पदानि च ।
प्रत्येकं षट् यदा षट्सु षट्त्रिंशत् स्युस्तदा पुनः ॥ २००
सप्तविंशतिरादौ च षट्त्रिंशच्च परे पुनः ।
मिलितं चेद् भवेद् द्वयं त्रिषष्टिः स्युः पदानि च ॥ २०१
जशि त्रयं स्थितं तत्र शसि त्रयं स्थितं पुनः ।
मिलितं चेद् द्वयं तत्र पदषट्कं तदा भवेत् ॥ २०२
आदौ तत्र द्विषष्टिश्च परे तत्र पुनश्च षट् ।
आनय योगतो धीमान् तदा स्युरूनसप्ततिः ॥ २०३

एकादशविभक्तिषु यद् यत् पदं भवेदिह ।
तत्तत् सर्व्वं मया दत्तम् इतः पूर्व्वं यथायथम् ॥ २०४
शिष्टासु पुनर्दशसु यद् यत् पदं भवेदिह ।
तत्तदत्र प्रवक्ष्मि ते शृणु तावत् समाहितः ॥ २०५

दशसु प्रत्येकं तत्र चत्वारि स्युः पदानि च ।
प्रत्येकं तु पदं तत्र परे मया प्रदीयते ॥ २०६

(ज) औ औट्

पूजा यदा भवेदर्थो नकारश्च स्थितो यदा ।
गवाञ्च्, गोअञ्च्, पुनः गोऽञ्च् च यदा शब्दो भवेदिह ॥ २०७
प्रत्यय औ परे स्याच्चेत् षदत्रयं तदा भवेत् ।
गवाञ्चौ स्यात् गोअञ्चौ स्यात् गोऽञ्चौ स्याच्च पदं तदा ॥ २०८
गतिर्यदा भवेदर्थो नकारश्च विलुप्यति ।
पदमेकं तदा तत्र पदं गोची भवेत्तदा ॥ २०९
शीभावश्च भवेदत्र भसंज्ञा च प्रवर्त्तते ।
अकारस्य भवेल्लोपः पदं गोची तथा भवेत् ॥ २१०
औ परे स्यात् यदा तत्र तदा पदं भवेत्तथा ।
चत्वारि च पदानि स्युः दर्शितानि यथा मया ॥ २११
औट् परे चेत् भवेत्तत्र तथैव च पदं भवेत् ।
तत्रापि तानि चत्वारि विशेषश्च न दृश्यते ॥ २१२

(झ) टा

पूजा यदा भवेदर्थो नकारश्च स्थितो यदा ।
गवाञ्च् गोअञ्च् पुनः गोऽञ्च् च यदा शब्दो भवेदिह ॥ २१३
प्रत्ययः "टा" परे स्याच्चेत् पदत्रयं तदा भवेत् ।
गवाञ्चा स्यात् गोअञ्चा स्यात् पदं गोऽञ्चा भवेत्तदा ॥ २१४
गतिर्यदा भवेदर्थो नकारो लुप्यते यदा ।
गवाच् गोअच् पुन गोऽच् च यदा शब्दो भवेदिह ॥ २१५
प्रत्ययः "टा" परे स्याच्चेत् पदमेकं तदा भवेत् ।
पदं गोचा भवेत्तत्र पदमेकं तदेव हि ॥ २१६
प्रत्ययः टा परे स्याच्चेत् पदचतुष्टयं भवेत् ।
गवाञ्चा स्यात् गोअञ्चा स्यात् गोऽञ्चा गोचा भवेत्तथा ॥ २१७

(झ) ङे

पूजा यदा भवेदर्थो नकारश्च स्थितो यदा ।
गवाञ्च् गोअञ्च् पुनः गोऽञ्च् च यदा शब्दो भवेदिह ॥ २१८
प्रत्ययो ङे परे स्याच्चेत् पदत्रयं तदा भवेत् ।
गवाञ्चे स्यात् गोअञ्चे स्यात् पदं गोञ्चे भवेत्तथा ॥ २१९
गतिर्यदा भवेदर्थो नकारो न स्थितो यदा ।
गवाच् गोअच् पुनः गोऽच् च यदा शब्दो भवेदिह ॥ २२०
प्रत्ययो ङे परे स्याच्चेत् पदमेकं तदा भवेत् ।
पदं गोचे भवेत्तत्र पदमेकं तदेव हि ॥ २२१
प्रत्ययो ङे परे स्याच्चेत् पदचतुष्टयं भवेत् ।
गवाञ्चे स्यात् गोअञ्चे स्यात् गोञ्चे गोचे भवेत्तथा ॥ २२२

[ञ] ङसि

पूजा यदा भवेदर्थो नकारश्च स्थितो यदा ।
गवाञ्च् गोअञ्च् पुनः गोञ्च् च यदा शब्दो भवेदिह ॥ २२३
प्रत्ययो ङसि चेत् परे पदत्रयं तदा भवेत् ।
गवाञ्चः स्यात् गोअञ्चः स्यात् पदं गोञ्चः भवेत्तदा ॥ २२४
गतिर्यदा भवेदर्थो नकारो न स्थितो यदा ।
गवाच् गोअच् पुनःगोच् च यदा शब्दो भवेदिह ॥ २२५
प्रत्ययो ङसि चेत् परे पदकेकं तदा भवेत् ।
पदं गोचः भवेत्तत्र पदमेकं तदेव हि ॥ २२६
प्रत्ययो ङसि चेत् परे पदचतुष्टयं भवेत् ।
गवाञ्चः स्यात् गोअञ्चः स्यात् गोञ्चः गोचः भवेत्तथा ॥ २२७

[ट) ङस्

ङसौ परे यथा तत्र ङसि परे तथैव च ।
न हि भेदः स्थितो रूपे यत् तत्र स्यात् तदत्र च ॥ १२८
गवाञ्चः स्यात् गोअञ्चः स्यात् गोञ्चः गोचः पदं भवेत् ।
पूर्वं चतुष्टयं यत् स्यात् परे चतुष्टयं हि तत् ॥ २२९

(ठ) ओस् ओस्

पूजा यदा भवेदर्थो नकारश्च स्थितो यदा ।
गवाञ्च् गोअञ्च् पुनः गोऽञ्च् च यदा शब्दो भवेदिह ॥ २३०

प्रत्यय ओस् परे स्याच्चेत् पदत्रयं तदा भवेत् ।
गवाञ्चोः स्यात् गोअञ्चोः स्यात् पदं गोञ्चोः भवेत्तथा ॥ २३१
गतिर्यदा भवेदर्थो नकारो न स्थितो यदा ।
गवाच् गोअच् पुनर्गोच् च यदा शब्दो भवेत् पुनः ॥ २३२
प्रत्यय ओस् परे स्याच्चेत् पदमेकं तदा भवेत् ।
पदं गोचोः भवेत्तत्र पदमेकं तदेव हि ॥ २३३
प्रत्यय ओस् परे स्याच्चेत् पदचतुष्टयं भवेत् ।
गवाञ्चोः स्यात् गोअञ्चोः स्यात् गोञ्चोः गोचोः भवेत्तथा ॥ २३४
षष्ठ्यामोसि पदं यत् तत् पुनरिह प्रदर्शितम् ।
ओसि पुनश्च सप्तम्यां तदेव भवेत् पदम् ॥ २३५
गवाञ्चोः स्यात् गो अञ्चोः स्यात् गोञ्चो गोचो भवेत्तथा ।
पदचतुष्टयं तावत् सप्तम्यामोसि वर्तते ॥ २३६

(ङ) आम्

पूजा यदा भवेदर्थो नकारश्च स्थितो यदा ।
गवाञ्च् गोअञ्च् पुनर्गोञ्च् च यदा शब्दो भवेदिह ॥ २३७
प्रत्यय आम् परे स्याच्चेत् पदत्रयं तदा भवेत् ।
गवाञ्चां स्यात् गोअञ्चां स्यात् गोञ्चाम् स्याच्च पदं तदा ॥ २३८
गतिर्यदा भवेदर्थो नकारो न स्थितो यदा ।
गवाच् गोअच् पुनर्गोच् च यदा शब्दो भवेदिह ॥ २३९
प्रत्यय आम परे स्याच्चेत् पदमेकं तदा भवेत् ।
गोचाम् भवेत् पदं तत्र पदमेकं तदेव हि ॥ २४०
प्रत्यय आम परे स्याच्चेत् पदचतुष्टयं भवेत् ।
गवाञ्चां स्यात् गोअञ्चां स्यात् गोञ्चाम् गोचां भवेत्तथा ॥ २४१

(ढ) ङि

पूजा यदा भवेदर्थो नकारश्च स्थितो यदा ।
गवाञ्च् गोअञ्च् पुनर्गोञ्च् च यदा शब्दो भवेदिह ॥ २४२
प्रत्ययो ङि परे स्याच्चेत् पदत्रयं तदा भवेत् ।
गवाञ्चि स्यात् गोअञ्चि स्यात् गोञ्चि गोचि पदं तदा ॥ २४३
गोतिर्यदा भवेदर्थो नकारो न स्थितो यदा ।
गवाच् गोअच् पुन र्गोच् च यदा शब्दो भवेदिह ॥ २४४

प्रत्ययो ङि परे स्याच्चेत् पदमेकं तदा भवेत् ।
पदं गोचि भवेत्तत्र पदमेकं तदेव हि ॥ २४५
प्रत्ययो ङि परे स्याच्चेत् पदचतुष्टयं भवेत् ।
गवाञ्चि स्यात् गोअञ्चि स्यात् गोञ्चि गोचि भवेत्तथा ॥ २४६
दशसु च विभक्तिषु रूपं मया प्रदर्शितम् ।
प्रत्येकं चत्वारि तत्र पदानि स्युरिति स्थितिः ॥ २४७
दशसु प्रत्येकं तत्र चत्वारि च यदा पुनः ।
चत्वारिंशत् तदा तत्र साकल्येन भवन्ति च ॥ २४८

दर्शितानि मया पूर्व्वं रूपाणि चोनसप्ततिः ।
चत्वारिंशत् पुनश्चात्र दर्शितानि भवन्ति च ॥ २४९
संकलनं यदा तत्र नवाधिकं शतं तदा ।
"स्वमि"ति च कारिकायां तथा संख्या प्रदर्शिता ॥ २५०

**"ऊह्यमेषां द्विर्वचनानुनासिकविकल्पनात् ।**
**रूपाण्यश्वाक्षिभूतानि (५२७) भवन्तीति मनीषिभिः ॥ २५१**

पञ्चशती यथा यत्र विंशतिश्च यथा पुनः ।
पुनः सप्त यथा तत्र दर्शयामि तथा परे ॥ २५२

प्रथमा

सु—(१) गवाङ् गोअङ् गोऽङ् (पूजायाम्)
(२) गवाक् गवाग्, गोअक् गोअग्,
गोऽक् गोऽग् (गतौ)

पदानि नव सौ तत्र दर्शितानि यथा मया ।
"अनचि" च स्थितं सूत्रं तदिह च प्रयुज्यते ॥ २५३
अन्त्यस्य च भवेद् द्वित्वं सूत्रं प्रवर्त्तते यदा ।
यदा द्वित्वं भवेत्तत्र लभ्यन्ते च तदा नव ॥ २५४
आदौ तावद् विना द्वित्वं नव तत्र स्थितानि च ।
परे यदा भवेद् द्वित्वं तदा तत्र पुनर्नव ॥ २५५
अष्टादश तथा तत्र संकलनं यदा भवेत् ।
अष्टादश पदानि स्युः "सु" परे च भवेद् यदा ॥ २५६

औ—(१) गवाञ्चौ गोअञ्चौ गोञ्चौ (पूजायाम्)
(२) गोचौ (गतौ)

पूजार्थं तु त्रयं तत्र यथा मया प्रदर्शितम्।
प्रातिष्विकं अकारस्तु पुनस्तत्र प्रवर्त्तते॥ २५७
"अनचि" च स्थितं सूत्रं तत्तत्र च प्रयुज्यते।
अकारस्य भवेद् द्वित्वं पदत्रयं तथा भवेत्॥ २५८
आदौ तत्र विना द्वित्वं स्थितमेव पदत्रयम्।
परे भवेत् त्रयं तत्र द्वित्वं यदा विधीयते॥ २५९
आदौ त्रयं स्थितं तत्र परे तत्र त्रयं पुनः।
पदषट्कं तथा तत्र संकलनं यदा भवेत्॥ २६०
स्थितमेकं गतौ तत्र संयुज्यते पुनश्च तत्।
संयोजनं यदा तत्र स्यात् पदसप्तकं तदा॥ २६१

औ—७

जस्—(१) गवाञ्चि गोअञ्चि गोञ्चि
(पूजायां गतौ च)

पूजायाञ्च गतौ तत्र पदत्रयं स्थितं खलु।
प्रातिष्विकं अकारन्तु पुनरिह प्रवर्त्तते॥ २६२
अकारस्य यदा द्वित्वं पदत्रयं तदा भवेत्।
आदौ तत्र विना द्वित्वं स्थितमेव पदत्रयम्॥ २६३
आदौ त्रयं स्थितं तत्र पश्चात् त्रयं पुनः स्थितम्।
पश्चात् तत्र पुनः षट् च स्यादनुनासिको यदा॥ २६७
संकलनं यदा तत्र द्वादश स्युस्तदा पुनः।
जश् यदा स्यात् परे तत्र द्वादश स्युस्तदा खलु॥ २६८

जश्—१२

अष्टादश तथा सप्त द्वादश च तथा पुनः।
प्रथमायां सप्तत्रिंशत् पदानि स्युरिति स्थितिः॥ २६९

द्वितीया

अम्—(१) गवाङ् गोअङ् गोङ् (पूजायाम्)
(२) गवाक् गवाग्, गोअक् गोअग्,
गोऽक् गोऽग् (गतौ)

पदानि नव तत्रापि दर्शितानि यथा मया ।
"अनचि च" स्थितं सूत्रं तदिहापि प्रयुज्यते ॥ २७०
अन्त्यस्य च भवेद् द्वित्वं सूत्रं प्रवर्त्तते यदा ।
यदा द्वित्वं भवेत्तत्र भवन्ति च तदा नव ॥ २७१
आदौ तत्र विना द्वित्वं नव तावत् स्थितानि हि ।
परे यदा भवेद् द्वित्वं तदा तत्र पुनर्नव ॥ २७२
अष्टादश तथा तत्र संकलनं यदा भवेत् ।
अष्टादश पदानि स्युरमू परे चेद् भवेदिह ॥ २७३

औट्—(१) गवाञ्चौ गोअञ्चौ गोञ्चौ (पूजायाम्)
(२) गोचौ (गतौ)

पूजार्थे तु त्रयं तत्र यथा मया प्रदर्शितम् ।
प्रातिष्विकं अकारस्तु पुनस्तेषु प्रवर्त्तते ॥ २७४
"अनचिच" स्थितं सूत्रं तत्तदा च प्रयुज्यते ।
अकारस्य भवेत् द्वित्वं पदत्रयं तथा भवेत् ॥ २७५
आदौ तत्र विना द्वित्वं स्थितमेव पदत्रयम् ।
परे भवेत् त्रयं तत्र द्वित्वं विधीयते यदा ॥ २७६
आदौ त्रयं स्थितं तत्र परे त्रयं स्थितं पुनः ।
पदषट्कं तथा तत्र संकलनं यदा भवेत् ॥ २७७
स्थितमेकं गतौ तत्र संयुज्यते पुनश्च तत् ।
संकलनं यदा तत्र स्यात् पदसप्तकं तदा ॥ २७८
औट्—७

शस्—(१) गवाञ्चि गोअञ्चि गोञ्चि
(पूजायां गतौ च)

पूजायाञ्च गतौ तत्र पदत्रयं स्थितं पुनः ।
प्रातिष्विकं अकारन्तु पुनस्तेषु प्रवर्त्तते ॥ २७९
अकारस्य यदा द्वित्वं पदत्रयं तदा भवेत् ।
आदौ तत्र विना द्वित्वं स्थितं खलु पदत्रयम् ॥ २८०
आदौ त्रयं स्थितं तत्र पश्चात् त्रयं स्थितं पुनः ।
संकलनं यदा तत्र पदषट्कं तदा भवेत् ॥ २८१

षण्णामेषा पुनश्चान्ते इकारन्तु प्रवर्त्तते ।
"अम"श्चेति स्थितं सूत्रं पुनश्चैतत् प्रयुज्यते ॥ २८२
स्यादनुनासिकस्तत्रं सूत्रं च युज्यते यदा ।
षट् सानुनासिकानि स्युः पदानि च तथा पुनः ॥ २८३
आदौ च षट् स्थितान्येव न यदा चानुनासिकः ।
पश्चात् तत्र पुनः षट् स्युः स्यादनुनासिको यदा ॥ २८४
संकलनं यदा तत्र द्वादश च तदा पुनः ।
शस् यदा स्यात् परे तत्र द्वादश स्युः पुनस्तदा । २८५

शस्—१२

अष्टादश तथा सप्त द्वादश च तथा पुनः ।
द्वितीयायां सप्तत्रिंशत् पदानि स्युरिति स्थितिः ॥ २८६
सु-परे स्याद् यथा तत्र स्याद् अम्-परे तथैव च ।
औपरे स्याद् यथा तत्र औट् परेऽपि भवेत्तथा ॥ २८७
जशि यथा भवेत्तत्र शसि भवेत् तथैव हि ।
प्रथमायां द्वितीयायां रूपाणामेकरूपता ॥ २८८

एकत्वेऽपि च रूपाणाम् उपन्यासः कृतः पृथक् ।
प्रथमायां द्वितीयायां विभक्तेर्नैकरूपता ॥ २८९
इह "सु" स्याद् इह स्याद् "अम" नेकरूपं भवेद् द्वयम् ।
इह स्याद् औ इह स्याद् औट् नेकरूपं द्वयं पुनः ॥ २९०
इह जश् स्यात् इह शस् स्यात् नेकरूपं पुनर्द्वयम् ।
प्रथमायां द्वितीयायां न तेसामेकरूपता ॥ २९१

सु-परे स्याद् यथा तत्र स्याद् अम्- परे तथा न वा ।
औ-परे स्याद् यथा तत्र औट्-परे स्यात् तथा न वा ॥ २९२
जश-परे स्याद् यथा तत्र शस् परे स्यात् तथा न वा ।
इति च संशयश्चित्ते जागर्त्ति पठतामिह ॥ २९३
स संशयो यथा न स्याद् तथा मया विचेष्टितम् ।
रूपाणि च द्वितीयायां दर्शितानि पृथक् मया ॥ २९४
संशयस्य निरासाय विस्पष्टार्थं तथैव च ।
रूपाणामेकरूपत्वेऽपि उपन्यासः कृतः पृथक् ॥ २९५

भ्यामि मया पदं देयं भ्यसि देयं पदं मया ।
विभक्तेरेकरूपत्वात् न हि तत्र पृथक् धृतिः ॥ २९६
एकत्रैव पदं भ्यामि परे मया प्रदर्शितम् ।
एकत्रैव पदं भ्यसि प्रदर्शितं परे मया ॥ २९७

तृतीया

टा—(१) गवाङ्गा गोअङ्गा गोङ्गा (पूजायाम्)
(२) गोचा (गतौ)

पूजार्थे तु त्रयं तत्र यथा मया प्रदर्शितम् ।
प्रातिस्विकं अकारस्तु पुनरिह प्रवर्त्तते ॥ २९८
अकारस्य यदा द्वित्वं पदत्रयं तदा भवेत् ।
आदौ तावत् विना द्वित्वं पदत्रयं स्थितं खलु ॥ २९९
आदौ त्रयं त्रयं पश्चात् इति स्थितिर्भवेदिह ।
मिलितं चेद् भवेद् द्वयं पदषट्कं तदा भवेत् ॥ ३००
स्थितमेकं गतौ तत्र संयुज्यते पुनश्च तत् ।
संयोजनं यदा तत्र स्यात् पदसप्तकं तदा ॥ ३०१
प्रातिस्विकं च सप्तानामाकारः स्यादिहान्ततः ।
"अश"श्चेति च सप्तानामनुनासिकता भवेत् ॥ ३०२
अनुनासिकता स्याच्चेत् सप्त तदा भवन्ति च ।
इहानुनासिकपक्षे लभ्यते सप्तकं तथा ॥ ३०३
आदौ सप्त स्थितान्येव न चानुनासिको यदा ।
परे सप्त भवन्तीह यदा स्यादनुनासिकः ॥ ३०४
आदौ सप्त परे सप्त चतुर्द्दश तथा पुनः ।
टा यदा स्यात् परे तत्र तदा तत्र चतुर्द्दश ॥ ३०५

टा—१४

भ्याम्—(१) गवाङ्भ्याम् गोअङ्भ्याम् गोङ्भ्याम् (पूजायाम्)
(२) गवाग्भ्याम् गोअग्भ्याम् गोऽग्भ्याम् (गतौ)

पूजार्थे च त्रयं तत्र यथा मया प्रदर्शितम् ।
प्रातिस्विकं ङकारस्तु पुनरिह प्रवर्त्तते ॥ ३०६
ङकारस्य यदा द्वित्वं पदत्रयं तदा भवेत् ।
आदौ तावद् विना द्वित्वं पदत्रयं स्थितं खलु ॥ ३०७

आदौ त्रयं स्थितं तत्र पश्चात् त्रयं स्थितं पुनः ।
संकलनं यदा तत्र पदषट्कं तदा भवेत् ॥ ३०८
गतौ त्रयं स्थितं तत्र यथा मया प्रदर्शितम् ।
प्रातिष्विकं गकारस्तु पुनरिह प्रवर्त्तते ॥ ३०९
गकारस्य यदा द्वित्वं पदत्रयं तदा भवेत् ।
आदौ तावद् विना द्वित्वं पदत्रयं स्थितं खलु ॥ ३१०
आदौ त्रयं स्थितं तत्र पश्चात् त्रयं स्थितं पुनः ।
संकलनं यदा तत्र पदषट्कं तदा भवेत् ॥ ३११
आदौ षट्कं स्थितं तत्र पश्चात् षट्कं स्थितं पुनः ।
मिलितं चेद् द्वयं तत्र द्वादश स्युस्तदा खलु ॥ ३१२
द्वादशानां पुनश्चैवं प्रातिष्विकं यकारता ।
यकारस्य भवेद् द्वित्वं "यणो मयः" प्रयुज्यते ॥ ३१३
यकारस्य यदा द्वित्वं द्वादश च तदा पुनः ।
आदौ तत्र विना द्वित्वं द्वादश हि पदानि च ॥ ३१४
आदौ तत्र द्वादश च द्वादश च पुनः परे ।
संकलनं यदा तत्र स्युश्चतुर्विंशतिस्तदा ॥ ३१५

एषां चतुर्विंशतीनां प्रातिष्विकं मकारता ।
मकारस्य पुनर्द्वित्वमिह खलु विधीयते ॥ ३१६
मकारस्य यदा द्वित्वं स्युश्चतुर्विंशतिस्तदा ।
आदौ तत्र विना द्वित्वं चतुर्विंशतिरेव च ॥ ३१७
आदौ चतुर्विंशतिश्च चतुर्विंशतिः परे ।
अष्टाचत्वारिंशत् तत्र संकलनं यदा भवेत् ॥ ३१८
ग्याम—४८

भिस्—(१) गवाङ्भिः गोअङ्भिः गोऽङ्भिः (पूजायाम्)
(२) गवाग्भिः गोअग्भिः गोऽग्भिः (गतौ)

पूजायान्तु त्रयं तत्र यथा मया प्रदर्शितम् ।
प्रातिष्विकं ङकारस्तु पुनरिह प्रवर्त्तते ॥ ३१९
ङकारस्य यदा द्वित्वं पदत्रयं भवेत्तदा ।
आदौ तत्र विना द्वित्वं पदत्रयं स्थितं खलु ॥ ३२०

आदौ त्रयं स्थितं तत्र पश्चात् त्रयं पुनर्भवेत् ।
संकलनं यदा तत्र पदषट्कं भवेत्तदा ॥ ३२१
गतौ त्रयं स्थितं तत्र यथा मया प्रदर्शितम् ।
प्रातिस्विकं गकारन्तु पुनरिह प्रवर्त्तते ॥ ३२२
गकारस्य यदा द्वित्वं पदत्रयं तदा भवेत् ।
आदौ तत्र विना द्वित्वं पदत्रयं स्थितं खलु ॥ ३२३
आदौ त्रयं स्थितं तत्र पश्चात् त्रयं पुनर्भवेत् ।
संकलनं यदा तत्र पदषट्कं भवेत् तदा ॥ ३२४

आदौ षट्कं स्थितं तत्र परे षट्कं पुनः स्थितम् ।
मिलितं चेद् द्वयं तत्र द्वादश स्युस्तदा पुनः ॥ ३२५

प्रातिस्विकं विसर्गश्च द्वादशसु प्रवर्त्तते ।
विसर्गस्य यदा द्वित्वं द्वादश स्युस्तदा पुनः ॥ ३२६
आदौ तत्र विना द्वित्वं द्वादश हि स्थितानि च ।
संकलनं यदा तत्र स्युश्चतुर्विंशतिस्तदा ॥ ३२७
टा यदा स्यात् तदा तत्र पदानि स्युश्चतुर्दश ।
अष्टाचत्वारिंशत् तत्र भ्याम् यदा च परे भवेत् ॥ ३२८
भिस् यदा स्यात् परे तत्र स्युश्चतुर्विंशतिस्तदा ।
षडशीतिस्तथा तत्र तृतीयायां पदानि च ॥ ३२९

तृतीया—८६

चतुर्थी

ङे—(१) गवाग्रे गोअग्रे गोग्रे (पूजायाम)
(२) गोचे (गतौ)

पूजार्थे च त्रयं तत्र यथा मया प्रदर्शितम् ।
प्रातिस्विकं अकारश्च पुनरिह प्रवर्त्तते ॥ ३३०
अकारस्य यदा द्वित्वं पदत्रयं तदा भवेत् ।
आदौ तत्र विना द्वित्वं पदत्रयं स्थितं खलु ॥ ३३१
आदौ त्रयं स्थितं तत्र पश्चात् त्रयं पुनर्भवेत् ।
पदषट्कं तथा तत्र संकलनं भवेद् यदा ॥ ३३२

स्थितमेकं गतौ तत्र संयुज्यते पुनश्च तत् ।
स्यात् पदसप्तकं तत्र संग्रहः सर्व्वथा यदा ॥ ३३३

ङे—७

भ्याम्—(१) गवाङ्भ्यां गोअङ्भ्यां गोङ्भ्यां (पूजायाम्)
(२) गोभ्यां (गतौ)

भ्यामि यथा पदानि स्युः दर्शितानि तथा मया ।
अष्टाचत्वारिंशत् तत्र दर्शितानि च पूर्व्वतः ॥ ३३४

भ्याम—४८

भ्यस्—(१) गवाङ्भ्यः गोअङ्भ्यः गोङ्भ्यः (पूजायाम्)
(२) गवाग्भ्यः गोअग्भ्यः गोग्भ्यः (गतौ)

पूजार्थे च त्रयं तत्र यथा मया प्रदर्शितम् ।
प्रातिष्विकं ङकारस्तु पुनरिह प्रवर्त्तते ॥ ३३५
ङकारस्य यदा द्वित्वं पदत्रयं तदा भवेत् ।
आदौ तत्र विना द्वित्वं पदत्रयं स्थितं खलु ॥ ३३६
आदौ त्रयं स्थितं तत्र पश्चात् त्रयं पुनः स्थितम् ।
पदषट्कं तथा तत्र संकलनं भवेद् यदा ॥ ३३७

गतौ त्रयं स्थितं तत्र यथा मया प्रदर्शितम् ।
प्रातिष्विकं गकारस्तु पुनरिह प्रवर्त्तते ॥ ३३८
गकारस्य यदा द्वित्वं पदत्रयं तदा भवेत् ।
आदौ तत्र विना द्वित्वं पदत्रयं स्थितं खलु ॥ ३३९
आदौ त्रयं स्थितं तत्र पश्चात् त्रयं स्थितं पुनः ।
पदषट्कं तथा तत्र संकलनं यदा भवेत् ॥ ३४०

आदौ षट्कं स्थितं तत्र परे षट्कं पुनः स्थितम् ।
द्वादश च तथा तत्र संकलनं भवेद् यदा ॥ ३४१

द्वादशानां पुनश्चैषां प्रातिष्विकं यकारता ।
यकारस्य भवेद् द्वित्वं "यणो मयः" प्रयुज्यते ॥ ३४२
यकारस्य यदा द्वित्वं द्वादश च तदा पुनः ।
आदौ तत्र विना द्वित्वं द्वादशैव स्थितानि च ॥ ३४३

द्वादश च तथा पूर्व्वे द्वादश च तथा परे ।
संकलनं यदा तत्र स्युश्चतुर्व्विंशतिस्तदा ॥ ३४४

प्रातिष्विकं विसर्गश्च पुनरेषु प्रवर्त्तते ।
विसर्गस्य यदा द्वित्वं स्युश्चतुर्व्विंशतिस्तदा ॥ ३४५
आदौ तत्र विना द्वित्वं चतुर्व्विंशतिरेव च ।
अष्टाचत्वारिंशत् तत्र संकलनं भवेद् यदा ॥ ३४६

पदानि च तदा सप्त ङे यदा च परे पुनः ।
अष्टाचत्वारिंशत् तत्र भ्याम् यदा च परे भवेत् ॥ ३४७
अष्टाचत्वारिंशत् तत्र भ्यस् यदा च परे पुनः ।
चतुर्थ्यान्तु पदानि स्युः त्र्यधिकं च शतं तथा ॥ ३४८

चतुर्थी—१०३

पञ्चमी

ङसि—(१) गवाञ्चः गोअञ्चः गोञ्चः (पूजायाम्)
(२) गोचः (गतौ)

पूजायाञ्च त्रयं तत्र यथा मया प्रदर्शितम् ।
प्रातिष्विकं अकारश्च पुनरिह प्रवर्त्तते ॥ ३४९
अकारस्य यदा द्वित्वं पदत्रयं तदा भवेत् ।
आदौ तत्र विना द्वित्वं पदत्रयं स्थितं खलु ॥ ३५०
आदौ त्रयं स्थितं तत्र पश्चात् त्रयं पुनर्भवेत् ।
संकलनं यदा तत्र पदषट्कं भवेत्तदा ॥ ३५१
पदमेकं गतौ तत्र संयुज्यते पुनश्च तत् ।
संयोजनं यदा तत्र स्यात् पदसप्तकं तदा ॥ ३५२

प्रातिष्विकं विसर्गश्च पुनरिह स्थितः खलु ।
विसर्गस्य भवेद् द्वित्वं स्यात् पदसप्तकं तथा ॥ ३५३
आदौ तत्र विना द्वित्वं सप्तकं च स्थितं खलु ।
संकलनं यदा तत्र चतुर्द्दश तदा पुनः ॥ ३५४

ङसि—१४

भ्याम्—(१) गवाङ्भ्याम् गोअङ्भ्याम् गोङ्भ्याम्
(२) गवाग्भ्याम् गोअग्भ्याम् गोग्भ्याम् (गतौ)

भ्यामि यथा पदानि स्युर्दर्शितानि तथा मया।
अष्टाचत्वारिंशत् तत्र भ्यामि परे भवन्ति च॥ ३५५

भ्याम्—४८

भ्यस्—(१) गवाङ्भ्यः गोअङ्भ्य गोङ्भ्यः (पूजायाम्)
(२) गवाग्भ्यः गोअग्भ्य गोग्भ्यः (गतौ)

भ्यसि यथा रूपाणि स्युर्दर्शितानि तथा मया।
अष्टाचत्वारिंशत् तत्र भ्यसि परे भवन्ति च॥ ३५६
ङसि परे पदानि स्युश्चतुर्दश हि संख्यया।
चत्वारिंशत् तथा चाष्ट भ्यामि परे भवन्ति च॥ ३५७
चत्वारिंशत् तथा चाष्ट भवन्ति च परे भ्यसि।
दशाधिकं शतं तत्र पञ्चम्यां स्युश्च सर्वथा॥ ३५८

षष्ठी

ङस्—(१) गवाङ्ङोः गोअङ्ङोः गोङ्ङोः (पूजायाम्)
(२) गोवोः (गतौ)

पूजायाञ्च त्रयं तत्र यथा मया प्रदर्शितम्।
प्रातिस्विकं अकारश्च पुनरिह प्रवर्त्तते॥ ३६०
अकारस्य यदा द्वित्वं पदत्रयं तदा भवेत्।
आदौ तत्र विना द्वित्वं पदत्रयं स्थितं खलु॥ ३६१
आदौ त्रयं स्थितं तत्र पश्चात् त्रयं स्थितं पुनः।
संकलनं यदा तत्र पदषट्कं तदा भवेत्॥ ३६२
स्थितमेकं गतौ तत्र संयुज्यते पुनश्च तत्।
संयोजनं यदा तत्र स्यात् पदसप्तकं तदा॥ ३६३
प्रातिस्विकं विसर्गश्च पुनरिह प्रवर्त्तते।
विसर्गस्य भवेद् द्वित्वं स्यात् पदसप्तकं तदा॥ ३६४
आदौ च सप्तकं तत्र सप्तकं च परे पुनः।
संकलनं यदा तत्र पदानि स्युश्चतुर्दश॥ ३६५

ओस्—१४

आम्—(१) गवाम्राम् गोअग्राम् गोग्राम् (पूजायाम्)
(२) गोचाम् (गतौ)

पूजायाञ्च त्रयं तत्र यथा मया प्रदर्शितम् ।
प्रातिष्विकं अकारन्त पुनरिह प्रवर्त्तते ॥ ३६६
अकारस्य यदा द्वित्वं पदत्रयं तदा भवेत् ।
आदौ तत्र विना द्वित्वं पदत्रयं स्थितं खलु ॥ ३६७
आदौ त्रयं स्थितं तत्र पश्चात् त्रयं स्थितं पुनः ।
संकलनं यदा तत्र पदषट्कं तदा भवेत् ॥ ३६८
स्थितमेकं गतौ तत्र संयुज्यते पुनश्च तत् ।
संकलनं यदा तत्र स्यात् पदसप्तकं तथा ॥ ३६९

प्रातिष्विकं मकारश्च पुनरिह प्रवर्त्तते ।
मकारस्य भवेद् द्वित्वं स्यात् पदसप्तकं तदा ॥ ३७०
आदौ च सप्तकं तत्र सप्तकं च परे पुनः ।
संकलनं यदा तत्र पदानि स्युश्चतुर्द्दश ॥ ३७१
ङस् यदा स्यात् परे तत्र तदा तत्र चतुर्द्दश ।
ओस् यदा स्यात् परे तत्र तदा तत्र चतुर्द्दश ॥ ३७२
आम् यदा स्यात् परे तत्र तदापि च चतुर्द्दश ।
पदानि द्विचत्वारिंशत् षष्ठ्यामिह भवन्ति च ॥ ३७३

सप्तमी

ङि—(१) गवाग्रि गोअग्रि गोग्रि (पूजायाम्)
(२) गोचि (गतौ)

पूजार्थे च त्रयं तत्र यथा मया प्रदर्शितम् ।
प्रातिष्विकं अकारस्तु पुनरिह प्रवर्त्तते ॥ ३७४
अकारस्य यदा द्वित्वं पदत्रयं तदा भवेत् ।
आदौ तत्र विना द्वित्वं पदत्रयं स्थितं खलु ॥ ३७५
आदौ त्रयं स्थितं तत्र पश्चात् त्रयं पुनः स्थितम् ।
संकलनं यदा तत्र पदषट्कं तदा भवेत् ॥ ३७६
स्थितमेकं गतौ तत्र संयुज्यते पुनश्च तत् ।
संयोजनं यदा तत्र स्यात् पदसप्तकं तदा ॥ ३७७

प्रातिष्विकमिकारश्च तेषामन्ते प्रवर्त्तते ।
स्यादनुनासिकस्तत्र स्यात् पदसप्तकं तथा ॥ ३७८
सप्तकं च स्थितं पूर्व्वे न यदा चानुनासिकः ।
सप्तकं च स्थितं पश्चात् स्यादनुनासिको यदा ॥ ३७९
संकलनं यदा तत्र तदा तत्र चतुर्द्दश ।
ङौ परे च पदानि स्युश्चतुर्द्दश हि सर्व्वथा ॥ ३८०

औस्—(१) गवाञ्चोः गोअञ्चोः गोञ्चोः (पूजायाम्)
(२) गोचोः (गतौ)

ओभि यथा पदानि स्युर्दर्शितानि तथा मया ।
ओसि तत्र पदानि स्युश्चतुर्द्दश हि सर्व्वथा ॥ ३८१

सुप्—(१) पूजायाम्
(क) गवाङ्षु गोअङ्षु गोङ्षु (कुगभावे)
(ख) गवाङ्क्षु गोअङ्क्षु गोङ्क्षु (कुक्पक्षे)
गवाङ्खषु गोअङ्खषु गोअङ्खषु
(१) गतौ—
गवाक्षु गोअक्षु गोक्षु

पूजायाम्

कुगभावे

गवाङ्षु च गोअङ्षु च गोङ्षु चेति पदत्रयम् ।
पूजार्थे च कुग्भावे पदत्रयं प्रवर्त्तते ॥ ३८२
पदत्रयं ङकारवत् पुनरपि भवेच्च तत् ।
ङकारस्य भवेद् द्वित्वं पदत्रयं पुनर्भवेत् ॥ ३८३
आदौ तत्र विना द्वित्वं स्थितमेव पदत्रयम् ।
परे भवेत् त्रयं तत्र द्वित्वं यदा विधीयते ॥ ३८४
आदौ त्रयं स्थितं तत्र पश्चात् त्रयं पुनः स्थितम् ।
संकलनं यदा तत्र पदषट्कं तदा भवेत् ॥ ३८५
पूजा यदा भवेदर्थः कुगभावो यदा पुनः ।
पदषट्कं तदा तत्र यथा मया प्रदर्शितम् ॥ ३८६

कुक्पक्षे

कुक्पक्षे च ककारवत् पदत्रयं प्रवर्त्तते ।
गवाङ्क्षु च गोअक्षु च गोक्षु च तत् पदत्रयम् ॥ ३८७

"चय"श्चेति स्थितं तत्र तद् यदा च प्रयुज्यते ।
ककारस्य खकारः स्यात् खकारवत् भवेत् त्रयम् ॥ ३८८
गवाक्खु च गोअङ्क्खु च गोङ्क्खु पदं तदा भवेत् ।
खकारवत् त्रयं च तत् "चय"— यदा प्रयुज्यते ॥ ३८९
ककारवत् त्रयं तत्र खकारवत् पुनस्त्रयम् ।
संकलनं यदा तत्र पदषट्कं तदा भवेत् ॥ ३९०

षन्नामेषां च कुक्पक्षे प्रातिष्विकं ङकारता ।
ङकारस्य भवेद् द्वित्वं पदषट्कं तथा भवेत् ॥ ३९१
आदौ तत्र विना द्वित्वं पदषट्कं स्थितं खलु ।
परे तत्र भवेत् षट्कं द्वित्वं यदा विधीयते ॥ ३९२
आदौ षट्कं स्थितं तत्र परे षट्कं पुनर्भवेत् ।
संकलनं यदा तत्र द्वादश स्युस्तदा पुनः ॥ ३९३

द्वादशानां पुनश्चैषां प्रातिष्विकं षकारता ।
षकारस्य भवेद् द्वित्वं द्वादश च तदा पुनः ॥ ३९४
आदौ तत्र विना द्वित्वं द्वादश हि स्थितानि च ।
परे तत्र द्वादश स्युर्द्वित्वं यदा विधीयते ॥ ३९५
आदौ तत्र द्वादश च द्वादश च परे पुनः ।
संकलनं यदा तत्र स्युश्चतुर्विंशतिस्तदा ॥ ३९६
पूजा यदा भवेदर्थः कुक् यदा च भवेत् पुनः ।
तदा चतुर्विंशतिः स्यु दर्शितानि यथा मया ॥ ३९७

कुक्पक्षे च तथा कृत्वा स्युश्चतुर्विंशतिः खलु ।
कुगभावे पदानि षट् दर्शितानि च पूर्व्वतः ॥ ३९८
पूजार्थे च तदा त्रिंशत् सर्व्वथा स्युः पदानि च ।
संकलनं यदा तत्र तदा संख्या तथा भवेत् ॥ ३९९

गतौ

गतौ तत्र ककारवत् पदत्रयं प्रवर्त्तते ।
गवाक्षु च गोअक्षु च गोक्षु च तत् पदत्रयम् ॥ ४००
प्रत्येकन्तु ककारस्य द्वित्वमिह विधीयते ।
पदत्रयं भवेत्तत्र द्वित्वं विधीयते यदा ॥ ४०१

आदौ तत्र विना द्वित्वं स्थितमेव पदत्रयम् ।
परे तत्र भवेद् त्रयं द्वित्वं विधीयते यदा ॥ ४०२
आदौ त्रयं स्थितं तत्र परे त्रयं पुनर्भवेत् ।
संकलनं यदा तत्र पदषट्कं भवेत् तदा ॥ ४०३

षन्नामेषां पुनस्तत्र प्रातिष्विक षकारता ।
षकारस्य भवेद् द्वित्वं पदषट्कं पुनर्भवेत् ॥ ४०४
आदौ तत्र विना द्वित्वं पदषट्कं स्थितं खलु ।
परे षट्कं भवेद् तत्र द्वित्वं विधीयते यदा ॥ ४०५
आदौ षट्कं स्थितं तत्र परे षट्कं पुनः स्थितम् ।
संकलनं यदा तत्र द्वादश स्युस्तदा पुनः ॥ ४०६

पूजायाम् गतौ च

पूजायाञ्च तथा त्रिंशत दर्शितानि यथा मया ।
द्वादश च गतौ तत्र दर्शितानि च पूर्ववतः ॥ ४०७
द्विचत्वारिंशत् तत्र स्युः संकलनं यदा भवेत् ।
द्विचत्वारिंशत् तत्र हि पूजायाञ्च गतौ पुनः ॥ ४०८

अन्तस्य च पुनस्तेषां यदा स्यादनुनासिकः ।
द्विचत्वारिंशत् तत्र च पुनरपि भवन्ति हि ॥ ४०९
द्विचत्वारिंशत् तत्रादौ न यदा चानुनासिकः ।
द्विचत्वारिंशत् परे स्युः स्यादनुनासिको यदा ॥ ४१०
द्विचत्वारिंशत् तत्र च द्विचत्वारिंशदत्र च ।
स्युश्चतुरशीतिस्तत्र संकलनं यदा भवेत् ॥ ४११

ङि यदा स्यात् तदा तत्र पदानि स्युश्चतुर्द्दश ।
ओस् यदा स्यात् पदानि स्युश्चतुर्द्दश तदापि च ॥ ४१२
स्युश्चतुरशीतिस्तत्र सुप् यदा च परे भवेत् ।
आहत्येह च सप्तम्यां स्युर्द्वादशाधिकं शतम् ॥ ४१३

प्रथमा

सु यदा स्यात् परे तत्र पदानि च तदा नव ।
अन्त्यस्य च भवेद् द्वित्वमष्टादश भवन्ति च ॥ ४१४

औ यदा स्यात् परे तत्र पदचतुष्टयं तदा ।
ङकारस्य भवेद् द्वित्वं स्यात् पदसप्तकं तथा ॥ ४१५
जश् यदा स्यात् परे तत्र पदत्रयं तदा भवेत् ।
ङद्वित्वाच्चानुनासिकात् द्वादश स्युः पदानि च ॥ ४१६
अष्टादश तथा सप्त द्वादश च तथा पुनः ।
प्रथमायां सप्तत्रिंशत् पदानि स्युरिति स्थितिः ॥ ४१७

द्वितीया

प्रथमायां यथा स्याच्च द्वितीयायां तथा भवेत् ।
प्रथमायां सप्तत्रिंशत् द्वितीयायां तथैव च ॥ ४१८

तृतीया

टा यदा स्यात् परे तत्र पदचतुष्टयं तदा ।
ङद्वित्वाच्चानुनासिकात् पदानि स्युश्चतुर्द्दश ॥ ४१९
भ्याम् यदा स्यात् परे तत्र पदषट्कं तदा भवेत् ।
चत्वारिंशत् तथा चाष्ट पदानीह भवन्ति च ॥ ४२०
ङद्वित्वं च गद्वित्वं च यतित्वं च भवेदिह ।
मद्वित्वं च भवेत् पश्चात् पदानि स्युः तथा पुनः ॥ ४२१
भिस् यदा स्यात् परे तत्र पदषट्कं तदा पुनः ।
सर्व्वथा चतुर्व्विंशतिः पदानीह परे भिसि ॥ ४२२
ङकारस्य सकारस्य द्वित्वमिह विधीयते ।
विसर्गस्य पुनर्द्वित्वं पश्चादिह भवेत् पुनः ॥ ४२३
टा यदा स्यात् तदा तत्र चतुर्द्दश पदानि च ।
चत्वारिंशत् तथा चाष्ट भ्याम् परे च भवेद् यदा ॥ ४२४
भिस् यदा स्यात् परे तत्र स्युश्चतुर्व्विंशतिस्तदा ।
षड़शीतिः पदानि स्युस्तृतीयायामिति स्थितिः ॥ ४२५

चतुर्थी

ङि यदा स्यात् परे तत्र पदचतुष्टयं तदा ।
ङकारस्य भवेद् द्वित्वं सप्त तत्र भवन्ति च ॥ ४२६
भ्याम् यदा स्यात् परे तत्र पदषट्कं तदा पुनः ।
चत्वारिंशत् तथा चाष्ट पदानीह भवन्ति च ॥ ४२७
भ्यस् यदा स्यात् परे तत्र पदषट्कं तदा पुनः ।
चत्वारिंशत् तथा चाष्ट भ्यसि तत्र पदानि च ॥ ४२८

ङद्वित्वं च गद्वित्वं यद्वित्वं च भवेदिह ।
विसर्गस्य पुनर्द्वित्वं पदानि स्युस्तथैव च ॥ ४२९
संकलनं यदा तत्र त्र्यधिकं च शतं तदा ।
साकल्येन चतुर्थ्यां पदानि स्युस्तथा पुनः ॥ ४३०

पञ्चमी

ङसि यदा परे तत्र पदचतुष्टयं तदा ।
ङस्य द्वित्वाद् विसर्गस्य द्वित्वात् तत्र चतुर्द्दश ॥ ४३१
भ्याम् यदा स्यात् परे तत्र पदषट्कं तदा पुनः ।
चत्वारिंशत् तथा चाष्ट पदानीह भवन्ति च ॥ ४३२
भ्यस् यदा स्यात् परे तत्र पदषट्कं तदा पुनः ।
चत्वारिंशत् तथा चाष्ट पदानि स्युरिहापि च ॥ ४३३
संकलनं यदा तत्र दशाधिकं शतं तदा ।
साकल्येन च पञ्चम्यां पदानि स्युस्तथा पुनः ॥ ४३४

षष्ठी

ङस् यदा स्यात् परे तत्र पदचतुष्टयं तदा ।
ङस्य द्वित्वाद् विसर्गस्य द्वित्वात् तत्र चतुर्द्दश ॥ ४३५
ङस् यदा स्यात् परे तत्र पदचतुष्टयं तदा ।
ङस्य द्वित्वात् विसर्गस्य द्वित्वात् तत्र चतुर्द्दश ॥ ४३६
आम् यदा स्यात् परे तत्र पदचतुष्टयं तदा ।
ङकारस्य मकारस्य द्वित्वे तत्र चतुर्द्दश ॥ ४३७
चतुर्द्दश चतुर्द्दश तथा तत्र चतुर्द्दश ।
पदानि द्विचत्वारिंशत् साकल्येन भवन्ति च ॥ ४३८

सप्तमी

ङि यदा स्यात् परे तत्र पदचतुष्टयं तदा ।
ङद्वित्वाच्चानुनासिकात् पदानि च चतुर्द्दश ॥ ४३९
ओस् यदा स्यात् परे तत्र पदचतुष्टयं तदा ।
ङस्य द्वित्वाद् विसर्गस्य द्वित्वात् तत्र चतुर्द्दश ॥ ४४०
सुप् यदा स्यात् परे तत्र द्वादश च तदा पुनः ।
इह चतुरशीतिः स्युः साकल्येन पदानि च ॥ ४४१

ङस्य द्वित्वं कुगभावे पूजार्थानां भवेदिह ।
कवत् तत्र खवत् तत्र पश्चात् तत्र च गृह्यते ॥ ४४२
कवतां च खवताञ्च ङद्वित्वं स्यात् ततः परे ।
षद्वित्वं च ततः पश्चात् तेषां तेषां भवेदिह ॥ ४४३
आदौ षट् च परे तत्र स्युश्चतुर्विंशतिस्तथा ।
त्रिंशतां च गणास्तत्र पूजनार्थे तथा भवेत् ॥ ४४४
गत्यर्थानां पुनस्तत्र कद्वित्वं च विधीयते ।
ततः पश्चात् पुनस्तेषां षद्वित्वं च भवेदिह ॥ ४४५
द्वादशानां गणास्तत्र गत्यर्थानां तथा भवेत् ।
गणद्वयं ततः पश्चादेकत्र क्रियते पुनः ॥ ४४६
पदानि द्विचत्वारिंशत् लभ्यन्ते च तथा खलु ।
अनुनासिकता चैषां प्रत्येकन्तु भवेत् परे ॥ ४४७
सर्व्वथा चतुरशीतिः पदानीह भवन्ति च ।
सुपि चतुरशीतिः स्युः पदानि च तथा पुनः ॥ ४४८
सङ्कुलनं यदा तत्र स्युः द्वादशाधिकं शतम् ।
साकल्येन च सप्तम्यां पदानि स्युस्तथा पुनः ॥ ४४९

प्रथमायां सप्तत्रिंशत् पदानीह भवन्ति च ।
द्वितीयायां सप्तत्रिंशत् पदानि स्युस्तथैव च ॥ ४५०
तृतीयायां षड़शीतिः विहितानि तथा पुनः ।
त्र्यधिकं च शतं तत्र चतुर्थ्यां स्युः पदानि च ॥ ४५१
दशाधिकं शतं तत्र पञ्चम्यां च सतां मते ।
षष्ठ्यां च द्विचत्वारिंशत् पदानि स्युरिति स्थितिः ॥ ४५२
सप्तम्यां च पुनस्तत्र स्युर्द्वादशाधिकं शतम् ।
पञ्चशती विंशतिश्च सप्त तत्र तथा खलु ॥ ४५३

पञ्चशती यथा तत्र विंशतिश्च यथा पुनः ।
पुनः सप्त यथा तत्र तथा मया प्रदर्शितम् ॥ ४५४

इति-गवाक्शब्दप्रक्रिया ।

समाप्तिः—२४।४।१९७५ रचनाकालः—
(बृहस्पतिवारः) २०।४।७५-२४।४।७५ (पञ्च दिवसाः)
गवाक् शब्दप्रक्रियायाम्—३३८ श्लोकाः (११७-४५४) ।
"ऊह्य"मिति कारिकां परित्यज्य—३३७ श्लोकाः ।

तिरच्

गतौ

तिर्य्यक् भवेत् पदं तत्र तिरश्ची च पदं भवेत्।
तिर्य्यञ्चि स्यात् पदं तत्र शेषमूह्यं पदं बुधैः ॥ ४५४

पूजायाम्

तिर्य्यङ् भवेत् पदं तत्र तिर्य्यञ्ची च पदं भवेत्।
तिर्य्यञ्चि स्यात् पदं तत्र शेषमूह्यं पदं बुधैः ॥ ४५५

इति चकारान्तप्रकरणम्

यकृत्

यकृत् भवेत् पदं तत्र यकृती च पदं भवेत्।
यकृन्ति स्यात् पदं तत्र शेषमूह्यं पदं बुधैः ॥ ४५६
यकृत् यदा यदा शस् च "पद्न्नि"ति प्रयुज्यते।
यकृतः स्यात् यकन् तत्र यकानि च पदं भवेत् ॥ ४५७
यकृता स्यात् तथा तत्र यक्ना भवेत् तथैव च।
यकृते स्यात् पदं तद्वत् यक्ने पदं तथा भवेत् ॥ ४५८

शकृत्

शकृत् भवेत् पदं तत्र शकृती च पदं भवेत्।
शकृन्ति स्यात् पदं तत्र शेषमूह्यं पदं बुधैः ॥ ४५९
शकृत् यदा यदा शस् च "पद्न्नि"ति प्रयुज्यते।
शकृतः स्यात् शकन् तत्र शकानि च पदं भवेत् ॥ ४६०
शकृता स्यात् पदं तत्र पदं शक्ना भवेत् पुनः।
शकृते स्यात् पदं तत्र पदं शक्ने भवेत्तथा ॥ ४६१

ददत्

ददत् यदा यदा सु स्यात् पदं ददन् भवेत् तदा।
ददत् यदा यदा स्याद् औ ददती च पदं भवेत् ॥ ४८२
यदा ददत् भवेच्च शब्दः प्रत्ययो जश् परे यदा।
सूत्रं तदा भवेद् योज्यं यथा परे प्रदर्शितम् ॥ ४६३

**४४५। वा नपुंसकस्य। ७।१।७९**

सर्व्वनामस्थानं स्याच्चेत् क्लीवे शब्दो भवेद् यदि।
अवर्णान्तात् शता स्याच्चेत् तस्य नुम् स्याद् विभाषया ॥ ४६४

ददन्ति च पदं तत्र तथा खलु प्रजायते ।
ददति च पदं तत्र तथा भवेत् परं पुनः ॥ ४६५

तुदत्

यदा तुदत् यदा सु स्यात् तुदत् भवेत् पदं तदा ।
यदा तुदत् यदा स्याद् औ सूत्रं परं प्रयोजनम् ॥ ४६६

४४६ । आत् शीनद्योर्नुम् । ७।१।८०

शि यदि स्यात् परे तत्र ई-नदी चेत् परे पुनः ।
अवर्णान्तात् शता स्याच्चेत् तस्य नुम स्याद्विभाषया ॥ ४६७

तुदन्ती स्यात् पदं तत्र तुदती च पदं भवेत् ।
तुदन्ति स्यात् पदं तत्र जश् परे चेद् भवेत् पुनः ॥ ४६८

भात्

भात् यदा च यदा सु च पदं च भात् भवेत्तदा ।
भात् यदा च यदा स्याद् औट् भान्ती भाती पदद्वयम् ॥ ४६९
भात् यदा स्यात् यदा जश् स्यात् पदं भान्ति भवेत्तदा ।
अन्यत् पदं भवेद् यद् यत् तत्तदूह्यं पुनर्बुधैः ॥ ४७०

पचत्

पचत् यदा यदा सु स्यात् पदं पचत् तदा भवेत् ।
पचत् यदा यदा स्यात् औ सूत्रं परं प्रयोजनम् ॥ ४७१

४४७ । शप्श्यनोर्नित्यम् । ७।१।८१

शी यदा स्यात् परे तत्र नदी यदा परे पुनः ।
शप्श्यनोश्चेदवर्णान्तात् परे तत्र पुनः शता ॥ ४७२
शतुरवयवान्तस्य तदा नित्यं नुमागमः ।
पचन्ती स्यात् पदं तत्र पचन्ति च पदं भवेत् ॥ ४७३

दीव्यत्

यदा दीव्यत् यदा "सु" स्यात् पदं दीव्यत् तदा भवेत् ।
यदा दीव्यत् यदा स्याद् औ "शप्श्यनो"श्च प्रयोजनम् ॥ ४७४
दीव्यन्ती स्यात् पदं तत्र दीव्यन्ति च पदं भवेत् ।
परं पदं बुधैरूह्यं न च मया प्रदीयते ॥ ४७५

### अथ पकारान्तप्रकरणम्

यदा स्वप् स्यात् यदा "सु" स्यात् पदं स्वा् स्वव् भवेत्तदा ।
यदा स्वप् स्यात् यदा स्याद् औ पदं स्वपौ तदा भवेत् ॥ ४७६
यदा स्वप् स्यात् यदा जश् स्यात् पदं स्वाम्पि भवेत्तदा ।
आदौ दीर्घः परे नुम् स्यात् प्रतिपदोक्तता यतः ॥ ४७७
सूत्रं निरवकाशं चेत् प्रतिपदोक्तता भवेत् ।
इति पक्षे नुमेव स्यात् पदं स्वम्पि भवेत्तदा ॥ ४७८
स्वप् यदा स्यात् यदा टा स्यात् पदं स्वपा भवेत्तदा ।
स्वप् यदा स्यात् यदा भ्याम् स्यात् पदं स्वद्भ्याम् तदा भवेत् ॥ ४७९
"अपो भि" च स्थितं सूत्रं तत्तदा च प्रयुज्यते ।
पदं स्वद्भ्याम् तथा तत्र स्वद्भिः भवेत् पदं परे ॥ ४८०

### अथ सकारान्तप्रकरणम्

#### धनुस्

"अर्त्ति-पृ वपि" सूत्रं स्यात् इह पुनरुणादिके ।
धनेरुस् प्रत्ययस्तत्र धनुस् शब्दो भवेत्तथा ॥ ४८१
धनुस् यदा यदा सु स्यात् रुत्वं भवेत् भवेद् धनुः ।
धनुस् यदा यदा स्याद् औ धनुषी च भवेत् पदम् ॥ ४८२
धनुस् यदा यदा स्यात् जश् धनूंषि च पदं तदा ।
"सान्त"—चेति भवेद् दीर्घो "नुम्" चेति च षकारता ॥ ४८३
धनुस् यदा यदा टा स्यात् पदं स्याद् धनुषा तदा ।
धनुस् यदा यदा भ्याम् स्यात् धनुर्भ्याम् च भवेत् पदम् ॥ ४८४
एवं चक्षुर्भवेदत्र एवं हविर्भवेत् पुनः ।
पदं यद् यद् भवेत्तेषु तत्तदूह्यं पुनर्बुधैः ॥ ४८५

#### पिपठिस्

यदा क्विप् पिपठिषतेः पिपठिस् स्यात् तदा पुनः ।
पिपठिस् चेत् "सु" तत्र चेत् पिपठीः स्यात् तदा पदम् ॥ ४८६
"र्वो" रिति च स्थितं सूत्रं तेन दीर्घो भवेदिह ।
दीर्घं पदं पिपठीः स्यात् इति स्थितिर्भवेदिह ॥ ४८७
पिपठिस् स्याद् यदा शब्दः प्रत्यय औ परे यदा ।
पिपठिषी पदं तत्र तदा भवेदिति स्थितिः ॥ ४८८

पिपठिष् स्याद् यदा शब्दः प्रत्ययो जश् परे यदा।
पिपठिषि पदं तत्र तदा भवेदिति स्थितिः ॥ ४८९
अल्लोपः स्थानिवत्तत्र झलन्तो न ततो नुम्।
अजन्तलक्षणो नुम् न त्वविधौ स्थानिवत् न हि ॥ ४९०
पिपठिष् स्याद् यदा शब्दो भ्याम् यदा च परे भवेत्।
पिपठीर्भ्याम् तदा तत्र पदं भवेदिति स्थितिः ॥ ४९१
पदमन्यद् भवेद् यत् यत् तत्तदूह्यं पुनर्बुधैः।
पुंसि यथा पदं च स्यादिहापि स्यात् तथैव च ॥ ४९२

पयस्

पयः पयसी पयांसि पदानीह भवन्ति च।
पयसी स्यात् पयोभ्याम स्यात् शेषमूह्यं पदं बुधैः ॥ ४९३

सुपुमस्

सुपुम भवेत् पदं तत्र सुपुंसी स्यात् पदं पुनः।
सुपुमांसि पदं च स्यात् शेषमूह्यं पदं बुधैः ॥ ४९४

अदस्

अदस् यदा भवेच्च शब्दः प्रत्ययः "सु" परे यदा।
अदः भवेत् पदं तत्र विशेषश्च न दृश्यते ॥ ४९५
अदस् यदा भवेच्च शब्दः प्रत्यय औ परे यदा।
आदौ स्याद् बिभक्तिकार्य्यम उत्वम् मत्वं परे भवेत् ॥ ४९६
तथा तथा यदा कार्य्यं पदम् अमू तदा भवेत्।
अदस् यदा यदा जश् च अमूनि स्यात् पदं तदा ॥ ४९७
शेषं पदं बुधैरूह्यं न च मया प्रदीयते।
पुंसि यथा पदं तत्र तथैवेह भवेत् पदम् ॥ ४९८

इति हलन्तनपुंसकलिङ्गप्रकरणम्

इति शब्दधिकारः

| | | | |
|---|---|---|---|
| अजन्तपुंलिङ्गे — | ६५३ श्लोकाः | हलन्तपुंलिङ्गे — | १५९३ श्लोकाः |
| अजन्तस्त्रीलिङ्गे — | २१६ श्लोकाः | हलन्तस्त्रीलिङ्गे — | ६४ श्लोकाः |
| अजन्तनपुंसकलिङ्गे - | १०० श्लोकाः | हलन्तनपुंसकलिङ्गे - | ४९८ श्लोकाः |
| | ९६९ श्लोकाः | | २१५५ श्लोकाः |

शब्दाधिकारे साकल्येन श्लोकाः—

९६९ + २१५५ = ३१२४।

## अव्ययप्रकरणम्

आरम्भः १३।२।७४
वुधवारः प्रातः

४४७। स्वरादिनिपातमव्ययम्। १।१।३७

स्वरादयः स्थिता ये च निपाता ये स्थिताः पुनः।
अव्ययसंज्ञकास्ते च भवन्तीह सतां मते॥ १
स्वरादयो भवन्ति ये ये निपाता भवन्ति च।
ते गणकारिकायाञ्च सर्व्वे मया प्रदर्शिताः॥ २

४४८। तद्धितश्चासार्व्वविभक्तिः। १।१।३७

न च सर्व्वा विभक्तिः स्यात् यस्मात् शब्दात् प्रयोजिता।
स तद्धिते स्थितः शब्दः स्यादव्ययमिति स्थितिः॥ ३
विस्तरेण वदामि ते के के तथा भवन्ति च।
तसिलाद्याः पाशवन्ता अव्ययसंज्ञका इह॥ ४
शसाद्याश्च समासान्ताः तत्संज्ञका मताः पुनः।
कृत्वसुच् स्तात् यदा चार्थः स्यादमाम् च तथैव च॥ ५
तसिवती नानाञौ च तत्संज्ञका मताः पुनः।
तथा तथा मता ये ये ते ते मया प्रदर्शिताः॥ ६
न भवेच्च तथा कल्पप् न रूपप् च भवेत्तथा।
अव्ययं न भवेत्तस्मात् तत् तदिह सतां मते॥ ७
यदा पचतिकल्पप् स्यात् अव्ययं न तदोच्यते।
यदा पचतिरूपं स्यात् न चाव्ययं तदा पुनः॥ ८

४४९। कृन्मेजन्तः। १।१।३९

एदन्तः कृद् यदा तत्र मान्तः कृच्च यदा पुनः।
तदा पुनस्तदन्तं न स्यादव्ययमिति स्थितिः॥ ९
स्मारं स्मारं णमुल् स्याच्चेत् तदव्ययं भवेदिह।
जीवसे च पिबध्यै च स्यादव्ययं तथा पुनः॥ १०

४५०। क्त्वा-तोसुन-कसुनः। १।१।४०

अव्ययं च भवेत् क्त्वान्तं तोसुन्नन्तं तथाव्ययम्।
अव्ययं स्यात् कसुनन्तं निदर्शनं यथा परम्॥ ११

क्त्वान्तः शब्दो भवेत् "कृत्वा" तदव्ययं भवेदिह ।
तोसुन्नन्तम् उदेतोः स्यात् तदव्ययं मतं पुनः ॥ १२
विसृपः स्यात् कसुन्नन्तं तदव्ययं मतं भवेत् ।
तदन्तं स्यात् तदन्तं स्यात् अव्ययं च सतां मते ॥ १३

४५१ । अव्ययीभावश्च । १।१।४१

समासश्चाव्ययीभावः स्यादव्ययमिति स्थितिः ।
अधिहरि तथा तत्र स्यादव्ययं तथा पुनः ॥ १४

४५२ । अव्ययादाप्सुपः । २।४।८२

अव्ययाद् विहितश्चेदाप् तस्य लोपो भवेदिह ।
अव्ययाद् विहितः सुप् चेत् लोपस्तस्य तथैव च ॥ १५
यदा तत्र शालायां स्यात् टापो लोपो भवेदिह ।
यदा "कृत्वा" भवेदत्र सुपो लुक् च तथा भवेत् ॥ १६

विशेषणं समासे चेत् न तदा लुग् भवेत् पुनः ।
"अत्युच्चैसौ" पदं तत्र प्रत्यय औ स्थितः खलु ॥ १७
तदन्तविधिरत्रापि यद्यपि च प्रवर्त्तते ।
तथापि न विधिर्गौणो पुनर्भवेत् समाश्रितः ॥ १८

आब्ग्रहणं व्यर्थमलिङ्गत्वात् (वा)

आब्ग्रहणं मतं व्यर्थमव्ययस्य न लिङ्गता ।
लिङ्गमिह यदा नास्ति स्त्रीलिङ्गं वा कुतो भवेत् ॥ १९

"सदृशं त्रिषु लिङ्गेषु सर्व्वासु च विभक्तिषु ।
वचनेषु च सर्व्वेषु यन्न व्येति तदव्ययम् ॥"

"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥"

अवगाह्य यदा तत्र वगाह्य स्यात् पदं तदा ।
अपिधानं पदं यत्र पिधानं च पदं भवेत् ॥ २०

अव्ययप्रकरणे २० श्लोकाः

१३।२।७४

बुधवारः (अपराह्णः) ।

## स्त्रीप्रत्ययप्रकरणम्

आरम्भः—३।११।७३

४५३। स्त्रियाम्। ४।१।३

इत ऊर्द्ध्वं भवेद् यत् यत् तत् तत् स्त्रियां भवेदिह।
सामान्यं स्त्री विशेषः स्त्री बहुव्यक्तिश्च सा मता॥ १

३।११।७३

४५५। अजाद्यतष्टाप्। ४।१।४

अजादिभ्यः स्त्रियां टाप् स्यात् अकारान्तात् तथा च टाप्।
अजा स्याद् देवदत्ता स्यात् स्त्रियां टापि निदर्शनम्॥ २

अजादिः

(१) अजश्च कोकिलस्तद्वत् चटको मूषिकस्तथा।
अश्वः स्यादेडकः स्याच्च षडेते जातिवाचिनः॥ ३
(२) बालो होड़स्तथा वत्सो मन्दः पाको भवेत्तथा।
विलातश्च भवेत्तद्वत् वयसि षट् भवन्ति ते॥ ४
(३) पूर्व्वापहरणं स्याच्च स्यादपरापहारणम्।
ल्युटि तौ च मतौ सिद्धौ टितौ खलु पुनश्च तौ॥ ५
(४) सकलत्रिफलस्तद्वत् पिन्डफलस्तथैव च।
भद्रफलो भवेत्तद्वत् शाणफलस्तथा पुनः॥ ६
स्याद्जिनफलस्तत्र फलान्ताः षट् प्रकीर्त्तिता।
भवन्ति सर्व्वशः सप्त फलान्ताः गणिताः पुनः॥ ७
(५) सत्पुष्पः कान्तपुष्पः स्यात् शतपुष्पस्तथैव च।
प्राक्पुष्पः प्रान्तपुष्पः स्यात् एकपुष्पस्तथा हि षट्॥ ८
(६) पदमुष्णिाह् पदं कुञ्च् स्यात् देवशिष् च पदं पुनः।
त्रयमिह हलन्तं स्यात् अजादिके गणे खलु॥ ९
(७) कनिष्ठश्च तथा ज्येष्ठस्तथा च मध्यमः पुनः।
पुंयोगे स्यात् त्रयं तावद् अजादौ च धृतं भवेत्॥ १०
(८+९) शूद्रशब्दो भवेत्तावदजादिके गणे पुनः।
मूलशब्दस्तथैव स्यादजादिके गणे धृतः॥ ११

द्वात्रिंशत् सर्व्वसंख्याता गणे तावद् भवन्ति च।
विभागः सप्तधा तेषां तावन्मया प्रदर्शितः॥ १२

अस्ति तत्र विभागेन विशेषेण प्रयोजनम् ।
तदहं ते पुनः पश्चात् कथयामि सविस्तरम् ॥ १३
अजादौ ये स्थितास्तेषां टावेव प्रत्ययो भवेत् ।
अन्यथा प्रत्ययश्चान्यः प्राप्तोऽपि न भवेत् पुनः ॥ १४
अजादौ ये स्थिताः शब्दाः षड़िह जातिवाचिनः ।
प्राप्नोति ङीष् पुनस्तेभ्यः "जाते"रिति च सूत्रणात् ॥ १५
एतत् षट्कमजादौ स्यात् ततो ङीष् न प्रयुज्यते ।
सूत्रेण च प्रवृत्तेन टावेव हि भवेदिह ॥ १६
बालादिकं ततः षट्कमजादिके गणे भवेत् ।
"वयसी"ति स्थितं सूत्रं प्राप्नोति ङीष् ततः पुनः ॥ १७
एतत् षट्कमजादौ स्यात् ततो ङीष् न प्रयुज्यते ।
सूत्रेण च प्रवृत्तेन टावेव हि भवेदिह ॥ १८
द्वितौ तावत् ततश्च द्वौ द्विदिनि च भवेद् हि ङीप् ।
अजादिके यतस्तौ द्वौ टावेव हि भवेत् ततः ॥ १९
सफलादि ततः षट्कं पाकादिति भवेच्च ङीष् ।
अजादिके स्थितं चेतत् टावेव हि ततो भवेत् ॥ २०
सपुष्पादि ततः षट्कं पाकादिति भवेच्च ङीष् ।
अजादिके स्थितं चेतत् टावेव हि ततो भवेत् ॥ २१
उष्णिहादि हलन्तं स्यात् न प्राप्नोति पुनश्च टाप् ।
अजादिके स्थितं तावत् टावेव हि ततो भवेत् ॥ २२
ज्येष्ठादि च ततः पश्चात् "पुंयोगाद्" ङीष् भवेदिह ।
अजादिके स्थितं तावत् ततश्च टाप् भवेत् पुनः ॥ २३

शूद्रा चामहत्पूर्व्वा जातिः (वा)

टापि शूद्रा भवेज्जातौ पूर्व्वं न चेत् पदं "महत्" ।
महद् यदा भवेत् पूर्व्वं महाशूद्री पदं भवेत् ॥ २४
शूद्रस्य चेत् भवेद् भार्य्या तदा शूद्री पदं खलु ।
मूलात् नञो भवेत् टाप् च स्यादमूला पदं तथा ॥ २५

४५६। उगितश्च। ४।१।६

उगितश्च स्त्रियां ङीप् स्यात् उगित् भवेत् यथा तथा।
रुदती ददती तद्वत् शृण्वती जानती पुनः॥ २६
जग्मुषी विदुषी तद्वत् यावती तावती तथा।
श्रेयसी प्रेयसी तद्वत् गतवती तथा भवेत्। २७
श्रीमती ह्रीमती तद्वत् भवती न तथा भवेत्।
ऋकारेत् स्यात् उकारेत् स्यात् निदर्शनं द्विधा धृतम्॥ २८

शतरि च मया दत्तं क्वसौ दत्तं पुनर्मया।
वतुपि च तथा दत्तं ईयसुने तथा पुनः॥ २९
क्तवतौ च मया दत्तं मतुपि च पुनस्तथा।
डवतौ च मया दत्तं दत्तेन सर्व्वंशः॥ ३०

धातोरुगितः प्रतिषेधो वक्तव्यः (वा)

धातोरिह निषेधः स्यात् यदि धातुर्भवेदुगित्।
उखास्रद् ब्राह्मणी तत्र पर्णध्वत् ब्राह्मणी पुनः॥ ३१

अञ्चतेरुपसंख्यानम् (वा)

उदीची स्यात् प्रतीची स्यात् प्राची स्याच्च पदं पुनः।
अवाची स्यात् तथैवात्र धातुरञ्चुः प्रवर्त्तते॥ ३२

४५७। वनोर च। ४।१।७

वस्वन्ताच्च पुनर्ङीप् स्याद् अन्तो रेफः प्रवर्त्तते।
धीवरी पीवरी तत्र शर्वरी पारदृश्वरी॥ ३३
ऋन्नेभ्य इति सिद्धं स्यात् तत् कथं सूत्रितं पुनः।
अन्तादेशो यथा रेफस्तथा सूत्रं भवेदिह॥ ३४

वनो न हशः (वा)

हशन्तस्य वनो न स्यात् द्वयमिह निषिध्यते।
ब्राह्मणी सा सहयुध्वा भवेदिह निदर्शनम्॥ ३५

४५८। पादोऽन्यतरस्याम्। ४।१।८

समासान्तो यदा पादस्तदा ङीप् स्यात् विभाषया।
द्विपदी त्रिपदी तत्र द्विपात् त्रिपात् तथा भवेत्॥ ३६

४५९। टाबृचि। ४।१।९

ऋचि यत्र स्थितः पादः स्त्रियां टाप् स्यात् न ङीप् पुनः।
द्विपदा ऋग् भवेदत्र त्रिपदा ऋक् तथा भवेत्॥ ३७

४६० । मनः । ४।१।११

मन्नन्ताच्च न ङीप् तत्र ङीपि प्राप्ते निषिध्यते ।
दामा दामानौ दामानो भवेदिह निदर्शनम् ॥ ३८

४६१ । अनो बहुव्रीहेः । ४।१।१२

अन्नन्ताच्च बहुव्रीहेः स्त्रियां ङीप् न भवेत् पुनः ।
उपधा न यदा लुप्ता तदा सूत्रं प्रयुज्यते ॥ ३९
सुपर्व्वा च सुपर्व्वाणौ सुपर्व्वाणो निदर्शनम् ।
सुधर्म्मा च सुधर्म्मानौ सुधर्म्मा स्तथा भवेत् ॥ ४०

न यदा स्याद् बहुव्रीहे ङीवेत्र स्यात् तदा पुनः ।
अतिक्रान्ता राजानं चेत् अतिराजी पदं भवेत् ॥ ४१
उपधाया यदा लोपस्तदा भवेद् विभाषया ।
बहुराज्ञी पदं तत्र स्त्रियां ङीपि प्रवर्त्तते ॥ ४२

४६२ । डाबुभाभ्यामन्यतरस्याम् । ४।१।१३

उभाभ्याञ्च पुनर्ङीप् स्यात् डाविह स्यात् विभाषया ।
अन्नन्ताच्च बहुव्रीहे र्मन्नन्ताच्च पदात् पुनः ॥ ४३
बहुराजा बहुराजे बहुराजा यदा च डाप् ।
पदं स्याद् बहुराजानौ यदा डाप् न प्रवर्त्तते ॥ ४४
पामा पामे पामा भवेत् मन्नन्ताद् स्याद् यदा च डाप् ।
पामने स्यात् पदं तत्र यथा डाप् न प्रवर्त्तते ॥ ४५
"वनो र च" स्थितं सूत्रं तेन पदं प्रसिध्यति ।
पुनरन्यतरस्याम स्यात् विकल्पः स्याद् यथा पुनः ॥ ४६
स्याद् बहुधीवरी तेन स्याद् बहुधीवरा तथा ।
स्याद् बहुपीवरी तेन स्याद् बहुपीवरा पुनः ॥ ४७

४६३ । अन उपधालोपिनोऽन्यतरस्याम् । ४।१।२८

अन्नन्तश्चेद् बहुव्रीहिरुपधा लुप्यते यदि ।
ङीप्प्रत्ययस्तदा तत्र स्त्रियां भवेद् विभाषया ॥ ४८
बहुराजा बहुराज्ञी बहुराजे भवेदिह ।
बहुतक्षा बहुतक्षी बहुतक्षे तथा भवेत् ॥ ४९

अन्नन्ताश्च भवेत्तद्वत् अन्यत्र न तथा भवेत् ।
बहुमत्स्का पदं तावत् अन्नन्तो न न ङीप् ततः ॥ ५०
उपधाया यदा लोपस्तदा ङीप् स्यात् न चान्यदा ।
सुपर्व्वा च सुपर्व्वे स्यात् न च लोपो न ङीप ततः ॥ ५१

४६४ । प्रत्ययस्थात् कात् पूर्व्वस्मात् इदाप्यसुपः । ७।३।४४

प्रत्ययस्थात् ककारात् स्यादकारः पूर्व्वतो यदि ।
इकारः स भवेदापि न चेत् स आप् सुपः परः ॥ ५२
जटिलिका पदं स्याच्च मुण्डिका स्यात् पदं पुनः ।
कारिका स्यात् पदं तद्वत् हारिका स्यात् तथैव च ॥ ५३
(१ प्रत्ययस्य यदा कः स्यात् तदा विधिः प्रयुज्यते ।
अन्यस्य तु यदा कः स्यात् न विधिर्युज्यते तदा ॥ ५४
शक्नोतीति शका तावत् धातोरवयवो हि कः ।
प्रत्ययश्च न ककार इकारो न भवेत्ततः ॥ ५५
(२) "स्थ"ग्रहणं कृतं सूत्रे विस्पष्टार्थं भवेच्च तत् ।
एकः कः प्रत्ययो नास्ति "प्रत्ययस्थः" पदं ततः ॥ ५६
(३) ककारश्चेद् इकारः स्यात् न को न स्यादिकारता ।
नन्दना स्याद् रमणा स्यात् न को न स्यादिकारता ॥ ५७
(४) पूर्व्वस्य स्यादिकारो हि परस्य न तथा भवेत् ।
पटुकेति परे स्यादत् इकारो न ततः पुनः ॥ ५८
(५) इकारः स्यादकारस्य नान्यस्य तु तथा भवेत् ।
नौकेति पुनरौकारो न चाकारस्ततश्च न ॥ ५९
(६) ह्रस्वस्यैव विधिस्तावत् दीर्घस्य न विधिर्भवेत् ।
राका यदा तदा दीर्घो ह्रस्वो नेति न तावद् इः ॥ ६०
(७) आपि परे इकारः स्यादन्ये परे तथा न च ।
धारकः स्यात् पदं तावत् आप् परे न न तावद् इः ॥ ६१

पूर्व्वपक्षः

कीदृशः कः परे यस्माद् आप् इति च विशिष्यते ।
कारिकेति पदं तावदिकारेण न सिध्यति ॥ ६२
कारकः स्याद् यदा शब्द एकलः को न वर्त्तते ।
ककारात् तु परं तावदकारोऽपि न विद्यते । ६३

ककारो व्यञ्जनस्तावत् अकारस्तु स्वरः पुनः ।
मिलित्वा तु द्वयं तत्र "क" इति स्यात् प्रयोगतः ॥ ६४
ककारात् स्यादकारश्च तत आप् च प्रयुज्यते ।
व्यवधानमकारेण दुस्तरं भवेततः ॥ ६५
ककारात् पर आप् तावत् इति वक्तुं न शक्यते ।
व्यवधानं स्थितं तत्र न च सूत्रं प्रयुज्यते ॥ ६६

उत्तरपक्षः

अकारः स्यात् ततः पश्चात् आकारः स्यादिति स्थितिः ।
एकादेशो भवेत् पश्चात् आकारः स्यात् तथा पुनः ॥ ६७
एकादेशे तथा सिद्धे व्यवधानं न विद्यते ।
आपि परे ततः सूत्रं यथायथं प्रयुज्यते ॥ ६८

पूर्व्वपक्षः

एकादेशः पूर्व्वविधौ स्थानिवत् स्यादिति स्थितिः ।
व्यवधानं स्थितं तेन न च सूत्रं प्रयुज्यते ॥ ६९

उत्तरपक्षः

वर्णानां व्यवधानं वा न दोषाय भवेद् हि तत् ।
जातमेकेन वर्णेन व्यवधानं न दूष्यति ॥ ७०
रथकट्या पदं तत्र बहुवर्णैः विभज्यते ।
स्थितिकृतमनेकेन वर्णेन तत् न सिध्यति ॥ ७१
(८) असुपश्चेत् परे स्याद् आप् इकारः स्यात् तदा पुनः ।
सुपः परे यदा स्यादाप् इकारो न भवेत् तदा ॥ ७२
बहुपरिव्राजकाः स्याद् आप् इह स्यात् सुपः परः ।
इकारो न ततः सिध्येत् विधिरिह न युज्यते ॥ ७३
बहवः परिव्राजका अस्यामिति च विग्रहः ।
परिव्राजकशब्दात्तु सुबिह विद्यते खलु ॥ ७४

असुपः इति किं प्रोक्तं किमिदं वा भवेदिह ।
प्रसज्यप्रतिषेधः स्यात् यत् प्राप्तं तत् निषिध्यते ॥ ७५
सुपः पश्चात् यदा स्यादाप् इकारस्तु प्रसज्यते ।
प्रतिषेधो भवेत्तत्र स इकारो भवेन्न च ॥ ७६

पर्युदासः पुनर्यम् इकारः स्याद् तथा गति ।
समुदायः सुबन्तो न स्यादिकारस्ततः पुनः ॥ ७७
सुब् यस्मिन् विद्यते नैव स चासुबिति नापि च ।
तथा सति न तावत् स्यात् पदं च बहुचर्मिका ॥ ७८
मामक-नरकयोरुपसंख्यानं कर्त्तव्यमप्रत्ययस्थात् (वा)
मामिका स्यात् पदं तत्र प्रत्ययस्य यदा न कः ।
अन्तर्भावस्ततस्तस्य भवेदिह प्रयोजनम् ॥ ७९
नरिका स्यात् पदं तत्र प्रत्ययस्य न को यदा ।
अन्तर्भावस्ततस्तस्य भवेत् पुनः प्रयोजनम् ॥ ८०
ममकः स्यात् समादेशः ततटापि च मामिका ।
प्रत्ययस्य ककारो न पुनरित्वं तथापि च ॥ ८१
नरकः स्यात् पदं तत्र टापि च नारिका भवेत् ।
प्रत्ययस्य ककारो न पुनरित्वं तथापि च ॥ ८२

प्रत्ययनिषेधे त्यक्-त्यपोश्चोपसंख्यानम (वा)

त्यगन्तस्य त्यबन्तस्य स्यादिकार इति स्थितिः ।
त्य तु दाक्षिणात्यिका तत्र तथा च स्यादिहत्यिका ॥ ८३
"उदीचा"मिति सूत्रेण विकल्पो न प्रवर्त्तते ।
इह नित्यमिकारः स्यादिति च वार्त्तिकं ध्रुवम् ॥ ८४
१३।११।७३

### ४६५ । न यासयोः । ७।३।४५

१४।११।७३

यत्तदो हि पदे या सा नास्ति तयोरिकारता ।
पदं भवेत् यका तत्र पदं भवेत् सका तथा ॥ ८५
न केवलं प्रथमायां निदर्शनं भवेदिह ।
अन्येष्वपि विभक्तिषु निदर्शनं च लभ्यते ॥ ८६
दर्शितं च भवेत्तत्र "यकां सकामधीमहे" ।
दर्शितं च पुनस्तावत् "यकां सकां पचामहे" ॥ ८७

(१) यत्तदोः प्रतिषेधे त्यकन उपसंख्यानम (वा)

अधित्यका भवेदत्र भवेदुपत्यका पुनः ।
इकारो न भवेत्तयोः प्रतिषेधो द्वयोरिह ॥ ८८

(२) पावकादीनां छन्दसि उपसंख्यानम् (वा)

पावका लोमका वेदे वेदे च ऋक्षका भवेत् ।
छन्दस्येव पुनस्तेषामिकारता निषिध्यते ॥ ८९
भाषायान्तु भवेदेवं पाविका स्यात् पदं तदा ।
अलोमिका पदं तद्वत् भाषायां दृश्यते पुनः ॥ ९०

(३) आशिषि चोपसंख्यानम् (वा)

वुन् प्रत्ययो भवेद् यत्र न तत्र स्यादिकारता ।
जीवतात् जीवका तत्र भवतात् भवका पुनः ॥ ९१

(४) उत्तरपदलोपे चोपसंख्यानम् (वा)

परं पदं यदा लुप्तमिकारो न तदापि च ।
देवका यज्ञका तत्र दत्तं लुप्तं परं पदम् ॥ ९२
इहासीत् देवदत्तका पूर्णं रूपं स्थितं यदा ।
इहासीत् यज्ञदत्तका पूर्णं रूपं यदा पुनः ॥ ९३
क्षिपका ध्रुवका तत्र कन्यका चटका पुनः ।
इकारो न भवेदेषु प्रतिषेधश्च वर्त्तते ॥ ९४

(६) तारका ज्योतिषामुपसंख्यानम् (वा)

ज्योतिषि तारका तावदिकारो न भवेत्तदा ।
अन्यत्र तारिकापि स्याद् दासी यदि प्रतीयते ॥ ९५

(७) वर्णका तान्तवे उपसंख्यानम् (वा)

तान्तवे वर्णका तावत् इकारो न भवेत्तदा ।
अन्यत्र वर्णिका ग्राह्या भाण्डारी वर्णिका यथा ॥ ९६

(८) वर्त्तका शकुनौ प्राचामुपसंख्यानम् (वा)

उदीचां वर्त्तिका तावत् शकुनिरेव गृह्यते ॥ ९७

(९) अष्टका पितृदैवत्ये (वा)

अष्टका पितृदैवत्ये इकारो न भवेदिह ।
अष्टिका स्याद् यदा खारी स्यादिकारस्तदा खलु ॥ ९८
चातुरर्थ्ये च भवेदादौ ततस्त्यकन् प्रयुज्यते ।
अष्ट परे च संख्यायाम् कन्प्रत्ययस्ततः परम् ॥ ९९

(१०) वा सुतका-पुत्रका-वृन्दारकानामुपसंख्यानम् (वा)
सुतिका पुत्रिका तावत् वृन्दारका तथैव च ।
सुतिका पुत्रिका चापि वृन्दारिका विभाषया ॥ १००
"वा अ" इति विभज्येह केचिद् व्याख्यानयन्ति च ।
कात् पूर्व्वस्य स्थितस्य स्याद् अकारो वा विभाषया ॥ १०१

४६६ । **उदीचामातः स्थाने यक पूर्व्वायाः । ७।३।४६**

आतो यकारपूर्व्वस्य अकारो यो भवेदिह ।
आतः ककारपूर्व्वस्य अकारो यः पुनर्भवेत् ॥ १०२
स स पुनरकारः स्यात् इकारश्च स्त्रियामिह ।
उदीचां तु मतं तत् स्यात् विकल्पार्थं समुद्धृतम् ॥ १०३
इभ्यका च पदं सिद्धम् इभ्यिका च विभाषया ।
क्षत्रियका पदं तद्वत् क्षत्रियिका तथा पुनः ।
चटकका पदं तद्वत् चटकिका पदं पुनः ॥ १०४
मूषिकका तदं स्याच्च मूषिकिका तथा भवेत् ॥ १०५

"आतः" इति कथं सूत्रे किमर्थं च धृतं भवेत् ।
न भवति यदा ह्रस्वस्तदा विधिर्नयुज्यते ॥ १०६
स्यात् "सांकाश्ये भवा" यत्र तदा ह्रस्वो न लभ्यते ।
पदं "सांकाश्यिका" तत्र विकल्पो न भवेत् पुनः ॥ १०७

"षष्ठी स्थानेयोगा" तत्र परिभाषा प्रवर्त्तते ।
षष्ठ्यन्तं तु पदं सूत्रे "स्थाने" तस्मात् प्रतीयते ॥ १०८
"स्थाने" इति कथं प्रोक्तं पुनरपि च सूत्रणे ।
"स्थाने" पदं किमुद्दिश्य मुनिनेह निवेशितम् ॥ १०९
सम्बन्धप्रतिपत्त्यर्थं "स्थाने" शब्दः प्रयुज्यते ।
दीर्घस्य यो भवेत् ह्रस्वः तत्सम्बन्धे विधिर्भवेत् ॥ ११०
विधिः स्यात् ह्रस्वसम्बन्धी पूर्व्वं दीर्घः स्थितो यदा ।
दीर्घस्य तु कृते ह्रस्वे विधिस्तावत् प्रयुज्यते ॥ १११
"स्थाने" शब्दो न चेत् सूत्रे दीर्घस्य स्यादिकारता ।
"स्थाने" शब्दो स्थितः सूत्रे ह्रस्वे भवेदिकारता ॥ ११२

कथं "यकपूर्व्वाया" श्च पुनः सूत्रे निवेशितम् ।
यकारश्चेत् ककारश्चेत् न पूर्व्वं स्यात् भवेन्न च ॥ ११३
"अश्वा" यदा पदं तत्र वकारः पूर्व्वतो भवेत् ।
"अश्वका" च पदं तत्र विकल्पेन न सिध्यति ॥ ११४
भवेन्न "यकपूर्व्वाया" निर्द्देशो हि स्त्रियां पुनः ।
स्त्रीप्रत्यये यदा स्यादात् तदा सूत्रं प्रयुज्यते ॥ ११५
पदं यत्र शुभंया स्यात् शुभंयिका भवेत् तदा ।
स्त्रीप्रत्यये न तावदात् धातोरात् हि भवेदिह ॥ ११६

यकपूर्व्वात् धात्वन्तप्रतिषेधः (वा)

यकारश्च ककारश्च धात्वन्तश्चेद् भवेदिह ।
प्रतिषेधः कृतः सूत्रे न लभते पदं तदा ॥ ११७
सुनयिका पदं तत्र यकारे स्यान्निदर्शनम् ।
सुपाकिका पदं तत्र ककारे स्यात् तथा पुनः ॥ ११८
१४।११।७३

४६७ । भस्त्रा-एषा-अजा-ज्ञा-द्वा-स्वा-नञ्-पूर्व्वाणामपि । ७।३।४७

अजा भस्त्रा तथा चैषा ज्ञा द्वा स्वा च यदा भवेत् ।
ह्रस्वे भवेदकारो यः स इकारो विभाषया ॥ ११९
नञपि च यदा पूर्व्वे विभाषा स्यादिकारता ।
निदर्शनं यथायोग्यमितः परं प्रदीयते ॥ १२०

भस्त्रिका भस्त्रका तत्र भस्त्राशब्दात् भवेदिह ।
अभस्त्रका तथैव स्यात् तथैव स्यादभस्त्रिका ॥ १२१
एषका स्यात् पदं तत्र स्यादेषिका पदं तथा ।
अजका स्यात् पदं तत्र स्यादजिका पदं पुनः ॥ १२२
अनजिका नञा च स्यात् अनजका पुनस्तथा ।
ज्ञका ज्ञिका तथैव स्यात् द्वके द्विके तथा भवेत् ॥ १२३
अज्ञका स्यात् पदं तत्र स्यादज्ञिका पदं तथा ।
स्वकी तावत् स्विका तावद् अस्वका स्यात् तथास्विका ॥ १२४

न प्रयोजयतस्तावद् एषा द्वे च नञा पुनः ।
समासे तु विभक्तिः स्यात् इकारो न यदा च सुप् ॥ १२५

अनेषको भवेन्नित्यं नित्यं भवेत् तथाम्बके।
न प्राप्नोति विकल्पश्च पदमेकं भवेत्ततः॥ १२६
धने ज्ञातौ नञा तावद् पदद्वयं भवेत् खलु।
निदर्शनमितःपूर्व्वं स्व-शब्देन प्रदर्शितम्॥ १२७
स्यादभाषितपुंस्कं च सूत्रं तावदितः परम्।
"भस्त्रा" शब्दस्ततः सिध्येत् तत् कथमिह गृह्यते॥ १२८
स्यादुपसर्ज्जनं शब्दस्तदर्थः गृह्यते पुनः।
अभस्त्रा स्याद् बहुव्रीहौ साल्पेति स्यादभस्त्रिका॥ १२९
अभस्त्रिका पदं तद्वत् पुनरिह भवेदपि।
पदद्वयं भवेदेव खलु चात्र विभाषया॥ १३०

स्यादुपसर्ज्जनं भस्त्रा ह्रस्व आदौ भवेदिह।
पश्चाद् भवेद् बहुव्रीहिः पश्चाच्च टाप प्रयुज्यते॥ १३१
"केऽणा" इति तनो ह्रस्वस्तावदिह प्रजायते।
स्यादभाषितपुंस्काद आ तस्या ह्रस्वो न सः पुनः॥ १३२

नञ्पूर्व्वाणामपीत्युक्तं अपिशब्दः प्रयुज्यते।
तेन स्यादन्यपूर्व्वाणां केवलानां भवेदपि॥ १३३
निर्भस्त्रका भवेत्तावन् निर्भस्त्रिका तथा भवेत्।
स्याद् बहुभस्त्रिका तद्वत् स्याद् बहुभस्त्रका पुनः॥ १३४

४६८। अभाषितपुंस्काच्च। ७।३।४८

स्यादभाषितपुंस्काच्चेत् ह्रस्वः क्वचित् कथञ्चन।
ह्रस्वे भवेदकारो य स इकारो विभाषया॥ १३५
खट्वका स्यात् पदं तत्र खट्विका स्यात् तथा पुनः।
अखट्विका तथैव स्यात् अखट्वका तथा भवेत्॥ १३६
बहुव्रीहौ यदा ह्रस्वः "कपि" परे प्रजायते।
तदापि च विधिर्योज्यः स्यादकारः यतस्तदा॥ १३७

४६९। आदाचार्य्याणाम्। ७।३।४८

यदाऽभाषितपुंस्कं स्यात् आकारश्चेत् पुनः क्वचित्।
ह्रस्वे भवेदकारो यस्तस्याकारो भवेत् पुनः॥ १३८

खट्वाकी च पदं भवेद् खट्वका स्यात् तथा पदम् ।
पदं परमखट्वाका तथैव च भवेदिह ॥ १३९
१५।११।७३

४७० । अनुपसर्जनात् । ४।१।१४

अनुपसर्ज्जनादेव प्रत्ययः स्यादतः परम् ।
सूत्रेषु च परेषु स्यान्निषेध उपसर्ज्जने ॥ १४०

४७१ । टिड्-ढाणञ्-द्वयसच्-दघ्नञ्-मात्रच्-तयप्-ठक्-ठञ्-कञ्-क्वरपः । ४।१।१५

टिडादिभ्यः स्त्रियां ङीप् स्यात् टाबिह च निषिध्यते ।
कुरुचरी टितस्तावत् मद्रीचरी तथा पुनः ॥ १४१
वैनतेयी टितस्तावत् सौरभेयी तथा भवेत् ।
कुम्भकारी भवेदणि पदमौपगवी तथा ॥ १४२
तापसी च तथा चौरी णोऽपि पदं भवेदिह ।
औदपानी तथा चौत्सी भवेदञि निदर्शनम् ॥ १४३
स्यादुरुद्वयसी तत्र स्याद् जानुद्वयसी तथा ।
द्वयसजि द्वयं तावत् भवेदिह निदर्शनम् ॥ १४४
उरुदघ्नी पदं तद्वत् जानुदघ्नी तथा भवेत् ।
प्रत्ययश्च यदा दघ्नच् इदं द्वयं तदा पुनः ॥ १४५
उरुमात्री पदं तद्वत् जानुमात्री पदं तथा ।
प्रत्ययः स्याद् यदा मात्रच् तदा भवेन्निदर्शनम् ॥ १४६
पञ्चतयी पदं तत्र दशतयी पदं भवेत् ।
प्रत्ययः स्यात् तयप् यत्र तत्र भवेन्निदर्शनम् ॥ १४७
आक्षिकी च पदं तद्वत् शालाकिकी तथा पदम् ।
प्रत्ययस्तु यदा ठक् स्यात् तदा भवेन्निदर्शनम् ॥ १४८
लावणिकी पदं ठञ् चेत् यादृशी कञ् यदा भवेत् ।
इत्वरी नश्वरी तत्र प्रत्ययः स्याद् यदा क्वरप् ॥ १४९

नञ्-स्नञ्-ईकक्-ख्युन्-तरुण-तलुनानामुपसंख्यानम् (वा)

स्त्रैणी पौंस्नी पदं ङीपि तरुणी तलुनी पुनः ।
शाक्तीकी याष्टीकी ङीपि भवेदिह निदर्शनम् ॥ १५०

**४७२। यञश्च। ४।१।१६**

यञन्ताच्च पुनः शब्दात् ङीप् प्रत्ययः स्त्रियां भवेत्।
गार्गी वात्सी पदं तत्र ङीपि भवेन्निदर्शनम्॥ १५१

**४७३। हलस्तद्धितस्य। ६।४।१५०**

तद्धितस्य यकारश्चेत् हलः परं भवेदिह।
उपधायास्तदा तस्य लोप इति प्रसज्यते॥ १५२
गार्गी भवेत् पदं तत्र लोपे पुनर्निदर्शनम्।
वात्सी भवेत् पदं तत्र लोपे निदर्शनं पुनः॥ १५३

**४७४। प्राचां ष्फः तद्धितः। ४।१।१७**

प्राचां मते यञन्ताच्च स्त्रियां ष्फः स्यात् च तद्धिते।
गार्ग्यायनी पदं तेषां वात्स्यायनी तथा पुनः॥ १५४
गार्गी भवेत् तथा लोपे वात्सी भवेत् पदं तथा।
तद्धितग्रहणं सूत्रे स्यात् प्रातिपदिकं यथा॥ १५५

**४७५। षः प्रत्ययस्य। १।३।६**

षकारः प्रत्ययस्यादिरित्संज्ञको भवेदिह।
शिल्पिनि ष्वुन् भवेत्तस्मात् नर्त्तकी रजकी स्त्रियाम्॥ १५६

**४७६। आयनेयीनीयियः फ-ढ-ख-छ-घां प्रत्यया-दीनाम्। ७।१।२**

फादीनामायनादयः क्रमादिह भवन्ति च।
प्राचां ष्फः स्यात् ततश्चायन् "षिद्" च गार्ग्यायनी तथा॥ १५७

**४७७। सर्व्वत्र लोहितादिकतन्तेभ्यः। ४।१।१८**

सर्व्वत्र लोहितादिभ्यः कतन्तेभ्यो विधिर्भवेत्।
विधिर्भवेत् कतन्तेभ्यः यञन्तेभ्यस्तथा भवेत्॥ १५८
उभयत्र स्त्रियां ष्फः स्यात् नित्यो विधिर्भवेदिह।
स्यात् लौहित्यायनी तत्र स्याच्च कात्यायनी पुनः॥ १५९

**४७८। कौरव्य-माण्डूकाभ्यां च। ४।१।१९**

कौरव्याच्च स्त्रियां ष्फः स्यात् माण्डूकात् ष्फस्तथैव च।
स्यात् कौरव्यायणी तत्र स्यात् माण्डूकायनी तथा॥ १६०
न टाप् तावत् न ङीप् तावत् अपवादे विधिर्मतः।
स्यादिह कौरवी सेना यदाण् च प्रत्ययो भवेत्॥ १६१

कौरव्य-माण्डुकेयोरासुरेरुपसंख्यानम् (वा)

आसुरिरपि च प्राह्यः स्फ इह स्यात् स्त्रियां पुनः।
स्यादासुरायणी तत्र स्त्रियां स्फे च निदर्शनम्॥ १६२

४७९। वयसि प्रथमे। ४।१।२०

वयसि प्रथमे तत्र यदा शब्दः प्रयुज्यते।
अदन्ताच्च स्त्रियां ङीप् स्यात् इति विधिर्भवेदिह॥ १६३
कुमारी किशोरी तत्र वर्करी च निदर्शनम्।
वयो न प्रथमं यत्र न ङीप् स्यात् स्थविरा यथा॥ १६४
अदन्ताच्च विधिर्योज्यः न चान्यत्र तथा भवेत्।
शिशुरिति न चादन्तो न ङीप् तस्मात् भवेदिह॥ १६५

वयसि अचरमे इति वाच्यम (वा)

न वयश्चरमं यत्र तत्र तु ङीप् भवेत् खलु।
वधूटी स्याच् चिरण्टी स्यात् द्वितीयन्तु वयो भवेत्॥ १६६

"कन्यायाः" इति सूत्रं च कन्या च ज्ञापकाद् भवेत्।
स्यादुत्तानशया चापि नेह वयःश्रुतिः खलु॥ १६७

४८०। द्विगोः। ४।२।२१

पदं द्विगौ यदा दृष्टं तदा ङीप् स्यात् स्त्रियां खलु।
पञ्चपूली पदं तत्र दशमूली निदर्शनम्॥ १६८
कथं स्यात् त्रिफला तत्र द्विगौ पदं स्थितं खलु।
अजादिषु पदं दृष्टं टाप् प्रत्ययो भवेत्ततः॥ १६९

४८१। अपरिमाण-विस्ता-चित कम्वल्याभ्यो न तद्धितलुकि। ४।१।२२

द्विगोरपरिमाणान्तात् तद्धितलुकि ङीप् न च।
विस्ता-चित-कम्वल्यान्तात् द्विगोर्न ङीप् तथा सति॥ १७०
द्विगोरपरिमाणान्तात् पञ्चाश्वा स्यात् निदर्शनम्।
दशाश्वा स्यात् तथैवात्र निदर्शनं ततः पुनः॥ १७१
न कालः स्यात् न संख्या स्यात् परिमाणं सतां मते।
द्विवर्षा स्यात् त्रिवर्षा स्यात् द्विशता त्रिशता तथा॥ १७२
द्विविस्ता च त्रिविस्ता च द्व्याचिता त्र्याचिता पुनः।
द्विकम्वल्या त्रिकम्वल्या पुनस्तत्र निदर्शनम्॥ १७३

परिमाणं न चेत् तत्र ङीप्प्रत्ययो भवेत् खलु ।
द्व्याढकी त्र्याढकी ज्ञेया ङीपि तत्र कृते पुनः ॥ १७४
तद्धितलुकि तद्वत् स्यात् नान्यत्र च तथा भवेत् ।
पञ्चाश्वी स्यात् दशाश्वी स्यात् समाहारे भवेत् ङीप् ॥ १७५

४८२ । काण्डान्तात् क्षेत्रे । ४।१।२३

तद्धितलुक् यदा तत्र क्षेत्रं वाच्यं पुनः स्थितम् ।
काण्डशब्दात् द्विगोस्तत्र न ङीप् भवेदिति स्थितिः ॥ १७६
द्विकाण्डा क्षेत्रभक्तिः स्याद् यथाश्रुतं निदर्शनम् ।
त्रिकाण्डा क्षेत्रभक्तिः स्याद् निदर्शनं तथा पुनः ॥ १७७
द्वे काण्डे प्रमाणमस्या प्रमाणे द्वयसज् भवेत् ।
"प्रमाणे लो" "द्विगो र्नित्यम्" इति तच्च विलुप्यते ॥ १७८
न: काण्डं परिमाणं स्यात् प्रतिषेधः ततः स्थितः ।
वचनं नियमार्थं स्यात् क्षेत्रे चापि निषिध्यते ॥ १७९
द्विकाण्डी रज्जुरित्यत्र ङीप् प्रत्ययो भवेत् खलु ।
प्रमाणविशेषे काण्डं न दुष्यति पदं ततः ॥ १८०

४८३ । पुरुषात् प्रमाण अन्यतरस्याम् । ४।१।२४

प्रमाणे पुरुषो यत्र तत्र न ङीप् विभाषया ।
द्वौ पुरुषौ प्रमाणं चेत् द्विपुरुषा पदं भवेत् ॥ १८१
पदं द्विपुरुषी चापि ङीपि भवेत् तथा पुनः ।
त्रिपुरुषा पदं तद्वत् त्रिपुरुषी तथा भवेत् ॥ १८२
नैतच्च परिमाणे स्यात् नित्यं तस्मात् निषिध्यते ।
नित्ये प्राप्ते निषेधे तु विकल्पार्थमिदं भवेत् ॥ १८३
प्रमाणे च भवेदेवमन्यत्र न तथा पुनः ।
क्रीता द्वाभ्यां पुरुषाभ्यां द्विपुरुषा पदं तदा ॥ १८४
तद्धितलुक् स्थितं तावत् अन्यत्र न तथा भवेत् ।
द्विपुरुषी समाहारे द्विपुरुषा तथा पुनः ॥ १८५

४८४ । उधसोऽनङ् । ५।४।१३१

उधसश्च बहुव्रीहौ समासान्तो भवेदनङ् ।
कुण्डोध्नी स्यात् घटोध्नी स्यात् पदं तथा स्त्रियामिह ॥ १८६

४८५ । बहुव्रीहेरूधसो ङीष् । ४।१।२५

ऊधसो ङीष् बहुव्रीहेर्घटोध्नी स्यात् पदं तदा ।
निषेधे तु द्विधाप्राप्ते सूत्रमिदं प्रवर्त्तते ॥ १८७
३।११७३

४८६ । संख्याव्ययादे ङीप् । ४।१।२६

संख्यादेरव्ययादेश्च बहुव्रीहौ तु ङीप् भवेत् ।
द्व्यूध्नी त्र्यूध्नी बहुव्रीहौ संख्याव्ययात् निदर्शनम् ॥ १८८
अत्यूध्नी च बहुव्रीहौ निदर्शनं तथाव्ययात् ।
निरूध्नी च बहुव्रीहौ निदर्शनं तथैव च ॥ १८९
"आदि" पदं धृतं सूत्रे द्विविधोध्नी तथा भवेत् ।
त्रिविधोध्नी तथैव स्यात् "आदिः" आसीत् पुनः स्त्रियाम् ॥ १९०

४८७ । दामहायनान्ताच्च । ४।१।२७

इहानुवर्त्तते संख्या नाव्ययं चानुवर्त्तते ।
संख्यादेश्च बहुव्रीहौ दाम्नो ङीप् हायनात् तथा ॥ १९१
द्विदाम्नी स्यात् त्रिदाम्नी स्यात् द्विहायनी त्रिहायनी ।
स्याच्च चतुर्हायनी तद्वत् दाम्नश्च हायनात् परम् ॥ १९२

हायनो वयसि स्मृतः (वा)

वयसि हायनो ज्ञेयो न वयश्चेत् तथा न च ।
द्विहायनी भवेच्च शाला त्रिहायनी तथैव च ॥ १९३
स्याच्च चतुर्हायनी शाला तद्वदिह निदर्शनम् ।

त्रिचतुर्भ्यां हायनस्य (वा)

हायनस्य त्रिचतुर्भ्यां भवेन् णत्वमिति स्थितिः ॥ १९४

४८८ । नित्यं संज्ञाछन्दसोः । ४।१।२९

अन्नन्तश्चेद् बहुव्रीहिरुपधा लुप्यते यदि ।
संज्ञायां ङीप् भवेन्नित्यं पुनर्नित्यं च छन्दसि ॥ १९५
सुराज्ञी स्यादतिराज्ञी संज्ञायां च निदर्शनम् ।
एकदाम्नी द्विदाम्नी स्यात् निदर्शनं च छन्दसि ॥ १९६

४८९ । केवल-मामक-भागधेय-पाप-अपर-समान-आर्य्यकृत-सुमङ्गल-भेषजाच्च । ४।१।३०

संज्ञायां ङीष् भवेदेभ्य एभ्यो ङीप् स्यात् च छन्दसि ।
अतःपरं मया दत्तं प्रत्येकन्तु निदर्शनम् ॥ १९७

केवली मामकी पापी भागधेयी सुमङ्गली ।
अपरी च समानी स्यादार्य्यकृती च भेषजी ॥ १९८
छन्दसि च ताः सर्व्वाः स्युः सर्व्वत्र ङीप् युतो भवेत् ।
भाषायान्तु तथा न स्यात् आकारान्ता यदा च टाप् ॥ १९९
केवला मामका पापा भागधेया सुमङ्गला ।
अपरा च समाना स्यादार्य्यकृता च भेषजा ॥ २००

३९० । अन्तर्वत् पतिवतोर्नुक् । ४।१।३२

एतयोश्च स्त्रियां नुक् स्यात् ततश्च ङीष् भवेत् स्त्रियाम् ।
अन्तर्व्वत्नी पदं तत्र पतिवत्नी तथा भवेत् ॥ २०१
मतुब् निपातनादादौ वत्वं निपातनात् परे ।
आदौ स्यात् गर्भसंयोगे पतियोगे परे पुनः ॥ २०२

४९१ । पत्युर्नो यज्ञसंयोगे । ४।१।३३

पत्युः स्त्रियां नकारः स्यात् ङीष् भवेच्च ततः परम् ।
यदा यज्ञेन संयोगस्तदा सूत्रं प्रयुज्यते ॥ २०३
सा पत्नी यजमानस्य भवेदिह निदर्शनम् ।
वाचं मे यच्छ पत्नि त्वं भवेन्निदर्शनं परम् ॥ २०४
न यदा यज्ञसंयोगो नकारो न तदा भवेत् ।
ग्रामस्य ब्राह्मणी पतिः प्रत्युदाहरणं स्मृतम् ॥ २०५

४९२ । विभाषा सपूर्व्वस्य । ४।१।३४

पत्यन्तस्य सपूर्व्वस्य स्त्रियां नः स्याद्विभाषया ।
अनुपसर्ज्जनस्येह पत्यन्तस्य भवेद्विधिः ॥ २०६
वृद्धपतिः पदं तत्र वृद्धपत्नी तथा भवेत् ।
स्थूलपतिर्भवेत्तद्वत् स्थूलपत्नी तथा पुनः ॥ २०७

४९३ । नित्यं सपत्न्यादिषु । ४।१।३५

सपत्न्यादौ नकारः स्यात् पत्युर्नित्यमिति स्थितिः ।
विधानार्थं भवेन्नित्यं विकल्पे वचनं पुनः ॥ २०८
एकपत्नी सपत्नी स्यात् पुनरिह निदर्शनम् ।
समानस्य सभावार्थं वचनं क्रियते पुनः ॥ २०९

सपत्न्यादिः

एको वीरः समानः स्यात् पिण्डो भ्राता तथैव च ।
पुत्रश्च स्यात् सपत्न्या दौ गणो मया प्रदर्शितः ॥ २१०

४९४ । पूतक्रतोरै च । ४।१।३६

पूतक्रतु यदा शब्द ऐकारः स्यात् तथा च ङीप् ।
पदं पूतक्रतायी स्यात् पूतक्रतोः स्त्रियामिह ॥ २११

४९५ । वृषाकपि-अग्नि-कुत्सित-कुसीदानाम-
नुदात्तः । ४।१।३७

वृषाकपिस्तथा चाग्नि कुसीदः कुत्सितस्तथा ।
उदात्त ऐ भवेदेषां ङीबपि च तथा पुनः ॥ २१२
पदं वृषाकपायी स्यात् अग्नायी स्यात् तथैव च ।
कुसितायी कुसीदायी निदर्शनं तथा पुनः ॥ २१३

४९६ । मनोरौ वा । ४।१।३८

मनुशब्दाद् भवेद् औ च उदात्त ऐ तथा च वा ।
ताभ्यां च योगतस्तत्र ङीब्रपि च भवेत् स्त्रियाम् ॥ २१४
"वा" ग्रहणं कृतं सूत्रे विकल्पोऽपि ततो द्वयोः ।
मनोः स्त्री चेत् मनायी स्यात् मनावी स्यात् मनुः पुनः ॥ २१५

४९७ । वर्णादनुदात्तात् तोपधात् तः नः । ४।१।३९

पदं चेदनुदात्तान्तं वर्णवाची पुनश्च चेत् ।
तोपधं चेत् पुनश्चापि विभाषा ङीष् प्रवर्त्तते ॥ २१६
तकारस्य नकारः स्यात् समादेशस्तथैव च ।
निदर्शनं च सर्व्वत्र परं मया प्रदीयते ॥ २१७
एताशब्दःस्थितस्तावत् एणीशब्दो भवेत्तथा ।
श्येताशब्दः स्थितस्तावत् श्येनीशब्दः स्थितः पुनः ॥ २१८
हरिता तु यदा शब्दो हरिणी स्यात् तदापि च ।
रोहिनी तु यदा शब्दः रोहिता तु तदा पुनः ॥ २१९
४।११।७३

४९८ । अन्यतो ङीष् । ४।१।४०

आरम्भः ११।११।७३

पदं चेदनुदात्तान्तं वर्णवाची पुनश्च चेत् ।
तोपधं च न पदं चेत् स्त्रियां ङीष् प्रत्ययो भवेत् ॥ २२०

स्वरे चात्र विशेषः स्यात् विशेषो नान्यथा पुनः ।
अनुदात्तं भवेन् ङीपि स्यादुदात्तं यदा च ङीष् ॥ २२१
सारङ्गी च पदं तत्र कल्माषी च पदं पुनः ।
शवली च पदं तत्र सर्व्वत्र ङीष् प्रयुज्यते ॥ २२२

४९९ । षिद् गौरादिभ्यश्च । ४।१।४६

षित् प्रातिपदिकं स्याच्चेत् गौरादिकं पुनर्यदि ।
प्रत्ययस्तु स्त्रियां ङीष् स्यात् यथा परं निदर्शनम् ॥ २२३
नर्त्तकी खनकी तत्र रजकी स्यात् तथैव च ।
शिल्पिनि ष्वुन् ततः ष्वित् स्यात् ङीष् प्रत्ययो भवेत्ततः ॥ २२४
गौरी मत्सी पदं तावद् गौरादिके निदर्शनम् ।
शृङ्गी हयी भवेत्तद्वत् गवयी मुकयी तथा ॥ २२५

५०० । सूर्य्य-तिष्या-अगस्त्यानां य उपधायाः । ६।४।१४९

उपधाया यकारस्य भस्य भवेद् विलोपनम् ।
गौरी तैषी तथागस्ती मत्सी पदं तथा भवेत् ॥ २२६

५०१ ।

| | |
|---|---|
| (१) जानपद | (१) वृत्ति |
| (२) कुण्ड | (२) अमत्र |
| (३) गोण | (३) आवपन |
| (४) स्थल | (४) अकृत्रिमा |
| (५) भाज | (५) श्राणा |
| (६) नाग | (६) स्थौल्य |
| (७) काल | (७) वर्ण |
| (८) नील | (८) अनाच्छादन |
| (९) कुश | (९) अयोविकार |
| (१०) कामुक | (१०) मैथुनेच्छा |
| (११) कबरा | (११) केशवेशेषु । ४।१।४२ (स्त्रियां ङीष्) |

(१) वृत्तौ जनपदात् ङीष् स्यात् जानपदी पदं भवेत् ।
अन्या जानपदी ज्ञेया विशेषः केवलं स्वरे ॥ २२७
उत्सादौ तु स्थितः शब्दो भवेद् अञ् च भवेच्च ङीप् ।
आद्युदात्तः ततः पश्चाद् विशेषस्तु प्रदर्शितः ॥ २२८

(२) अमन्त्रे तु भवेत् कुण्डी पात्रे शब्दः प्रकीर्तितः ।
अन्यत्र तु भवेत् कुण्डा देवी दुर्गा भवेत् तदा ॥ २२९

(३) आवपने भवेद् गोणी धान्यादि नीयते तया ।
अन्यत्र तु भवेद् गोणी संज्ञायान्तु पदं भवेत् ॥ २३०

(४) अकृत्रिमा भवेत् स्थला न तु परिष्कृता यदा ।
कृत्रिमा तु भवेत् स्थली पुरुषेन परिष्कृता ॥ २३१

(५) पक्का यदि भवेद् भाजी खाद्ये शब्दः प्रकीर्तितः ।
अन्यथा तु भवेद् भाजा न चेत् पक्का मता भवेत् ॥ २३२

(६) स्थूली यदि भवेत् नागी स्त्रियां पदं प्रयुज्यते ।
अन्यत्र तु भवेन्नागा दैर्घ्ये शब्दः प्रकीर्तितः ॥ २३३
ङीष् प्रत्ययो विशेषेण स्थौल्ये तावद् भवेदिह ।
सामान्यतो गुणे तत्र नागा खलु पदं भवेत् ॥ २३४
जातौ तु सर्व्वदा ङीष् स्यात् नागी खलु पदं भवेत् ।
अर्थे यो विशेषः स्थितः स च मया प्रदर्शितः ॥ २३५

(७) वर्णो यदि भवेत् काली कृष्णवर्णास्तदोच्यते ।
अन्यत्र तु भवेत् काला निष्ठुरायां वचो भवेत् ॥ २३६

(८) ओषधिश्चेद् भवेन्नीली प्राणी यदि तथा भवेत् ।
नीली गौरोषधिः नीली नीली च वड़वा पुनः ॥ २३७
आच्छादने भवेन्नीला नीला शाटी निदर्शनम् ।
नीली नीला द्वयं चात्र संज्ञायान्तु विभाषया ॥ २३८

(९) भवत्ययोविकारश्चेत् पदं कुशी तदा भवेत् ।
अन्यत्र तु कुशा ज्ञेया रज्जौ तृणे विशेषतः ॥ २३९

(१०) मैथुनेच्छा यदा तस्याः कामुकी सा तदोच्यते ।
कामुका स्याद् धनेच्छायां विशेषस्तु भवेदयम् ॥ २४०

(११) कबरी केशवेशे स्यात् ङीषि पदं तथा भवेत् ।
कबरा स्यात् तु वैचित्र्ये टापि पुनः पदं स्त्रियाम् ॥ २४१

**५०२ । शोणात् प्राचाम् । ४।१।४३**

शोणशब्दात् स्त्रियां ङीष् स्यात् प्राचां मते इति स्थितिः ।
शोणी भवेत् पदं तत्र शोणा वापि भवेत् तथा ॥ २४२

५०३। वोतो गुणवचनात्। ४।१।४४

उकारान्ताद् भवेद् वा ङीष् गुणस्य वचनं यदि।
पट्वः पट्वी मृदुः मृद्वी भवेदिह निदर्शनम्॥ २४३
उकारान्ताद् विभाषा ङीष् न चान्यत्र तथा भवेत्।
शुचिरियं भवेत्तावत् उकारान्तः शुचिर्न च॥ २४४
गुणस्य वचनात् तद्वत् अन्यत्र न तथा पुनः।
मूषिके तु भवेदाखुः न च गुणो मतो भवेत्॥ २४५

वसुशब्दात् गुणवचनात् ङीव् आद्युदात्तार्थम् (वा)

"वसु" शब्दात् स्त्रियां ङीप् स्यादाद्युदात्तं यथा भवेत्।
"वस्वी" पदं भवेदत्र ङीपि तावत् सतां मते॥ २४६

खरुसंयोगोपधात् प्रतिषेधो वक्तव्यः (वा)

खरुशब्दात् न ङीष् तत्र न संयोगोपधात् पुनः।
खरुः पतिंवरा कन्या पाण्डुरियं च ब्राह्मणी ३४७
"सत्त्वे निविशतेऽपैति पृथक् जातिषु दृश्यते।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥"

५०४। बह्वादिभ्यश्च। ४।१।४५

बह्वादीनां स्त्रियां वा ङीष् प्रत्ययश्च भवेदिह।
बहुः बह्वी पदं ज्ञेयमपि बहु पदं पुनः॥ २४८

कृतः प्राण्यङ्गात् (वा)

ङीप् प्रत्ययो विभाषा स्यात् प्राण्यङ्गं चेत् प्रतीयते।
धमनिर्धमनी तत्र पदद्वयं विभाषया॥ २४९

कृदिकारात् अक्तिनः (वा)

कृदिकारात् पुनर्वा ङीष् रात्रिः रात्री भवेत् तथा।
इकारान्तात् क्तिनो ङीष् न कृतिरेव कृती तु न॥ २५०

५०५। पुंयोगादाख्यायाम्। ४।१।४८

पुंयोगात्तु पुमाख्या या स्त्रियामपि च वर्त्तते।
प्रत्ययः स्यात् ततो ङीष् च गणकी स्यात् पदं तथा॥ २५१
सम्बन्धश्चेत् विवाहेन सूत्रमिदं प्रयुज्यते।
अन्यत्र न स्थितं सूत्रम् अन्यत्र गणका भवेत्॥ २५२

गोपालिकादिभ्यः प्रतिषेधः (वा)

गोपालिकादिके तावत् प्रतिषेधश्च वर्त्तते।
विवाहेनापि सम्बन्धे गोपालिका पदं भवेत् ॥ २५३

सूर्य्याद्देवतायां चाब् वक्तव्यः (वा)

सूर्य्यस्य देवता स्त्री चेत् पदं सूर्य्या भवेदिह।
सूरी स्यात् देवता चेन्न कुन्ती सा स्त्री च मानवी ॥ २५४

५०६। **इन्द्र-वरुण-भव-शर्व्व-रुद्र-मृड़-हिमारण्य—यव-यवण-मातुल-आचार्य्याणाम् आनुक्। ४।१।४९**

पुंयोगान्तु भवेदानुक् पूर्व्वसूत्राच्च ङीष् भवेत्।
ङीषपि च तथा चानुक् द्वयमिह पुनर्मतम् ॥ २५५
इन्द्रस्य तु यदा स्त्री स्यात् इन्द्राणी स्यात् पदं तदा।
वरुणस्य यदा स्त्री स्यात् वरुणानी पदं भवेत् ॥ २५६

हिमारण्ययो र्महत्वे (वा)

महद् हिमं हिमानी स्यात् आनुगिह च युज्यते।
अरण्यानी पदं ज्ञेयमरण्यं चेद् भवेन्महत् ॥ २५७

यवाद्दोषे (वा)

दुष्टो यवो यवानी स्यात् आनुगिह च युज्यते।

यवनात् लिप्याम् (वा)

यवनानां लिपिर्यत्र: यवनानी पदं भवेत् ॥ २५८

उपाध्याय-मातुलाभ्यां वा (वा)

पदमुपाध्यायानी स्यात् मातुलानी पदं तथा।
उपाध्यायी विभाषा स्यात् विभाषा स्याच्च मातुली ॥ २५९

या तु स्वयमध्यापिका तत्र वा ङीष् वाच्यः (वा)

उपाध्याया पदं च स्याद् उपाध्याया भवेत्तथा।

आचार्य्यादणत्वं च (वा)

आचार्य्यानी पदं तत्र आचार्य्या स्यात् पदं पुनः ॥ २६०

अर्य्यक्षत्रियाभ्यां वा (वा)

अर्य्यानि तु पदं ज्ञेयं क्षत्रियाणी पदं तथा।
पुंयोगं तु विना तत्र स्वार्थे विधिः प्रयुज्यते ॥ २६१
पुंयोगे तु ङीषेव स्यात् अर्य्यी स्यात् क्षत्रियी तथा।

५०७। क्रीतात् करणपूर्व्वात्। ४।१।५०

क्रीतशब्दाददन्तात्तु करणादेः स्त्रियां च ङीष्॥ २६२
पदं स्याद् वसनक्रीती वस्त्रक्रीती पदं तथा।
भवेत् करणपूर्व्वाच्च नान्यत्र स्यात् तथा पुनः॥ २६३
सुक्रीती च पदं तत्र न पूर्व्वं करणं स्थितम्।
"सा हि तस्य धनक्रीती प्राणेभ्योऽपि गरीयसी।"
टाबन्तेन समासः स्यात् ङीपिह न प्रवर्त्तते॥ २६४

५०८। क्तादल्पाख्यायाम्। ४।१।५१

क्तान्तात् करणपूर्व्वात् स्यादल्पाख्यायां पुनश्च ङीष्।
उपाधिः समुदायस्य स्यादल्पाख्या सतां मते॥ २६५
भवेदभ्रविलिप्ती द्यौः यथाश्रुतं निदर्शनम्।
भवेत् सूपविलिप्ती च पात्रीति च पुनस्तथा॥ २६६
स्वल्पैर्मेघैरवलिप्तं नभ इति प्रतीयते।
स्वल्पैः सूपैर्विलिप्तं स्यात् तथा पात्रमिति स्थितिः। २६७
अल्पाख्या तु न चेत् तत्र न ङीष् भवेत् तदा पुनः।
सा चन्दनानुलिप्तेति बहुलं लेपनं मतम्॥ २६८

५०९। बहुव्रीहेश्चान्तोदात्तात्। ४।१।५२

अन्तोदात्तो बहुव्रीहिस्तस्माद् ङीष् प्रत्ययो भवेत्।
स्वाङ्गं पूर्व्वं पदं यस्मिन् बहुव्रीहिः स गृह्यते॥ २६९
शङ्खभिन्नी पदं तत्र केशलूनी पदं तथा।
उरुभिन्नी पदं तद्वत् भवेदिह निदर्शनम्॥ २७०
न चेत् तत्र बहुव्रीहिर्न ङीष् भवेदिति स्थितिः।
स्यात् पादपतिता तत्र बहुव्रीहिर्भवेन्न च॥ २७१

अन्तोदात्तात् जातिप्रतिषेधः (वा)

दन्तजाता पदं तत्र स्तनजाता पदं भवेत्।
आन्तोदात्तं पदं "जातं" तस्मात्तु ङीष् निषिध्यते॥ २७२

पाणिगृहीत्यादीनामर्थविशेषे (वा)

भवेत्तु पाणिगृहीती भार्य्यार्थे ङीष् प्रवर्त्तते।
भवेत्तु पाणिगृहीता कथञ्चित् करधारणे॥ २७३

अवहुनञ्सुकालसुखादिपूर्व्वादिति वक्तव्यम् (वा)

"वहु" यदा पदं पूर्व्वं "नञ्" यदि वा "सु" वा "कु" वा।
"कालो" यदि पदं पूर्व्वं यदा पूर्व्वं सुखादिकम्॥ २७४
ङीप्प्रत्ययस्तदा न स्यात् यथा परं निदर्शनम्।
वहुकृता पदं च स्यात् अकृती स्यात् पदं पुनः॥ २७५
सुकृता मूपजाता स्यात् मासजाता पदं तथा।
दुःखजाता पदं तावत् भवेदिह निदर्शनम्॥ २७६
११।११।७३

५१०। अस्वाङ्गपूर्व्वपदाद् वा। ४।१।५३

अन्तोदात्तो वहुव्रीहिः क्तान्तो भवेत् पुनर्यदि।
ङीष् प्रत्ययो विभाषा स्यात् इति विधिर्भवेदिह॥ २७७
शार्ङ्गजग्धी पदं तत्र शार्ङ्गजग्धा पदं पुनः।
पलाण्डुभक्षिती तत्र पलाण्डुभक्षिता तथा॥ २७८
स्वाङ्गं पूर्व्वं पदं यत्र विभाषा तु न वर्त्तते।
तत्र नित्यं भवेत् ङीष् च शङ्खभिन्ना यथा भवेत्॥ २७९
अन्तोदात्तं न चेत् तत्र न ङीष् तदा भवेदिह।
वस्त्रच्छन्ना पदं तत्र नान्तोदात्तं न ङीष् ततः॥ २८०

वहुलं संज्ञाच्छन्दसोरिति वक्तव्यम् (वा)

स्यात् प्रवृद्धविलूनी च यदा ङीष् तु प्रवर्त्तते।
स्यात् प्रवृद्धविलूना च यदा ङीष् न भवेदिह॥ २८१

५११। स्वाङ्गात् चोपसर्ज्जनात् असंयोगोपधात्। ४।१।५४

यदुपसर्ज्जनं स्वाङ्गम् असंयोगोपधं भवेत्।
स्यात् प्रातिपदिकात्तत्र तदन्ताद् ङीष् विभाषया॥ २८२
चन्द्रमुखी पदं तत्र चन्द्रमुखा तथा भवेत्।
अतिकेशी पदं तद्वत् अतिकेशा पदं तथा॥ २८३
स्वाङ्गं यदा पदं पूर्व्वं तदा भवेत् न चान्यथा।
वहुयवा न तु स्वाङ्गं न ङीषिह भवेत्ततः॥ २८४
स्यादुपसर्ज्जनं यत्र तत्र विधिः प्रयुज्यते।
अन्यत्र न भवेत् ङीष् च स्याद् अशिखा पदं तदा॥ २८५
असंयोगोपधात् ङीष् स्यात् संयोगश्चेत् न ङीष् भवेत्।
सुगुल्फा स्यात् सुपार्श्वा स्यात् संयोगश्च तथा न ङीष्॥ २८६

अङ्गगात्रकण्ठेभ्य इति वक्तव्यम् (वा)

मृदङ्गी तु पदं तत्र मृदङ्गा तु पदं भवेत्।
सुगात्री स्यात् सुगात्रा स्यात् विभाषया द्वयं भवेत् ॥ २८७

"अद्रवं मूर्त्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्।
अतस्थं तत्र दृष्टं चेत् तेन चेत् तत् तथायुतम् ॥"

५१२। नासिका-उदर-ओष्ठ-जङ्घा-दन्त-कर्ण-शृङ्गाच्च। ४।१।५१

ङीषुपसर्ज्जनात् स्वाङ्गात् नासिकादेर्विभाषया।
स्यात् तुङ्गनासिकी चात्र स्यात् तुङ्गनासिका पुनः ॥ २८८
तिलोदरी भवेत्तद्वत् तिलोदरा तथा भवेत्।
विम्वोष्ठी स्यात् पदं तत्र विम्वोष्ठा स्यात् पदं पुनः ॥ २८९
दीर्घजङ्घी पदं ज्ञेयं दीर्घजङ्घा तथैव च।
समदण्डी पदं तद्वत् समदण्डा तथा भवेत् ॥ २९०
चारुकर्णी पदं स्याच्च चारुकर्णा तथा पुनः।
तीक्ष्नशृङ्गा पदं तद्वत् तीक्ष्नशृङ्गा भवेत्तथा ॥ २९१
संयोगे ङीष् न चाप्नोति वह्वचि ङीष् भवेन्न च।
द्विधा तत्र प्रतिषेधे सूत्रमिदं प्रवर्त्तते ॥ २९२

पुच्छाच्चेति वक्तव्यम् (वा)

भवेत् कल्याणपुच्छी च पदमिह निदर्शनम्।
भवेत् कल्याणपुच्छा च निदर्शनं तथा पुनः ॥ २९३

कवर-मणि-विष-शरेभ्यो नित्यम् (वा)

भवेत् कवरपुच्छी च मणिपुच्छी तथा भवेत्।
विषपुच्छी भवेत्तद्वत् शरपुच्छी तथा पुनः ॥ २९४

उपमानात् पक्षाच्च पुच्छाच्च (वा)

उलुकपक्षी सेना स्यात् पुनरिह निदर्शनम्।
उलुकपुच्छी शाला च भवेन्नदर्शनं पुनः ॥ २९५

५१३। न क्रोडादिवह्वचः। ४।१।५६

"स्वाङ्गादि"ति स्थितं सूत्रं तेन ङीष् च विधिर्भवेत्।
इह ङीष् प्रतिषिद्धः स्यात् सूत्रस्य च तदाशयः ॥ २९६
क्रीड़ाद्यन्तात् ङीष् स्याच्च वह्वजन्तात् तथा न ङीष्।
भवेत् कल्याणक्रीड़ा च स्यात् कल्याणयुवा पुनः ॥ २९७

भवेत् कल्याणवाला च कल्याणीखा तथा भवेत् ।
स्यात् कल्याणशाला तद्वत् स्यात् कल्याणगुदा पुनः ॥ २९८
स्यात् कल्याणघोणा तत्र स्यात् कल्याणमुखा तथा ।
स्यादाकृतिगणश्चायं क्रोड़ादिः कथितो मया ॥ २९९

बह्वचोऽपि भवेत् टाप् च स्यात् पृथुजघना तथा ।
भवेत् महाललाटा च पुनस्तत्र पदं स्त्रियाम् ॥ ३००

५१४। सह-नञ्-विद्यमानपूर्व्वाच्च। ४।१।५७

"स्वाङ्गादि"ति स्थितं सूत्रं "नासिके"ति स्थितं पुनः ।
ताभ्यान्तु ङीष् भवेन् प्राप्तः स इह च निषिध्यते ॥ ३०१
"सहे"ति चेत् स्थितं पूर्व्वं विद्यमानेति चेत् तथा ।
नञिति चेत् स्थितं पूर्व्वं स्त्रियां ङीष न भवेत्तथा ॥ ३०२
सकेशा स्यात् पदं तत्र स्यादकेशा पदं पुनः ।
स्याद् विद्यमानकेशा च सनासिका तथा भवेत् ॥ ५०३
विद्यमाननासिका स्यात् अनासिका तथैव च ।
सर्व्वत्र तु स्त्रियां टाप् स्यात् न पुनर्ङीष् प्रवर्त्तते ॥ ३०४

५१५। नखमुखात् संज्ञायाम्। ४।१।५८

नखात् मुखात् न ङीष् तावत् यदा संज्ञा प्रतीयते ।
शूर्पणखा पदं तत्र गौरमुखा पदं तथा ॥ ३०५
ङीषेव स्यात् न चेत् संज्ञा चन्द्रमुखी यथा भवेत् ।
भवेत् ताम्रणखी कन्या पुनर्ङीषि निदर्शनम् ॥ ३०६

५१६। दिक्पूर्व्वपदात् ङीप्। ४।१।६०

यदा दिक् स्यात् पदं पूर्व्वं ङीप्प्रत्ययः प्रयुज्यते ।
अपवादो भवेन् ङीषः विशेषस्तु स्वरे मतः ॥ ३०७
प्राङ्मुखी स्यात् पदं तत्र प्राङ्मुखा स्यात् पदं तथा ।
प्राङ्नासिकी पदं ज्ञेया प्राङ्नासिका तथैव च ॥ ३०८

५१७। वाहः। ४।१।६१

वहेः क्विन्-प्रत्ययान्तस्य निर्द्देशस्तु भवेदिह ।
वाहन्तात् तु पदात् तत्र ङीष्प्रत्ययो भवेत् स्त्रियाम् ॥ ३०९
दित्यौही च पदं तत्र प्रष्ठौही च पदं भवेत् ।
पदद्वयं धृतं तत्र काशिकायां निदर्शनम् ॥ ३१०

५१८। सख्यशिश्वीति भाषायाम्। ४।१।६२
सखीशब्दश्च ङीषन्तो भाषायां स्यान्निपातनात्।
अशिश्वी तु भवेत् शब्दः भाषायां ङीष् निपात्यते ॥ ३११
सखीयं ब्राह्मणी मे सा भवेदिह निदर्शनम्।
अशिश्वी तु भवेत् सैव नास्ति यस्याः शिशुः पुनः ॥ ३१२
भाषायां ङीष् भवेत्तावत् अन्यत्र ङीष् न वर्त्तते।
"सखा सप्तपदी भव" न ङीषिह च छन्दसि ॥ ३१३
५१९। जातेरस्त्रीविषयादयोपधात्। ४।१।६३
जातिवाची भवेच् शब्दो न नियतः स्त्रियां खलु।
अयकारोपधः शब्दः स्यादस्त्रीविषयो यदा ॥ ३१४
तथाविधात् तदा शब्दात् ङीष् प्रत्ययः स्त्रियां भवेत्।
कुक्कुटी सूकरी तत्र ब्राह्मणी वृषली पुनः ॥ ३१५
जातिवाची न चेत् शब्दो न तदा ङीष् भवेदिह।
मुण्डा भवेत् पदं तत्र न जातिर्न स्त्रियां च ङीष् ॥ ३१६
यत्र स्त्री विषयस्तत्र न तावत् ङीष् प्रवर्त्तते।
मक्षिका स्यात् पदं तत्र विषयः स्त्री ततो न ङीष् ॥ ३१७
उपधा चेद् यकारः स्यात् न तदा ङीष् भवेदिह।
क्षत्रिया स्यात् पदं तत्र "य" उपधा ततो न ङीष् ॥ ३१८

योपधप्रतिषेधे हय-गवय-मुकय-मत्स्य-मनुष्याणाम्
अप्रतिषेधः (वा)

हये च मुकये मत्स्ये मनुष्ये गवये पुनः।
सर्व्वत्रैव भवेत् ङीष् च तथा पदं भवेत् स्त्रियाम् ॥ ३२०
"आकृतिग्रहणा जाति लिङ्गानां च न सर्व्वभाक्।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥"
५२०। पाक-कर्ण-पर्ण-पुष्प-दल-मूल-वालोत्तरपदाच्च। ४।१।६४
पाकात् कर्णात् तथा पर्णात् तथा पुष्पात् फलात् तथा।
मूलात् वालात् स्त्रियां ङीष् स्यात् उत्तराच्च पदादिह ॥ ३२१
पदम् ओदनपाकी स्यात् शङ्कुकर्णी भवेत्तथा।
शालपर्णी भवेत्तद्वत् शङ्खपुष्पी तथा भवेत् ॥ ३२२
दासीफली भवेत्तद्वत् दर्भमूली तथा पुनः।
गोवाली च पदं तद्वत् पुनरिह निदर्शनम् ॥ ३२३

पुष्पात् फलात् तथा मूलात् नेष्यते ङीष् यतः पुनः ।
अजादिषु हि दृष्टं तत् गणे पाठात् निराकृतम् ॥ ३२४

५२१ । इतो मनुष्यजातेः । ४।१।६५

इकारान्तात् पुनः शब्दात् ङीषिह स्यात् नरे पुनः ।
अवन्ती च तथा कुन्ती दाक्षी प्लाक्षी निदर्शनम ॥ ३२५
इकारान्ताद् भवेत् तद्वत् अन्यत्र न तथा भवेत् ।
विट्शब्दः न चेकारान्त इकारान्तो दरत् न च ॥ ३२६
नरजातौ भवेत्तद्वत् अन्यत्र न तथा भवेत् ।
तित्तिरिश्च भवेदत्र पक्षीजातिर्नरस्तु न ॥ ३२७
"जाते"रिति स्थितं पूर्व्वं कथं "जातिः" पुनर्धृता ।
योपधात् च यथा हि स्यात् औदमेयी पदं भवेत् ॥ ३२८

इञ उपसंख्यानमजात्यर्थम् (वा)

इञश्च तद्धितान्तस्य क्षेत्रे विधिः प्रयुज्यते ।
न भवेच्च यदा जातिस्तदापि ङीष् भवेदिह ॥ ३२९
सौतङ्गमी पदं तत्र मौनचित्ती पदं पुनः ।
इञ् चातुरर्थिके ज्ञेयो न तु जातिर्भवेदिह ॥ ३३०

५२२ । ऊङ् उतः । ४।१।६६

स्त्रियामूङ् स्यात् उकारान्तात् मनुष्यजातिवाचिनः ।
कुरूश्च ब्रह्मबन्धूश्च भवेदिह निदर्शनम् ॥ ३३१

अप्राणिजातेश्चारज्ज्वादीनामिति वक्तव्यम् (वा)

भवेदप्राणिजातेश्च रज्ज्वादीनां तथा च न ।
कर्कन्धूः स्यादलाबूः स्यात् पदमिह निदर्शनम् ॥ ३३२
प्राणिजातेस्तथा न स्यात् न तावदूङ् भवेदिह ।
कृकवाकुः पदं तत्र प्राणीति न न तावदूङ् ॥ ३३३
रज्ज्वादीनां तथा न स्याद् न तावदूङ् भवेदिह ।
रज्जुः हनुः पदं तत्र रज्ज्वादिः स्यात् न तावदूङ् ॥ ३३४

५२३ । बाह्वन्तात् संज्ञायाम् । ४।१।६७

परे बाहु पदं यत्र तत्र स्यादूङ् च नामनि ।
भद्रबाहूः पदं स्याच्च जालबाहूस्तथा भवेत् ॥ ३३५

न यदा तु भवेत् संज्ञा न तावदूङ् भवेत् तदा ।
वृत्तबाहुः पदं तत्र संज्ञा नेति न तावदूङ् ॥ ३३६

५२४ । पङ्गोश्च । ४।१।६८

पङ्गुशब्दात् स्त्रियां तत्र पुनरूङ् स्यादिति स्थितिः ।
पङ्गूरिति पदं तत्र स्त्रियामूङि निदर्शनम ॥ ३३७

श्वशुरस्योकारलोपश्च वक्तव्यः (वा)

श्वश्रूरिति पदं तत्र स्त्रियामूङि निदर्शनम् ।
उकारो लुप्यते तावदकारोऽपि च लुप्यते ॥ ३३८

५२५ । उरूत्तरपदादौपम्ये । ४।५।६९

औपम्ये गम्यमाने स्यादूरूत्तरपदात् पुनः ।
पदं स्यान्नागनासोरूः करभोरूः पदं तथा ॥ ३३९
औपम्ये हि भवेदूङ् च न चान्यत्र तथा भवेत् ।
वृत्तोरुः स्त्री भवेत्तत्र न चौपम्यं न तावदूङ् ॥ ३४०

५२६ । संहित-शफ-लक्ष्मण-वामादेश्च । ४।५।७०

उरूत्तरपदात्तत्र पुनरूङ् स्यात् स्त्रियामिह ।
संहितोरूः पदं तत्र शफोरूश्च पदं भवेत् ॥ ३४१
लक्ष्मणोरूर्भवेत्तद्वत् वामोरूः स्यात् तथैव च ।

सहितसहाभ्यां चेति वक्तव्यम् (वा)

सहितोरूः पदं ज्ञेयं सहोरूश्च पदं तथा ॥ ३४२

५२७ । संज्ञायाम् । ४।५।७२

कद्रुकाद्य स्त्रियामूङ् स्यात् स्त्रियामूङ् स्यात् कमण्डलोः ।
प्रतीयते यत्र संज्ञा यथा कद्रूः कमण्डलूः ॥ ३४३

५२८ । शार्ङ्गरवात् यञो ङीन् । ४।५।७३

भवेत् शार्ङ्गरवादेर्ङीन् अञन्तेभ्यः स एव च ।
शार्ङ्गरवी पदं तत्र बैदी पदं तथा भवेत् ॥ ३४४

नृनरयोर्वृद्धिश्च (वा)

नृनरयोः भवेद् वृद्धिः स्त्रियां नारी तथा भवेत् ।

भोगवद्-गौरिमतोः संज्ञायां घादिषु नित्यं ह्रस्वार्थम् (वा)

शार्ङ्गरवादिके तौ द्वौ नित्यं ह्रस्वो यथा भवेत् ॥ ३४५

**५२९ । यङश्चाप् । ४।१।७४**

यङन्तान्तु स्त्रियां चाप् स्यात् अ् यङ् ष्यङ् यङा धृतं भवेत् ।
आम्बष्ठ्या स्याच्च कौशल्या सौवीर्य्या स्यात् तथा पुनः ॥ ३४६
ष्यङि कारीषगन्ध्या च वाराह्या च भवेदिह ।

**षाच्च यञः (वा)**

षात् परे यञ् तदन्ताच्च पौतिमाष्या निदर्शनम् ॥ ३४७

**५३० । आवट्याच्च । ४।१।७५**

गर्गादिरवटस्तावत् यञि ङीप् स्यादिति स्थितिः ।
तथाप्राप्ते पुनः सूत्रं यथा चाप् च भवेदिह ॥ ३४८
आवट्या च पदं तत्र स्त्रियां चापि भवेत् पुनः ।
प्राचां स्फः स्यात् तथा सति स्यादावट्यायनी पदम् ॥ ३४९

**५३१ । तद्धिताः । ४।१।७६**

अधिकारे भवेत् सूत्रम् आरभ्यते च तद्धितः ।
अध्यायः पञ्चमो यावत् न समाप्तः स्थितो हि सः ॥ ३५०

**५३२ । यूनस्तिः । ४।१।७७**

युवन्शब्दात् स्त्रियां तावत् तिः प्रत्ययो भवेदिह ।
तद्धितः स भवेत्तावत् युवतिः स्यात् पदं तथा ॥ ३५१

१२।११।७३ इति स्त्रीप्रत्ययप्रकरणम् । तत्र श्लोकाः—३५१ ।

---

संशोधनम्—श्लोकः ९७ द्रष्टव्यः ।
तत्र पूर्णः श्लोकः—

बर्त्तका शकुनौ तावत् प्राचां मते भवेदिह ।
उदीचां बर्त्तिका तावत् शकुनिरेव गृह्यते ॥

---

## अथ कारकप्रकरणम्

[ कारककारिका चेति पूर्व्वं ग्रन्थः प्रकाशितः ।
तत्र ये ये स्थिताः श्लोका इह ते ते धृताः पुनः ॥ १
कारककारिका चेति यदा ग्रन्थः प्रकाशितः ।
मुखबन्धे तदा पद्यं "प्रसङ्गतः" इति स्थितम् ॥ २
इहापि च पुनर्दत्तं पद्यं च तद् यथायथम् ।
भग्नी खुकी गता लोकात् तस्यास्तत् स्मृतिचारणम् ॥ ३
ग्रन्थस्य चेत् प्रकाशः स्यात् काले क्वचिद् भविष्यति ।
"प्रसङ्गतः" सदा योज्यं न हि त्याज्यं कथञ्चन ॥ ४
१९।१२।१९७५ श्रीहरिपददत्तः ]

## प्रथमा विभक्तिः

**५३३। प्रातिपदिकार्थलिङ्गपरिमाण-वचनमात्रे प्रथमा। २।३।४६**

स्यात् प्रातिपदिकं सत्ता तदर्थे प्रथमा भवेत्।
कृष्णः श्रीश्च तथा ज्ञानमुच्चैर्नीचैरुदाहृतिः॥ १
लिङ्गे च नियते ज्ञेयमाद्यं त्रिकं निदर्शनम्।
अन्त्यं द्विकमलिङ्गे स्यान्निदर्शनं ततः पुनः॥ २
कृष्णः पुंसि स्त्रियां श्रीश्च ज्ञानं नित्यं नपुंसके।
लिङ्गश्च नियतं तेषां व्यतिक्रमो न दृश्यते॥ ३
उच्चैर्नीचै निपाते स्तो न लिङ्गं दृश्यते तयोः।
अलिङ्गं नियतलिङ्गं द्वयं मया प्रदर्शितम्॥ ४
तटस्तटी तटं स्याच्च लिङ्गमात्रे निदर्शनम्।
अधिकं गम्यते लिङ्ग तटे वृत्तिं विहाय च॥ ५
'द्रोणो व्रीहि'रित्यत्र स्यात् परिमाणं विवक्षितम्।
'द्रोणा'त् परं 'सु'ना बोध्यं परिमाणं निदर्शने॥ ६
इह तु प्रकृतौ द्रोणे प्रत्ययार्थो विशेषणम्।
अभेदस्तत्र संसर्गस्तेन व्रीहिर्विशिष्यते॥ ७
'अनभिहित' इत्येवमधिकारः प्रवर्त्तते।
अभिहिते ततः कार्य्यं न प्राप्नोति कथञ्चन॥ ८
एको द्वौ बहवश्चात्र सर्व्वमभिहितं भवेत्।
तत् कथं प्रथमा तत्र पृच्छेयं स्यात् सुदुस्तरा॥ ९
'वचनं' च धृतं सूत्रे ततश्च मुनिना खलु।
प्रथमा वचने ज्ञेया समाधानं तथा भवेत्॥ १०

---

**प्रसङ्गतः**

ज्येष्ठे मया कृतो ग्रन्थो भग्नी खुकी तदावदत्।
किमिदं लिखसि भ्रातः पुस्तकं किं भविष्यति॥
अद्य भाद्रे स मे ग्रन्थो याति लोके प्रकाशताम्।
भग्नी खुकी गता लोकाद् * दूराद् भग्नी प्रसीदतु॥

---

* खुकी—नामान्तरं प्रतिभा—मृत्युः आषाढ़ः २८, १८९५ (शकाब्दः)

५३४। सम्बोधने च। २।२।४७

'प्रातिपदिक'—सूत्रे तु सम्बोधनं न लक्षितम्।
तत् कथं प्रथमा सिध्येत् सम्बोधन इति स्थितिः॥ ११
अधिको विद्यते चार्थः सम्बोधने सतां मते।
तदर्थं च पुनः सूत्रमिह प्रकुरुते मुनिः॥ १२

---

हृदयं मे स्थितं शून्यं न कर्मणि मनो मम।
जीवामि मृतवल् लोके स्थातव्यं स्थीयते ततः॥
इहायाति कथं जीवः कथं जीवश्च गच्छति।
केयं लीला कथं लीला कस्य वैतत् प्रयोजनम्॥

कैशोरे मे मृता माता न जानामि हि मातरम्।
गतः पिता ततः पश्चात् न मे तदा वयो बहु॥
अद्य तु वयसि प्राप्ते पश्यामि मरणं गृहे।
कथं जन्म कथं मृत्युः किमिदं जीवनं भुवि॥

तथापि क्रियते कर्म न जानामि कथं पुनः।
नश्येत् सर्व्वं पुनः काले गच्छेत् सर्व्वं गतौ मम॥
कारिका या कृता सापि काले गच्छेदसंशयम्।
अकाले तथापि तस्या नाशमहं न कामये॥

ततः प्रकाशितो ग्रन्थश्चरतु स महीतले।
रुचिर्यस्य स गृह्णातु न यस्य स जहातु च॥
गृहीता वाक् मया लोकात् पुनर्लोकं प्रयातु सा।
गृहीता तु मया दत्ता मुक्तो दायादपैमि च॥

इतस्ततः स्फुटं पुष्पं कवेः काव्यं च मालिका।
चिनोति स रुचिर्यस्य तनोति स क्षमो हि यः॥
शुष्यति च दिनान् माला सूत्रं श्लथं भवेत् क्रमात्।
अन्ते शून्यं स्थितं तस्याः कविर्मूढ़ः पलायते॥

शनिवारः, सन्ध्या ( दं ३१ )
भाद्रः २२,
१८९५ ( शकाब्दः )

श्रीहरिपददत्तः
रामपुरहाटः
बीरभूमः

## द्वितीया विभक्तिः

### ५३५। कारके। १।३।२३

अधिकारे भवेत् सूत्रं 'कारके' च विशेषतः।
इतः परं यदुक्तं स्यात् तत् कारके भवेदिह ॥ १३

### ५३६। कर्त्तुरीप्सिततमं कर्म। १।४।४९

यत् कर्त्तुः क्रियया प्राप्तुमिष्टतमं पुनर्मतम्।
तत् कारकं भवेत् कर्म करोति स कटं यथा ॥ १४
माषेष्वश्वं स बध्नाति माषस्य स्यान्न कर्मता।
कर्मणा इप्सिता माषा न तु कर्त्तुरिति स्थितिः ॥ १५
स पयसौदनं भुङ्क्ते पयसोऽपि न कर्मता।
ईप्सितं स्यात् पयो नूनं न तदिष्टतमं खलु ॥ १६
'आधार'श्च तथा 'कर्म' द्वयमेवानुवर्त्तते।
आधारः स्यात्तदा कर्म यदेप्सिततमं भवेत् ॥ १७
गेहं प्रविशतीत्यादौ कर्म भवेत् तथा सति।
ओदनं पचतीत्यादौ न स्यात् कर्म यथोचितम् ॥ १८
इयं दशा यथा न स्यात् तथा मुनिर्विचेष्टते।
स्मृत्वा 'कर्म' पुनः सूत्रे वारयत्यनुवर्त्तनम् ॥ १९
अतीनेन न सम्बन्धो भिन्नं वस्तु प्रवर्त्तते।
इष्टतमं भवेत् कर्म क्रियगाक्षिप्यते यदि ॥ २०

### ५३७। अनभिहिते। २।३।१

स्या'दनभिहिते' सूत्रमधिकारे विवक्षितम्।
इतः परं सर्व्वत्र स्यादधिकारः प्रतिष्ठितः ॥ २१
उक्तं न चेत् समासेन तद्धितेन तिङा कृता।
तदा तत्र बिभक्तिः स्यादधिकारो भवेदयम् ॥ २२

### ५३८। कर्मणि द्वितीया। २।३।२

स्यात् कर्मणि द्वितीयेति मुनिना सूत्रितं पुनः।
करोति स कटं तत्र द्वितीयायां निदर्शनम् ॥ २३

वार्त्तिकम्

"उभसर्व्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु।
द्वितीयाऽम्रे डितान्तेषु ततोऽन्यत्रापि दृश्यते॥" २४
निदर्शनं भवेदत्र ग्राममुभयतो यथा।
ग्रामं च सर्व्वतः स्याच्च निदर्शनं तथा पुनः॥ २५
धिक् पापिनं भवेदत्र निदर्शनं तथापरम्।
सर्वत्रैवं द्वितीया स्यादूहनीयं यथायथम्॥ २६
अभितः परितः समया निकषा हाप्रतियोगेषु च दृश्यते (वा)।
स्याद्ग्रामं परितस्तत्र निकषा समया तथा।
अभितश्च द्वितीयायां सर्व्वत्रैवं स्थितं खलु॥ २७

५६९। तथायुक्तं चानीप्सितम्। १।४।५०

यथेप्सिततमं वस्तु क्रियया चावगाह्यते।
तथैव क्रियया यत्र युज्यते सदनीप्सितम्॥ २८
अनीप्सिते च तत्रापि भवेत् कर्म हि कारकम्।
अन्नं खादन् विषं भुङ्क्ते भवेदिह निदर्शनम्॥ २९

५४०। अकथितञ्च। १।४।५१

अपादानादिभिर्यत् स्यादकथितं विशेषतः।
तदपि च भवेत् कर्म गौणं कर्म तदुच्यते॥ ३०
द्वादशानां दुहादीनां कर्मणा यत् प्रयुज्यते।
तत् स्यादकथितं कर्म गौणं कर्म भवेच्च तत्॥ ३१
दोग्धिश्च याचतेस्तद्वद् दण्डयतिस्तथैव च।
पचतिश्च रुणद्धिश्च चिनोतिः पृच्छतिस्तथा॥ ३२
मथ्नातिर्मुष्णातिर्ब्रूतेः शास्तिश्च जयतिस्तथा।
द्वादशानां दुहादीनां समुद्देशः कृतो मया॥ ३३
यस्यचित् कस्यचिदेषां कर्मणा यद् युतं भवेत्।
अकथितं भवेच्च तत् तच्च कर्म्मं प्रकीर्त्तितम्॥ ३४
दण्डयति शतं गर्गान् व्रजमवरुणद्धि गाम्।
बालं पृच्छति पन्थानं दोग्धि गाश्च पयो नरः॥ ३५
वृक्षं चिनोति पुष्पानि याचते वसुधां बलिम्।
ब्रूते धर्मं गुरुः शिष्यं शास्ति धर्मं तथा भवेत्॥ ३६

मुष्णाति च शतं चैत्रं मथ्नाति सागरं सुधाम् ।
पचति तण्डुलानन्नं जयति च शतं हरिम् ॥ ३७

नयतिहरतिस्तद्वत् कर्षतिर्वहतिः पुनः ।
चत्वारस्ते समाख्याताः कथयामि निदर्शनम् ॥ ३८

नयति गां गृहं गोपो भारं वहति वाहकः ।
ग्राममजां हरत्येषा कर्षति युवतिं गृहम् ॥ ३९

अकर्मकधातुभिर्योगे देशः कालो भावो
गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् (वा) ।

अकर्मकेभवेत् कर्म देशः कालः पथः क्रिया ।
क्रियया लक्षितः कालः परिमाणं पथेन च ॥ ४०

कुरून् स्वपिति सा बाला क्रोशमास्ते मुनिर्वने ।
प्रार्थी गोदोहमास्ते स क्रोशमास्ते स आतुरः ॥ ४१

## ५४१ । गति बुद्धि-प्रत्यवसानार्थ-शब्दकर्माकर्मकानाम-णिकर्त्ता स णौ । १।४।५२

गतौ बुद्धौ स्थितो धातुर्भोजने शब्दने स्थितः ।
स्थितश्चाकर्मको धातुर्वाच्यान्तरं पुनः स्थितम् ॥ ४२

अणिजन्तदशायां य आसीत् कर्त्ता प्रयोगतः ।
स णिजन्तदशायां स्यात् कर्मेति कारकं पुनः ॥ ४३

"शत्रूनगमयत् स्वर्गं वेदार्थं स्वानवेदयत् ।
आशयच्चामृतं देवान् वेदमध्यापयद्विधिम् ॥
आसयत् सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ।"
प्रदर्शितमिदं पूर्व्वैर्मया पुनः प्रदर्श्यते ॥

नीवह्योर्न (वा)

नीवह्योः कर्मता न स्यादिति तु वार्त्तिकं पुनः ।
नाययति स भृत्येन भारमिति भवेदिह ॥ ४४

नियन्तृकर्त्तृकस्य वहेरनिषेधः (वा)

नियन्तृकर्त्तृकं यत्र वहनं सम्मतं भवेत् ।
निषेधस्तत्र न ग्राह्यस्तस्य निदर्शनं शृणु ॥ ४५

वाहा रथं वहन्तीति णिचः पूर्व्वं प्रदर्शितम् ।
वाहयति सुतो वाहान् रथमिति च कर्मता ॥ ४६

भक्षेरहिंसार्थस्य न (वा)।

न हिंसा चेत् न कर्म स्यात् निदर्शनं ततो भवेत् ।
भक्षयति भिषग् भक्तं वटुनेति न कर्मता ॥ ४७
न निषिद्धं पुनः कर्म यदि हिंसा प्रतीयते ।
भक्षयति बलीवर्द्दान् शस्यं क्षेत्र इति स्थितिः ॥ ४८

जल्पतिप्रभृतीनामुपसंख्यानम् (वा) ।

जल्पतिप्रभृतीनाञ्च वक्तव्या चात्र कर्मता ।
जल्पयति पिता पुत्रं धर्ममिति निदर्शनम् ॥ ४९

दृशेर्वा (वा) ।

पुनर्दृशेः प्रयोगे स्यात् कर्त्तुरिह च कर्मता ।
दर्शयति हरिर्भक्तान् भवेदिह निदर्शनम् ॥ ५०
बुद्धिस्तु ज्ञानसामान्यं तथा सूत्रात् प्रतीयते ।
विशेषे कर्मता नास्ति स्मारयति तया यथा ॥ ५१

शब्दायनेः (वा)

शब्दायतेः प्रयोगे न कर्मता सम्मता पुनः ।
शब्दाययति रामेन करणं स्याद् यथोचितम् ॥ ५२
धातौ हि निहितं कर्म ततो धातुरकर्मकः ।
अकर्मक इति प्राप्ता सूत्रेणेह च कर्मता ॥ ५३
वार्त्तिकं क्रियते तत्र कर्मता न भवेदिति ।
अन्यथा तु यथासूत्रं कर्मैव सुलभं भवेत् ॥ ५४

**५४२ । हृक्रोरन्यतरस्याम् । १।४।५३**

हृक्रोरणौ स्थितः कर्त्ता णौ वा कर्म पुनर्मतम् ।
भृत्येन वा तथा भृत्यं हारयति कटं हरिः ॥ ५५

अभिवादि-दृशोरात्मनेपदाद् वा (वा)

अभिवादि-दृशोः कर्म यदि स्यादात्मनेपदम् ।
भक्तेन वा तथा भक्तं दर्शयते देवं गुरुः ॥ ५६

**५४३ । अधि-शीङ्-स्थासां कर्म । १।४।४६**

शीङ्-स्थासामधिपूर्व्वात् स्यात् प्रयोगो वाक्यतो यदि ।
आधारः स्यात्तदा कर्म निदर्शनं यथाग्रतः ॥ ५७

अधिशेते हरिः शय्यां भवेदिह निदर्शनम् ।
अधितिष्ठति तद्वत् स्यादध्यास्ते च तथा पुनः ॥ ५८

**५४४ । अभिनिविशश्च । १।४।४७**

"अभि"-"नी" ति द्वयं यत्र विशतेः पूर्व्वतो भवेत् ।
आधारे विशतेस्तत्र कर्म भवति कारकम् ॥ ५९
अभिनिविशते ग्रामं दर्शितं काशिकाकृता ।
आधारः स्यादिह ग्राम आधारे कर्मता मता ॥ ६०
कल्पाख्योऽभिनिवेश इति कथं प्रयुज्यते ।
मण्डूकमुतिरित्यत्र न्यायः कश्चित् प्रवर्त्तते ॥ ६१
तेन "वान्यतरस्यां" स्यादिहापि विधृतं खलु ।
व्यवस्थितविभाषा च तत आश्रीयते पुनः ॥ ६२

**५४५ । उपान्वध्याङ्वसः । १।४।४८**

उपान्वध्याङ्वसस्तद्वदाधारस्य च कर्मता ।
स उपवसति ग्रामं भवेदिह निदर्शनम् ॥ ६३

**अभुक्त्यर्थस्य न (वा)**

अनशनं यदार्थः स्यान् न तदा स्यात्तथा पुनः ।
स उपवसति ग्रामे विनाहारं स तिष्ठति ॥ ६४

**५४६ । अन्तरान्तरेण युक्ते । २।३।४**

अन्तरेन तथान्तरा यदा तत्र प्रयुज्यते ।
तदा मता द्वितीया च निदर्शनं प्रदीयते ॥ ६५
अन्तरा त्वां च मां च स्यात् कमण्डलुरिति स्थितिः ।
ऊहनीयं पुनः शास्त्रान्निदर्शनं तथा परम् ॥ ६६

**५४७ । कर्मप्रवचनीयः । १।४।८३**

स्थिते वदति तदर्थं वदति न स्थितेऽपि यः ।
कर्मप्रवचनीयः स यथानुः स्याद् यथा परिः ॥ ६७
जपमनु निशम्येति शमिक्रिया स्थिता खलु ।
निशमनं तदर्थः स्यात्तमनुद्योतते पुनः ॥ ६८
"जपमनु" केवलं चेन् न "निशम्य" स्थितं यदा ।
तथापि च तमेवार्थमनुः प्राह यथायथम् ॥ ६९

क्रिया प्राप्ता क्रिया लुप्ता स्थितस्त्वर्थो यथा स्थितः ।
न म्रियते मृते चान्ये स्थाणुरनुर्व्विराजते ॥ ७०
स कर्म प्रोक्तवानादौ स कर्म प्रोक्तवान् परम् ।
कर्मप्रवचनीयः सः स्वार्थे संज्ञा प्रतिष्ठिता ॥ ७१
कर्मप्रवचनीयोऽयं तत् स्वरूपं प्रदर्शितम् ।
अन्यद् यत् स्वरूपं तस्य हरिणा तद् विशेषितम् ॥ ७२
"क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः ।
नापि क्रियान्तराक्षेपी सम्बन्धस्य तु भेदकः ॥"
"क्रियाया द्योतको नायं" यथानुभूयते सुखम् ।
"सम्बन्धस्य न वाचकः" कथितं तद् द्वितीयया ॥ ७३
"नापि क्रियान्तराक्षेपी" विप्ररिलिखतीति वत् ।
"सम्बन्धस्य तु भेदकः" हेतुभावः स्थितो मतः ॥ ७४

५४८ । अनुर्लक्षणे । १।८।८४

अनुश्च लक्षणे द्योत्ये तत्संज्ञको भवेदिह ।
अगस्त्यमन्वसिञ्चन् स्याद् हेतुभावे निदर्शनम् ॥ ७५
"लक्षणे"ति परे सूत्रं तेनानुश्च तथा भवेत् ।
तत् कथं सूत्रितं पूर्व्वं किमुद्दिश्य च सूत्रितम् ॥ ७६
"हेतौ" इति भवेत् सूत्रं तच्च परं प्रवर्त्तते ।
पूर्व्वात् परं बलीयः स्यात् "हेता"विति तदा लगेत् ॥ ७७
तृतीया न यथा हेतौ तथा सूत्रं विधीयते ।
कर्मप्रवचनीयः स्यात् सूत्रेणानुर्व्विशेषतः ॥ ७८

५४९ । कर्मप्रवचनीययुक्ते द्वितीया । २।३।८

कर्मप्रवचनीयैः स्याद् द्वितीयेति मतं पुनः ।
अगस्त्यमन्वसिञ्चन् स्यात् पुनरत्र निदर्शनम् ॥ ७९

५५० । तृतीयार्थे । १।४।८५

तृतीयार्थे तथा चानुस्तत्संज्ञको भवेत् पुनः ।
स्यादन्ववसिता सेना नदीमिति निदर्शनम् ॥ ८०

५५१ । हीने । १।४।८६

हीने द्योत्ये तथा चानुः पूर्व्ववत् लभते गतिम् ।
अनु हरिं सुरास्तत्र प्रदर्शितं निदर्शनम् ॥ ८१

५५२। उपोऽधिके च। १।४।८७

अधिके च तथा हीने भवेदुपश्चथैव च।
दर्शितमुपखार्य्यां च द्रोण इति निदर्शनम् ॥ ८२

५५३। लक्षणमित्थंभूताख्यानभागवीप्सासु प्रतिपर्य्यनवः। १।४।९०

लक्षणो विषयो यत्र प्रतिपर्य्यनवस्तथा।
विद्योतते नगं प्रति विद्युदिति निदर्शनम् ॥ ८३
इत्थम्भूतप्रकारश्चेत् प्रतिपर्य्यनवस्तथा।
भक्तो विष्णुं प्रतीति स्यात् पुनरिह निदर्शनम् ॥ ८४
भागेऽपि च तथैव स्यात् प्रतिपर्य्यनवो यदि।
लक्ष्मीर्हरिं प्रतीति स्याद् हरेर्भागो भवेद् यदा ॥ ८५
वीप्सायामपि तद्वत् स्याद् वृक्षं वृक्षं प्रतीति च।
निदर्शनं यथायोग्यं शेषाणां कल्पयेत् सुधीः ॥ ८६

५५४। अभिरभागे। १।४।९१

भागवर्ज्जं पुनः शेषे भवेदभिस्तथैव च।
भक्तो हरिमभीति स्यात् पुनरिह निदर्शनम् ॥ ८७
यदि भागो न तथा स्यान् न हि संज्ञा तथा भवेत्।
मामभि स्याद् यथा किञ्चित् तद्दीयतां यथा भवेत् ॥ ८८

५५५। अधिपरी अनर्थकौ। १।४।९३

अधिपरी तथाभूतौ न चेदर्थान्तरं पुनः।
अध्यागच्छति कस्मात् स्यादधिरनर्थको मतः ॥ ८९
गतिसंज्ञा न यथा स्यात् तथा सूत्रं प्रयोजनम्।
गतिर्नति निघातो न स्वरे भेदो निराकृतः ॥ ९०

५५६। सुः पूजायाम्। १।४।९५

सुः पूजायां तथैव स्यात् सु सिक्तं स्यात् पुनर्यथा।
क्षेपे न स्यात्तथाभावः सुषिक्तं किं तवात्र च ॥ ९१
उपसर्गे भवेत् षत्वं न चेत्तथा न चेत्तथा।
न षत्वमुपसर्गो न परे षत्वं तथा परे ॥ ९२

५५७। अतिरतिक्रमणे च। १।४।९५

तथैवातिश्च पूजायां तथातिक्रमणे पुनः।
अतिदेवानयं कृष्णः स्यादतिक्रमणे तथा ॥ ९३

**५५८। अपिः पदार्थसम्भावनान्ववसर्गगर्हा—**
**समुच्चयेषु। १।४।९६**

अर्थे पदस्य गम्यस्य तथा सम्भावने पुनः।
तथैवान्ववसर्गे च गर्हायाञ्च समुच्चये॥ ९४
कर्मप्रवचनीयः स्यादपिरिति मतं मुनेः।
निदर्शनं यथायोग्यं तत्र मया प्रदीयते॥ ९५
पदार्थे सर्पिषोऽपि स्यात् स्मृतमिह निदर्शनम्।
अपिश्च द्योतते विन्दुस्ततस्तत्संज्ञको भवेत्॥ ९६
वचनं "सर्पिषोऽपि स्यात्" संलापे वर्त्तते पुनः।
"अस्ति सर्पि"रिति प्रोक्ते "नास्ति सर्पि"र्वचो भवेत्॥ ९७
तत्रैव "सर्पिषोऽपि स्यात्" वचनं क्रियते पुनः।
तत्र संप्रत्ययो वक्तुर्विन्दुरपि स्थितो भवेत्॥ ९८
इह सम्भावनायां लिङ् दर्शिता कौमुदीकृता।
तस्याः सम्भावनायाश्च भवनं विषयो भवेत्॥ ९९
प्रथमं कर्त्तृदौर्ल्लभ्यं दौर्ल्लभ्यं भवने ततः।
द्योतयति यथापिः सस्तथाहं कथयामि ते॥ १००
अपिना द्योतितो विन्दुर्विन्दुना स्वल्पता भवेत्।
स्वल्पतया च दौर्ल्लभ्यं दौर्ल्लभ्यमपिना ततः॥ १०१
कर्त्ता "विन्दुः" क्रिया च "स्यात्" स्यादिति भवनं पुनः।
कर्त्ता चेद् दुर्ल्लभस्तत्र भवनं स्यात् सुदुर्ल्लभम्॥ १०२
तस्याः सम्भावनायाश्च विषये भवने ततः।
कर्त्तृदौर्ल्लभ्यमादाय दौर्ल्लभ्यं स ददात्यपिः॥ १०३

**५५९। कालाध्वनोरत्यन्तसंयोगे। २।३।५**

द्वितीयात्यन्तसंयोगे कालाध्वनोरिति स्थितिः।
संवत्सरमधीते स्यात् क्रोशं गिरिस्तथा पुनः॥ १०४

---

## तृतीया विभक्तिः

**५६०। स्वतन्त्रः कर्त्ता। १।४।५४**

क्रियासिद्धौ प्रधानो यो यो वा तथा प्रदर्शितः।
स कर्त्ता कीर्त्तितः शास्त्रे मुख्यो गौणो भवेच्च सः॥ १०५

मुख्ये पचति चैत्रः स्याच् चैत्रो मुख्यो विनिश्चितः ।
स्थाली पचति गौणो स्यात् प्राधान्यं वक्तुरिच्छया ॥ १०६

५६१ । साधकतमं करणम् । १।४।४२

क्रियासिद्धौ प्रकृष्टं यत् कथितमुपकारकम् ।
तदिह करणं ज्ञेयं पश्यति चक्षुषा यथा ॥ १०७

साधकतममित्यत्र मुनिना पठितं तमप् ।
प्रवृत्तिः स्याद् यथा मुख्ये तथा मुनि र्विचेष्टते ॥ १०८
न पठितं तमब् यत्र न यत्र नियमः क्वचित् ।
स्यान् मुख्ये स्यात् तथा गौणे युज्यते यत्र यद् यदा ॥ १०९

अस्ति शास्त्रे पुनर्न्यायो गौणमुख्यः स कीर्तितः ।
एतत् सूत्रं विना न्यायो न कुत्रापि प्रवर्तते ॥ ११०
ज्ञापकं स्यादिदं सूत्रं ज्ञापयति तथा मुनिः ।
गृहाण तमपा मुख्यं गौणं मुख्यं विना तमप् ॥ १११
साधकतममित्यत्र मुनिना विधृतं तमप् ।
मुख्यं ततो भवेद् ग्राह्यं मुख्ये हि "चक्षुषा" मतम् ॥ ११२
"आधार" इति सूत्रे तु न तमब् मुनिना धृतम् ।
मुख्यं गौणं द्वयं ग्राह्यमेकतरे न हि स्थितिः ॥ ११३
"गङ्गायां घोष" इत्यत्र गौणाधारः समर्थितः ।
न पठितं तमप् तत्र गौणोऽपि कारकं भवेत् ॥ ११४
यद्यपि स्यान् मितं वाच्यं तथापि भाषितं बहु ।
कस्यचिद् विस्तरे वाञ्छा स्वल्पे मिते च कस्यचित् ॥ ११५

५६२ । कर्त्तृकरणयोस्तृतीया । २।३।१८

कर्त्तृकरणयोस्तत्र तृतीया स्यात् सतां मते ।
देवदत्तेन भुक्तं स्यात् कुठारेण लुनाति च ॥ ११६

तृतीयाविधाने प्रकृत्यादीनामुपसंख्यानम् (वा)

तृतीया स्यान् प्रकृत्यादौ प्रकृत्या शीतलं पयः ।
प्रकृत्या चारु ज्ञेयश्च प्रायेण याज्ञिकस्तथा ॥ ११७
गार्ग्यो गोत्रेण तद्वत् स्याद् विषमेन च धावति ।
पञ्चकेन पशुः क्रीतः स्यादत्र च निदर्शनम् ॥ ११८

५६३। दिवः कर्म च। १।४।४३

यत् साधकतमं ज्ञातं करणं तत् प्रकीर्त्तितम्।
दिवश्चेत् तद् भवेत् कर्म करणं च "च"कारतः॥ ११९
अक्षान् दीव्यति विज्ञेयं काशिकायां निदर्शनम्।
अक्षैर्दीव्यति चापि स्यात् कारकं करणं तदा॥ १२०

५६४। अपवर्गे तृतीया। २।३।६

अपवर्गे तृतीया स्यात् कालाध्वनोरिति स्थितिः।
अपवर्गः क्रियाशेषे फलप्राप्तिरुदीरितः॥ १२१
व्याकरणमधीतं हि मासेन स्यान्निदर्शनम्।
व्याकरणमधीतं हि क्रोशेन स्यात् तथा पुनः॥ १२२

५६५। सहयुक्तेऽप्रधाने। २।३।१९

सहयुक्तेऽप्रधाने च तृतीया स्यात् सतां मते।
निदर्शनं च पुत्रेन सहागतः पिता यथा॥ १२३

५६६। येनाङ्गविकारः। २।३।२०

स्याद् येनाङ्गविकारो हि तृतीया सम्मता ततः।
अक्ष्णा काणो भवेदत्र तृतीयायां निदर्शनम्॥ १२४
"अङ्ग"श्च समुदाये स्यादंशो "येन" मतो भवेत्।
येनांशेन विकारः स्यात् तृतीया च ततो मता॥ १२५

५६७। इत्थंभूतलक्षणे। २।३।२१

प्राप्तः कञ्चित्प्रकारं स्यादित्थंभूतमिति स्थितिः।
तस्य तु लक्षणं यत् स्यात्तदित्थंभूतलक्षणम्॥ १२६
तृतीया च ततो ज्ञेया जटाभिस्तापसो यथा।
उपाध्यायस्तथा छात्रैः काकंगृहं निदर्शनम्॥ १२७

५६८। संज्ञोऽन्यतरस्यां कर्मणि। २।३।२२

संज्ञश्चान्यतरस्यां स्यात्तृतीया तु सतां मते।
यथाप्राप्ता द्वितीया स्यादुभयत्र च कर्मणि॥ १२८
पित्रा वा पितरं बालः संजानीते निदर्शनम्।
मात्रा वा मातरं बालं संजानीते तथापरम्॥ १२९

५६९। हेतौ। २।३।२३

फलस्य साधने हेतौ तृतीया कीर्त्तिता बुधैः।
दर्शितं कन्यया शोको विद्यया च यशस्तथा॥ १३०
हेतुरयं भवेद् वा कः करणं किं पुनर्भवेत्।
कः पुनरनयोर्भेदः कथयामि सविस्तरम्॥ १३१
भवति विषयो हेतो द्रव्यं गुणस्तथा क्रिया।
विषयः स्यात् त्रिधा हेतौ यौवा को वा भवेदिह॥ १३२
कदाचिद् विषयो द्रव्यं दण्डेनेह यथा घटः।
विषयः स्याद् गुणो वापि धनेन हि कुलं भुवि॥ १३
विषयः स्यात् क्रिया चापि पुण्येन दर्शनं हरेः।
द्रव्यं गुणः क्रिया चेति दर्शितो विषयस्त्रिधा॥ १३३
व्यापारो नियतो नास्ति कुचिदस्ति क्वचिन्न च।
व्यापारः स स्थितश्चाद्ये न स्थितः परयोर्द्वयोः॥ १३४
करणे विषयस्तत्र क्रिया चैका हि केवलम्।
व्यापारो नियतश्चापि न भवेदन्यथा क्वचित्॥ १३५
कुठारेण छिनत्तीति छिदिक्रिया फलं भवेत्।
उन्नमनादिकं तत्र व्यापारश्च स्थितः पुनः॥ १३६
यथा तथा भवेद्वापि न च सूक्ष्मे रुचिर्मम।
जानामि यदहं स्थूलं शृणु भ्रातर्ब्रवीमि तत्॥ १३७
व्यापारवद्द यदा प्रोक्तं कारकं करणं कुरु।
व्यापारेण यदा हीनं तदा हेतुं गृहाण तम्॥ १३८
अन्वयः क्रियया यत्र तत्रैव कारकं भवेत्।
अन्वयः क्रियया चेन्न हेतोरवसरस्तदा॥ १४०

चतुर्थी विभक्तिः

५७०। कर्मणा यमभिप्रैति स सम्प्रदानम्। १।४।३२

कर्मणा यमभिप्रैति सम्प्रदानं भवेद्धि तत्।
विप्राय गां ददातीति भवेदिह निदर्शनम्॥ १४१
संज्ञायां "दा"-प्रवेशाच्च केचित् दानं प्रचक्षते।
यत्र स्याद् ददातेः कर्म तत्रैव कारकं भवेत्॥ १४२
केचिदाहुर्न तन् न्याय्यं न दानं केवलं मतम्।
क्रियामात्रमिह ग्राह्यं तेन लक्ष्यं हि सिध्यति॥ १४३

ईशयति सुतं माता चन्द्रामिति यदा भवेत् ।
तदापि कारकं सिध्येत् सम्प्रदानं च कारकम् ॥ १४४
इहोपलक्षणं दानं क्रियामात्रं हि लक्षितम् ।
"कर्मणे"ति मुनिः प्राह न प्राह "दान"कर्मणा ॥ १४५

५७१ । चतुर्थी सम्प्रदाने । २।३।१३

चतुर्थी सम्प्रदाने स्याद् गुरवे गां ददाति सः ।
स्पृहयते च पुष्पेभ्यो देवदत्ताय रोचते ॥ १४६

वार्त्तिकम्

१) चतुर्थीविधाने तादर्थ्ये उपसंख्यानम् ।
२) क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या ।
३) उत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्या ।
४) हितयोगे चतुर्थी वक्तव्या ।

क्लृपि सम्पद्यमाने च तादर्थ्ये च तथा हिते ।
उत्पातज्ञापिते चैव चतुर्थी वार्त्तिकाद्भवेत् ॥ १४७
यूपाय दारु तादर्थ्ये गोभ्यो हितं हिते युते ।
"वाताय कपिला विद्यु"दुत्पातज्ञापिते तथा ॥ १४८
स्वर्गाय कल्पते धर्मो विद्या सुखाय कल्पते ।
क्लृपि सम्पद्यमाने च निदर्शनद्वयं भवेत् ॥ १४९

५७२ । रुच्यर्थानां प्रीयमाणः । १।४।३३

रुच्यर्थानां प्रयोगे स्यात् प्रीयमाणस्तथा पुनः ।
हरये रोचते भक्तिर्भवेदिह निदर्शनम् ॥ १५०
प्रीयमाणो न चेत् न स्यात् सम्प्रदानमिति स्थितिः ।
मोदको रोचते तस्मै पथीति न तथा पुनः ॥ १५१

५७३ । श्लाघ-ह्नुङ्-स्था-शपां ज्ञीप्स्यमानः । १।४।३४

एभिर्व्बोधयितुमिष्टं सम्प्रदानं प्रकीर्त्तितम् ।
कृष्णाय श्लाघते गोपी स्मरादिति निदर्शनम् ॥ १५२
ह्नुते च तिष्ठते तद्वत् शपते च तथा भवेत् ।
ज्ञीप्स्यमानो न चेन्न स्यात् कृष्णस्य श्लाघते पथि ॥ १५३

५७४ । धारेरुत्तमर्णः । १।४।३५

धारयतेः प्रयोगे स्यादुत्तमर्णस्तथा पुनः ।
धारयति हरिर्मोक्षं भक्तायेति निदर्शनम् ॥ १५४

उत्तमर्णो न चेल्लक्ष्यः सम्प्रदानं भवेन्नहि ।
धारयति शतं ग्रामे न स्याद् ग्रामे तथा पुनः ॥ १५५

५७५ । स्पृहेरीप्सितः । १।४।३६

स्पृहयतेः प्रयोगे स्यादीप्सितोऽपि तथा पुनः ।
स्पृहयति फलेभ्यः स्यान्निदर्शनं स्पृहेरिह ॥ १५६
उत्कर्मीप्सितमात्रं चेदियं संज्ञा प्रवर्त्तते ।
प्रकर्षश्चेद् भवेद् युक्तः कर्मैव कारकं भवेत् ॥ १५७
स्पृहयति फलं रामः प्रकर्षे दर्शितं पुनः ।
तदीप्सिततमं कर्त्तुः "कर्म"सूत्रं ततो लगेत् ॥ १५८

५७६ । क्रुध-द्रुहेर्ष्यासूयार्थानां यं प्रति कोपः । १।४।३७

क्रोधे द्रोहे तथेर्ष्यायामसूयने तथा पुनः ।
धातुश्चेत् वर्त्तते कश्चित् कोपपात्रं भवेत्तथा ॥ १५९
क्रुध्यते हरये रामो भवेदिह निदर्शनम् ।
द्रुह्यति हरये राम ईर्ष्यति चाप्यसूयति ॥ १६०
सम्प्रदानं न पुनः स्यान्न चेत् कोपः प्रतीयते ।
भार्य्यामीर्ष्यति रामः स्यान्न कोपो गम्यते तथा ॥ १६१
पर एनां न पश्येत् स्यादेवं हि मनसो गतिः ।
न कोपविषयो भार्य्या कोपस्य विषयः परः ॥ १६२
क्रोधोऽमर्षः क्षतिर्द्रोह ईर्ष्या स्यादसहिष्णुता ।
गुणे दोषसमारोपः स्यादसूया सतां मते ॥ १६३
सर्व्वं कोपभवा ज्ञेया सर्व्वे कोपसमुत्थिताः ।
कोपस्य ग्रहणात् सूत्रे सर्व्वेषां ग्रहणं भवेत् ॥ १६४

५७७ । क्रुधद्रुहोरुपसृष्टयोः कर्म । १।४।३८

सम्प्रदाने स्थिते तत्र विशेषः कथ्यते पुनः ।
उपसर्गयुतस्यास्ति क्रुधद्रुहोर्विशेषता ॥ १६५
सम्प्रदानं न तदा स्यात् स्याच्च कर्म तथा सति ।
अभिक्रुध्यति भृत्याय कर्मणि स्यान्निदर्शनम् ॥ १६६

५७८ । राधीक्ष्योर्यस्य विप्रश्नः । १।४।३९

सम्प्रदानं च राधीक्ष्यो विप्रश्नो गम्यते यदि ।
कृष्णाय राध्यतीत्यत्र शुभाशुभं निरीक्षते ॥ १६७

**५७९ । प्रत्याङ्भ्यां श्रुवः पूर्व्वस्य कर्त्ता । १।४।४०**

पूर्व्वादेव स्थिता याञ्चा प्रतिज्ञा च परं स्थिता ।
शृणोति प्रतिपूर्व्वः स्यादाङ्पूर्व्वश्च तथा पुनः ॥ १६८
याञ्चाकर्त्ता भवेदत्र सम्प्रदानमिति स्थितिः ।
प्रतिशृणोति विप्राय वस्त्रमिति निदर्शनम् ॥ १६९

**५८० । अनुप्रतिगृणश्च । १।४।४१**

"पूर्व्वस्ये"ति स्थितं पूर्व्वात् "कर्त्त"ति च तथा स्थितम् ।
पूर्व्वाद्धि स्थिते व्यापारे पूर्व्वकर्त्ता च पूर्व्ववत् ॥ १७०
अनुगृणाति होत्रे स आदौ होता हि शंशति ।
प्रोत्साहयति पश्चात्तमध्वर्य्युरिति गम्यते ॥ १७१

**५८१ । परिक्रयणे सम्प्रदानमन्यतरस्याम् । १।४।४४**

यत् साधकतमं तत्र तत् करणं भवेदिह ।
सम्प्रदानं विभाषा तद् यदि क्रयः पुनर्मतः ॥ १७२
भृत्या नियतकालं यत् स्वीकरणं भवेदिह ।
तत् परिक्रयणं ज्ञेयं नहि चात्यन्तिकः क्रयः ॥ १७३
परिक्रीतः शतेनेति शताय वा निदर्शनम् ।
वेतनेन कियत् कालं नियोजित इति स्थितम् ॥ १७४

**५८२ । क्रियार्थोपपदस्य च कर्मणि स्थानिनः । २।३।१४**

प्रयुज्यते न धातुश्चेत्तदर्थश्चेत् प्रतीयते ।
स स्थानी कथितः शास्त्रे तमाश्रित्य विधीयते ॥ १७५
उपपदं क्रिया यत्र क्रियार्था स्यात् प्रयोगतः ।
कर्मणि स्थानिनस्तत्र चतुर्थी स्यादिति स्थितिः ॥ १७६
फलेभ्यो व्रजति स्याच्च पुनरिह निदर्शनम ।
"आहर्त्तु"मिति युक्तं न तथापि तत् प्रतीयते ॥ १७७
आहृञ्धातुर्भवेत् स्थानी भवेत् कर्म फलानि च ।
"आहर्त्तु"न्तु क्रिया तत्र तदर्था व्रजतिक्रिया ॥ १७८
क्रिया स्थिता क्रियार्था च स्थानी धातुस्तथा स्थितः ।
कर्मण्यतश्चतुर्थी स्यात् फलेभ्यः स्यात् तथा पदम् ॥ १७९

**५८३ । तुमर्थाच्च भाववचनात् । २।३।१५**

स्याद्भाववचनात्तत्र तुमर्थाच्च तथा पुनः ।
पाकाय व्रजति स्याच्च व्रजति भूतये तथा ॥ १८०

५८४। नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च। २।३।१६

नमःस्वस्ती तथा स्वाहा स्वधा चालं वषट् पुनः।
एभिर्योगे चतुर्थी स्यात् पाणिनये नमो यथा॥ १८१
तथा स्वस्ति प्रजाभ्यः स्यात् स्वाहाग्नये तथा भवेत्।
स्यात् पितृभ्यः स्वधा तद्वत् स्यादिन्द्राय वषट् तथा॥ १८२
स्वस्ति गोभ्यस्तथा भूयात् आशीरत्र विवक्षिता।
अलं मल्लो हि मल्लाय स्यादलमि निदर्शनम्॥ १८३

५८५। मन्यकर्मण्यनादरे विभाषाऽप्राणिषु। २।३।१७

अनादरो मतो यत्र कर्मणि मन्यतेस्तदा।
चतुर्थी विभाषा ज्ञेया प्राणिषु न तथा भवेत्॥ १८४
न त्वा बुसाय मन्ये स्यात् तृणं मन्ये विभाषया।
न त्वा बुसाय मन्ये स्यात् बुसं मन्ये तथैव च॥ १८५
मन्धातोः स्याद् दिवादीये न तथा स्याद् गणान्तरे।
अनादरे चतुर्थी स्यान् नार्थभेदे तथा पुनः॥ १८६
प्राणिषु न चतुर्थी स्यात् शृगालं मन्यते यथा।
यदेतत्प्राणिष्विति तदनावादिष्विति वक्तव्यम् (वा)
नावादिषु चतुर्थी न नावं मन्ये निदर्शनम्॥ १८७

५८६। गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि। २।३।१२

गत्यर्थानां प्रचेष्टायामनध्वनि च कर्मणि।
द्वितीया सम्मता ज्ञेया चतुर्थी च तथा पुनः॥ १८८
स ग्रामं गच्छति स्याच्च ग्रामाय च निदर्शनम्।
अध्वन्नर्थो भवेद् ग्राह्यो यथा मार्गं स गच्छति॥ १८९
चतुर्थी तु तदा वाच्या यदोत्पथात् गतिः पथि।
पथे स गच्छतीत्यत्र निदर्शनं प्रदर्शितम्॥ १९०

न चतुर्थी न चेष्टा चेद् द्वितीया स्याच्च कर्मणि।
जातिस्मरो गृहं पूर्व्वं गच्छति मनसा मुदम्॥ १९१
न तु देहे परिस्पन्दः संयोगो मनसा सह।
एवन्तु प्रायशो दृष्टं जातिस्मरे सदा भुवि॥ १९२

## पञ्चमी विभक्तिः

५८७। ध्रुवमपाये अपादानम्। १।४।२४

अपाये यद् ध्रुवं स्यात्तदपादानं प्रकीर्त्तितम्।
ध्रुवमवधिभूतं स्यात् स्थिरं तदस्थिरं पुनः॥ १९३
"ध्रु" गतौ स्यात् तथा स्थैर्य्ये ततो ध्रुवं पदं भवेत्।
धातुना यद् द्वयं प्रोक्तं पदेऽपि तद् द्वयं स्थितम्॥ १९४
आगच्छति हरिर्ग्रामात् स्थिरे भवेन्निदर्शनम्।
धावतोऽश्वाद् हरिर्भ्रष्टः स्यादस्थिरे तथा पुनः॥ १९५

निर्दिष्टविषयं तत् स्यादुपात्तविषयं पुनः।
अपेक्षितक्रियं तत् स्यादपादानं त्रिधा स्थितम्॥ १९६
क्रिया स्थिता भवेदादौ भवेदूह्या क्रिया परे।
क्रिया शून्या भवेच्च् शेषे त्रिषु त्रिलक्षणं स्थितम्॥ १९७
पतति पर्व्वतात् तत्र पततीति क्रिया स्थिता।
कुसूलात् पचतीत्यादौ "समादाये"ति गम्यते॥ १९८
"कुतो भवान्" "मठात्" स्यान्नेदिह क्रिया न विद्यते।
कथितं तु मया स्थूलं सूक्ष्मं मया न दर्शितम्॥ १९९
स्थितो ग्रन्थः स्थिता बुद्धिः स्थाने स्थितं समाहर।
हरिणा कथितं पूर्व्वं परो हरिर्विजृम्भते॥ २००

५८८। अपादाने पञ्चमी। २।३।२८

पञ्चमी स्यादपादाने पर्व्वतादवरोहति।
स्याद्बिभेति वृकेभ्यश्च स्यान्न पतितस्तथा॥ २०१

### वार्त्तिकम्

१) पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम्।
२) अधिकरणे चोपसंख्यानम्।
३) प्रश्नाख्यानयोश्च पञ्चमी वक्तव्या।
४) यतश्चाध्वकालनिर्माणं ततः पञ्चमी वक्तव्या।
५) तद्युक्तात् काले सप्तमी च वक्तव्या।
६) अध्वनः प्रथमा सप्तमी च वक्तव्या।

१) ल्यब्लोपे कर्मणि स्यात् पञ्चमीति तु वार्त्तिकम् ।
प्रासादात् प्रेक्षते ज्ञेयं निदर्शनं पुनस्ततः ॥ २०२
२) स्यादधिकरणे चापि ल्यब्लोपे पञ्चमी तथा ।
आसनात् प्रेक्षते ज्ञेयं शयनात् प्रेक्षते पुन ॥ २०३
३) यत्र प्रश्नस्तथाख्यानं मता तत्र हि पञ्चमी ।
कुतो भवानिति प्रश्ने हरिणाया भवेदिति ॥ २०४
४) यतोऽध्वा च यतः कालो मीयते पञ्चमी ततः ।
हरिणाया बटाखोला योजनैकं भवेद् यथा ॥ २०५
५) आषाढात् श्रावणे मासे काले भवेन्निदर्शनम् ।
अध्वनि च तथा काले निदर्शनं प्रदर्शितम् ॥ २०६
६) भवेत् परिमिते काले सप्तमीति मतं सताम् ।
आषाढात् श्रावणे मासे यथापूर्व्वं निदर्शनम् ॥ २०७

५८९ । भीत्रार्थानां भयहेतुः । १।४।२५

भये त्राणे यदा हेतुः क्रियया स्यात् प्रदर्शितः ।
तदा हेतुरपादानं भवेदिह सतां मते ॥ २०८
व्याघ्राद् जना बिभेति स्याद् व्याघ्रादुद्विजते जनः ।
चौरात् त्रायते तद्वत् चौरात् पुनश्च रक्षति ॥ २०९

इह कथमपायः स्यादपादानं कथं स्थितम् ।
इति पृच्छा वरीवर्त्ति तदुत्तरं गृहाण मे ॥ २१०
प्राप्य बुद्ध्या निवृत्तश्चेदपायः सुस्थितः खलु ।
अपाये सुस्थिते स्थेयमपादानं तदाश्रयम् ॥ २११
व्याघ्राद् जनो बिभेतीति भवेत् पुन र्निदर्शनम् ।
व्याघ्रो वा मां निहन्तीति प्राप्य बुद्ध्या निवर्त्तते ॥ २१२

५९० । पराजेरसोढः । १।४।२६

जयतेः स्यात् परापूर्व्वात् प्रयोगो वाक्यतो यदि ।
सोढुं शक्यं न स्याद् यत् तदपादानं प्रकीर्त्तितम् ॥ २१३
म पराजयते पाठाद् भवेदिह निदर्शनम् ।
पराजयते शत्रून् स्यान् न चेदसहनं मतम् ॥ २१४

५९१। वारणार्थानामीप्सितः। १।४।२७

योगे च वारणार्थानामीप्सितः स्यात्तथा पुनः।
वारयति यवेभ्यो गां भवतीह निदर्शनम् ॥ २१५
ईप्सितं स्यादपादानमनीप्सिते तथा न च।
वारयति यवेभ्यो गाः क्षेत्रे इति न पञ्चमी ॥ २१६

५९२। अन्तर्द्धौ येनादर्शनमिच्छति। १।४।२८

अन्तर्द्धानं स्फुटं यत्र नेच्छति दर्शनं पुनः।
येन न दर्शनं काम्यमपादानं मतं हि तत् ॥ २१७
मातुर्निलीयते कृष्णो भवेदिह निदर्शनम्।
न मात्रा दर्शनं कृष्णः काम्यतीति पलायते ॥ २१८
अन्तर्द्धानं न चेत्तत्र न कारकं प्रयुज्यते।
दिदृक्षते न चौरात् स नान्तर्द्धानं न पञ्चमी ॥ २१९
नेच्छति दर्शनं यत्र दर्शनं स्यात् तथापि चेत्।
तत्रापि स्यादपादानं वृद्धात् नारी निलीयते ॥ २२०

५९३। आख्यातोपयोगे च। १।४।२९

स्यादाख्यातोपयोगेऽपि कारकं च तथाविधम्।
यदि स्यान्नियमः कश्चिदुपाध्यायादधीतवान् ॥ २२१
नियमो यदि कश्चिन्न नापादानं तदा भवेत्।
शृणोति स नटस्येति न नियमो न पञ्चमी ॥ २२२

५९४। जनिकर्त्तुः प्रकृतिः। १।४।३०

जायमानस्य हेतुः स्यादपादानमिति स्थितिः।
असतो जनने सूत्रभूतस्य समुद्भवे ॥ २२३
प्रजायते पितुः पुत्रो भवेदिह निदर्शनम्।
जायन्ते ब्रह्मणो जीवा दर्शितं च तथा पुनः ॥ २२४

५९५। भुवः प्रभवः। १।४।३१

भुवस्तु प्रभवस्तद्वदपादानं भवेदिह।
सिद्धस्य प्रथमे ज्ञाने सूत्रमिदं प्रवर्त्तते ॥ २२५
अत्र हिमवतो गङ्गा प्रभवति निदर्शनम्।
स्थिता गङ्गा परं ज्ञाता हिमालये प्रकाशते ॥ २२६

५९६। अन्यारादितरर्त्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते। २।३।२९

अन्यारादितरर्त्ते दिगाजाहितश्च पञ्चमी।
अञ्चूत्तरपदात् तद्वत् पञ्चमीति मतं सताम्॥ २२७
एतदर्थात् पदाच्चापि पञ्चमी स्यादिति स्थितिः।
अन्यो भिन्नो हरे र्ज्ञेयं पुनरिह निदर्शनम्॥ २२८
स्यादारादितरो रामादृते रामात्तथा भवेत्।
पूर्व्वो ग्रामाच्च दिक्शब्दादाहि ग्रामाच्च दक्षिणा॥ २२९
स्याद्दक्षिणा पुनर्ग्रामादाहिना च निदर्शनम्।
अञ्चूत्तरपदाज् ज्ञेयं प्राग् ग्रामाद् हि तथा पुनः॥ २३०

५९७। अपपरी वर्जने। १।४।८८

अपपरी तथा स्यातां वर्ज्जनं चेत् प्रतीयते।
अपहरेश्च संसारः परिहरेस्तथा भवेत्॥ २३१

५९८। आङ् मर्य्यादावचने। १।४।८९

मर्य्यादा चेद् भवेदाङ् च तत्संज्ञक इति स्थितिः।
आकुमारं यशोलोके पाणिनेः स्यान्निदर्शनम्॥ २३२
मर्य्यादाग्रहणाच्चात्र पुनरभिविधिर्मतः।
भवेद् आ सकलाद् ब्रह्म पुनरिह निदर्शनम्॥ २३३

५९९। पञ्चम्यपाङ्परिभिः। २।३।१०

कर्मप्रवचनीयाश्चेदपाङ्परि तथा पुनः।
पञ्चमी स्यात् सतां तत्र परि च वर्ज्जने धृतम्॥ २३४
वृष्टोऽपहरिणायाः स्यादपयोगे निदर्शनम्।
वृष्ट आ हरिणायाः स्यादाङ्योगे च तथा पुनः॥ २३५

६००। प्रतिः प्रतिनिधिप्रतिदानयोः। १।४।९२

प्रतिः प्रतिनिधौ तद्वत् प्रतिदाने तथा प्रतिः।
प्रद्युम्नं प्रति कृष्णः स्यात् पुनरिह निदर्शनम्॥ २३६

६०१। प्रतिनिधिप्रतिदाने च यस्मात्। २।३।११

प्रतिनिधिर्यतो यस्मात् प्रतिदानं च सम्मतम्।
कर्मप्रवचनीये स्यात् तत्र च पञ्चमी सदा॥ २३७
कृष्णं प्रति हि प्रद्युम्नो भवेदिह निदर्शनम्।
तिलेभ्यः प्रति माषान् स यच्छति स्यात् तथा परम्॥ २३८

६०२। अकर्त्तर्य्यृणे पञ्चमी। २।३।२४

पञ्चमी स्यादृणे हेतौ कर्त्तरि न तथा भवेत्।

शताद्‌ बद्धः सहस्राद्‌ वा निदर्शनं भवेदिह॥ २३९

शतेन बन्धितो यत्र तत्र कर्त्ता प्रयोजकः।

ततस्तत्र तृतीयैव न पञ्चमी विधीयते॥ २४०

६०३। विभाषा गुणेऽस्त्रियाम्। २।३।२५

गुणेऽस्त्रियां विभाषा स्यात् पञ्चमीति मतं सताम्।

जाड्याद्बद्धो भवेदत्र जाड्येन वा निदर्शनम्॥ २४१

न पञ्चमी भवेत् स्त्रियां बुद्ध्या मुक्तो यथा भवेत्।

सर्व्वत्रैव मता हेतौ न विधिः स्यादहेतुके॥ २४२

६०४। पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्। २।३।३२

पृथग् विना तथा नाना भवेदेषां विभाषया।

तृतीयेति मनीषीनां पञ्चमी च तथा भवेत्॥ २४३

पृथग् विना तथा नाना रामेन स्यान्निदर्शनम्।

रामाद्रामं तथा स्याच्च योगविभाषया पुनः॥ २४४

६०५। करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य। २।३।३३

स्तोकमल्पं तथा कृच्छ्रं कतिपयं तथा पुनः।

एभ्यः पुनर्व्विभाषातः तृतीया करणे मता॥ २४५

पक्षे स्यात् पञ्चमी तेभ्य निदर्शनं च दीयते।

स्तोकेन वा तथा स्तोकात् मुक्त इति निदर्शनम्॥ २४६

अल्पात् मुक्तस्तथाल्पेन निदर्शनं तथा परम्।

कृच्छ्रेन वा तथा कृच्छ्रात् मुक्तः स्याच्च परं पुनः॥ २४७

मुक्तः कतिपयाज् ज्ञेयं मुक्तः कतिपयेन च।

असत्त्ववचने चैतत् न सत्त्वे तु तथा भवेत्॥ २४८

अल्पेन मधुना मत्त इति सत्त्वे निदर्शनम्।

नित्या सत्त्वे तृतीयेति न पञ्चमी विभाषया॥ २४९

क्रियाविशेषणं यत्र न तत्र स्यात्तु कर्मणि।

स्तोकं मुञ्चति तत्र स्यात् स्तोकं क्रियाविशेषणम्॥ २५०

६०६। दूरान्तिकार्थेभ्यो द्वितीया च। २।३।३५

भवेद्दूरान्तिकार्थाच्च द्वितीयाऽपि तथा पुनः।

दूरं दूरेन दूराद्वा ग्रामाद् भवेन्निदर्शनम्॥ २५१

स्यात् प्रातिपदिकार्थञ्च वचनं सम्मतं पुनः ।
सत्त्वशब्दाद् विभक्तिस्तु यथायथं भविष्यति ॥ २५२
दूरः पन्थाः प्रयोगः स्याद् दूराय च पथे तथा ।
स्याद् दूरस्य पथः स्वञ्च स्वत्वे पुनर्निदर्शनम् ॥ २५३

---

षष्ठी विभक्तिः

६०७ । षष्ठी शेषे । २।३।५०

यः प्रातिपदिकार्थः स्यात् कारकार्थो भवेच्च यः ।
तयोर्भिन्नः स्व-स्वाम्यादिभावः शेषः प्रकीर्त्तितः ॥ २५४
शेषे षष्ठी विभक्तिः स्यात् पितुः पुत्रो निदर्शनम् ।
सम्बन्धे स्याद् विवक्षातः सतां गतं तथा भवेत् ॥ २५५

६०८ । षष्ठी हेतुप्रयोगे । २।३।२६

षष्ठी हेतुप्रयोगे स्याद् निदर्शनं यथा परम् ।
वसत्यन्नस्य हेतोः स हेतुशब्दः प्रयुज्यते ॥ २५६

६०९ । सर्व्वनाम्नस्तृतीया च । २।३।२७

सर्व्वनाम्नस्तृतीया च यदि हेतुः प्रयुज्यते ।
द्योत्ये चापि तृतीया स्यात् षष्ठी वापि भवेत् खलु ॥ २५७
वसति केन वा कस्य हेतोरिति निदर्शनम् ।
वसति कस्य हेतुः स्याद् येन च हेतुना तथा ॥ २५८

वार्त्तिकम्

१) निमित्तकारणहेतुषु सर्व्वासां प्रायोदर्शनम् ।
निमित्तकारणे हेतौ सर्व्वासां प्रायदर्शनम् ।
किं केन कस्य कस्मै वा कस्मात् कस्मिन् भवेत् खलु ॥ २५९
वसति किं निमित्तं स्याद्द्वितीयायां निदर्शनम् ।
तृतीयायां भवेत् केन निमित्तेन तथा पुनः ॥ २६०
तथा कस्मै निमित्ताय चतुर्थ्यां स्यान्निदर्शनम् ।
भवेत् कस्मान्निमित्ताच्च पञ्चम्यान्तु तथा पुनः ॥ २६१
स्यान्निमित्तस्य कस्य वा षष्ठ्यां तत्र निदर्शनम् ।
स्यात् कस्मिन् निमित्ते पुनर्यत्र तु सप्तमी मता ॥ २६२
वसतीति पदं योज्यं सर्व्वत्रैव यथायथम् ।
प्रथमावर्ज्जिताः सर्व्वाः षड़ेव स्युर्विभक्तयः ॥ २६३

६१०। षष्ठ्यतसर्थप्रत्ययेन। २।३।३०
षष्ठी स्यादतसर्थाच्च निदर्शनं भवेदिह।
ग्रामस्योत्तरतः पन्था सरस्तस्य च पूर्वतः॥ २६४

६११। एनपा द्वितीया। २।३।३१
एनपा स्याद्द्वितीया च षष्ठ्यपि च ततो भवेत्।
ग्रामस्य दक्षिणेन स्यात् ग्रामं वेति निदर्शनम्॥ २६५

६१२। दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्। २।३।३४
षष्ठी दूरान्तिकार्थैः स्यात् पञ्चमी च विभाषया।
ग्रामाद् ग्रामस्य वा दूरं स्यादन्तिकं निदर्शनम्॥ २६६

६१३। ज्ञोऽविदर्थस्य करणे। २।३।५१
जानाति स्यान् न चेदर्थः करणं स्याच्च कारकम्।
करणे तत्र षष्ठी स्याद् जानीते मधुनो यथा॥ २६७
मधुना करणेनेह प्रवर्त्तते इति स्मृतम्।
जानातिना प्रवृत्तिः स्यात् पुनरिह विवक्षिता॥ २६८
मिथ्याज्ञानं तदर्थो वा तथाज्ञानं पुनर्मतम्।
मिथ्याज्ञानात् तथाज्ञानात् जन इह प्रवर्त्तते॥ २६९

६१४। अधीगर्थदयेशां कर्मणि। २।३।५२
अधीगर्थदयेशात् स्यात् पुनः षष्ठी च कर्मणि।
यदि तत्र विवक्षा स्याद् यदि शेषः प्रकीर्त्तितः॥ २७०
मातुरध्येति बालः स्यादधीगर्थे निदर्शनम्।
सर्पिषो दयते स्याच्च स्यादीष्टे च तथा पुनः॥ २७१
न कर्म चेन् न षष्ठी स्यान् मातुर्गुणैः स्मरेद् यथा।
न शेषश्चेन्न षष्ठी च स्मरति मातरं यथा॥ २७२

६१५। कृञः प्रतियत्ने। २।३।५३
प्रतियत्नो गुणाधानं शेषे षष्ठी च कर्मणि।
स्यादुपकुरुते दासः पत्रस्येति निदर्शनम्॥ २७३

६१६। रुजार्थानां भाववचनानामज्वरेः। २।३।५४
यदि रुजा भवेदर्थो "ज्वरि"-धातुर्न युज्यते।
स्याद्भावकर्त्तृकानाञ्च रुजार्थानां तथा पुनः॥ २७४

कर्मणि कारके शेषे षष्ठीह स्याद् विवक्षातः ।
चौरस्य रुजति रोगो भवेदिह निदर्शनम् ॥ २७५

अज्वरि-सन्ताप् योरिति वक्तव्यम् (वा)

सन्तापेरपि योगाच्च षष्ठीह बाधिता भवेत् ।
अज्वरिणा तथा चेह सन्तापिश्च स्मृतो भवेत् ॥ २७६

६१७ । आशिषि नाथः । २।३।५५

कर्मणि स्यात्तथा शेषे आशीरर्थे च नाथतेः ।
सर्पिषो नाथनं स्याच्च पुनरिह निदर्शनम् ॥ २७७
आशीरर्थो न चेत्तत्र न स्यात् षष्ठी तदा पुनः ।
नाथति स नृपं भूमिं याचते इति गम्यते ॥ २७८

६१८ । जासि-निप्रहन-नाट-क्राथ-पिषां हिंसायाम् । २।३।५६

जासेर्निप्रहनश्चापि नाटः क्राथस्तथा पिषः ।
कर्मणि हिंसया षष्ठी यदि शेषो विवक्षितः ॥ २७९
निप्रौ तत्र विपर्य्यस्तौ व्यस्तौ वा संहतौ मतौ ।
प्रणिहन् निप्रहन् स्याच्च प्रहन् निहन् तथा भवेत् ॥ २८०
उज्जासयति चौरस्य चौरस्य प्रणिहन्ति च ।
निप्रहन्ति प्रहन्त्यपि निहन्त्यपि तथा पुनः ॥ २८१
उन्नाटयति चौरस्य क्राथयति तथैव च ।
वृषलस्य पिनष्टि स्याद्द यथास्मृतं निदर्शनम् ॥ २८२
न चेद्धिंसा न षष्ठी स्याद्द भवेत् कर्म यथाश्रुतम् ।
पिनष्टि पुरुषो धाना अहिंसायां हि कर्मता ॥ २८३

६१९ । व्यवहृपणयोः समर्थयोः । २।३।५७

व्यवहृ वर्त्तते द्यूते क्रयविक्रययोः पुनः ।
तत्र कर्मणि षष्ठी स्याद् यदि शेषो विवक्षितः ॥ २८४
व्यवहारः शतस्येति द्यूतक्रीड़ा प्रतीयते ।
प्रतीयते विकल्पेन वाणिज्यकरणं पुनः ॥ २८५
वर्त्तते च पुनर्द्यूते वाणिज्यकरणे पनः ।
तत्र कर्मणि षष्ठी स्याद्द यदि शेषो विवक्षितः ॥ २८६

शतस्य पणते स्यात्र पुनस्तत्र निदर्शनम्।
द्यूतक्रीड़ा भवेदर्थो वाणिज्यमथवा पुनः ॥ २८७
समार्थता न चेत्तत्र न षष्ठी स्यात् तदा मता।
यथाप्राप्ता द्वितीया स्यात् ब्राह्मणं पनते हृदि ॥ २८८
इह स्तुतिः पनस्यार्थः पनः स्तुतौ प्रवर्त्तते।
स्तवीति ब्राह्मणं हृदि भवेदर्थः समपतः ॥ २८९
न व्यवहृ स्तुतौ दृष्टो दृष्टः स्तुतौ पुनः पनः।
अर्थतो न समौ तौ द्वौ नास्ति तत्र समार्थता ॥ २९०

६२०। दिवस्तदर्थस्य। २।३।५८

कर्मणि स्याद् दिवः षष्ठी द्यूत-वाणिज्ययोः पुनः।
शतस्य दीव्यति ज्ञेयं तत्र पुनर्निदर्शनम् ॥ २९१
न वाणिज्यं न चेद् द्यूतं न षष्ठी स्याद् दिवः पुनः।
ब्राह्मणं दीव्यतीत्यत्र स्तुतेरर्थो हि गम्यते ॥ २९२

६२१। विभाषोपसर्गे। २।३।५९

उपसर्गाद् विभाषा स्यादपवादो भवेदयम्।
शतस्य प्रतिदीव्यति शतं वा स्यान् निदर्शनम् ॥ २९३
उपसर्गो न चेत्तत्र न विभाषा प्रवर्त्तते।
नित्यं तत्र भवेत् षष्ठी शतस्येति यथाश्रुतम् ॥ २९४

६२२। प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने। २।३।६१

देवता सम्प्रदानं चेद् हविश्च कर्मकारकम्।
तदा प्रेष्यब्रुवोर्योगे षष्ठी स्यादिह कर्मणि ॥ २९५
निदर्शनं "मिहाग्नये छागस्येति" भवेत् पुनः।
न देवता न हव्यं वा न स्यात् षष्ठी तदा पुनः ॥ २९६

६२३। कृत्वोऽर्थप्रयोगे कालेऽधिकरणे। २।३।६४

कालेऽधिकरणे षष्ठी कृत्वोऽर्थानां प्रयोगतः।
द्विरह्नो भोजनं तत्र निदर्शनं प्रदर्शितम् ॥ २९७
इहापि वर्त्तते शेषे न शेषश्चेद् भवेन्न हि।
द्विरहनि हरिर्भुङ्क्ते काले स्यात् सप्तमी पुनः ॥ २९८

६२४। कर्त्तृकर्मणोः कृति। २।३।६५

कृत्प्रयोगे भवेत् षष्ठी कर्त्तरीह च कर्मणि।
कर्त्तरि कृतिः कृष्णस्य गवां दोहश्च कर्मणि॥ २९९
कृति खलु भवेत् षष्ठी तद्धिते न तथा भवेत्।
कृतपूर्व्वी कटं चेति न षष्ठी तद्धिते मता॥ ३००

६२५। उभयप्राप्तौ कर्मणि। २।३।६६

कृति चेदुभयं प्राप्तं षष्ठी कर्मणि केवलम्।
आश्चर्य्यो हि गवां दोहोऽगोपेनेति निदर्शनम्॥ ३०१

स्त्रीप्रत्यययोरकाराकारयोर्नायं नियमः (वा)

अकश्चेत्स्यादकारो वा स्त्रीप्रत्ययस्ततः परम्।
न तत्र नियमश्चायं षष्ठी भवेदुभयथा॥ ३०२
भेदिका वा विभित्सा वा रुद्रस्य जगतो यथा।
रुद्रस्य जगतश्चेति षष्ठी कर्त्तरि कर्मणि॥ ३०३

शेषे विभाषा (वा)

अकवर्ज्जमवर्ज्जं वा स्यादन्यः प्रत्ययो यदि।
नित्यं कर्मणि षष्ठी स्यात् कर्त्तरि तु विभाषया॥ ३०४
अकवर्ज्जमवर्ज्जं वा प्रत्ययः स्याद्‌ यथा तथा।
तत्रापि गमकं लिङ्गमिति केचिन्न मन्वते॥ ३०५
विचित्रा जगतः सृष्टिः हरेर्व्वा हरिणा तथा।
अकवर्ज्जमवर्ज्जं च स्त्रियां क्तिनि निदर्शनम्॥ ३०६
न लिङ्गं गमकं ज्ञेयमिति केचिन्न मन्वते।
अकवर्ज्जमवर्ज्जं वा प्रत्ययो गमको भवेत्॥ ३०७
शिशुना पयसः पानं शिशोर्व्वेति निदर्शनम्।
अकवर्ज्जमवर्ज्जं च ल्युडिह गमकं मतम्॥ ३०८

६२६। क्तस्य च वर्त्तमाने। २।३।६७

क्तस्य च वर्त्तमाने स्मात् षष्ठीति सूत्रितं पुनः।
राज्ञां मतस्तथा बुद्धः पूजितो वा निदर्शनम्॥ ३०९

६२७। अधिकरणवाचिनश्च। २।३।६८

यत्राधिकरणे क्तः स्यात् तत्र षष्ठी विधीयते।
इदमेषां गतं तत्र भवेत् पुनर्निदर्शनम्॥ ३१०

३२८। न लोकाव्ययनिष्ठाखलर्थतृणाम्। २।३।६९

लकारः स्यादुकारः स्यादुकश्च स्यात् तथाव्ययम्।
इदं सर्व्वं मिलित्वा स्याल् लोकाव्यय इति स्थितिः॥ ३११
शतृ शानच् क्वसु कानच् कि किन् ज्ञेयो लकारतः।
एतत् षट्कं लकारेण भवेद् ग्राह्यं समासतः॥ ३१२
क्तः क्तवतुर्भवेत् निष्ठा खलर्थो युच् प्रकीर्त्तितः।
शानन् चानश् तथा तत्र शतृश्च तृण् तृणा मतः॥ ३१३
एषां योगे भवेत् षष्ठी निदर्शनं गृहाण मे।
शतरि स्याद् गृहं गच्छन् लिहानो मधु शानचि॥ ३१४
क्वसौ स्याज् जग्मिवान् ग्रामं दधान वर्म्म कानचि।
पपिः सोमं भवेत् कौ च ददिर्गाः स्यात् पुनः किनि॥ ३१५
उप्रत्यये यशो लिप्सुरुकि जलं च वर्षुकः।
अव्यये स्यात् कटं कृत्वा पुनरिह निदर्शनम्॥ ३१६
क्ते प्रत्यये दिवं प्राप्तःक्तवतौ गतवात् गृहम्।
खलर्थं स्यात् पुनस्तत्र सुदुष्करं मया कृतम्॥ ३१७
शाननि स्यात् पुनः सोमं पवमानो निदर्शनम्।
पुत्रं मण्डयमानः स चानशि कीर्त्तितं पुनः॥ ३१८
व्याकरणमधीयन् स्यात् शतरि च निदर्शनम्।
तृणि भवेत् कटं कर्त्ता दर्शितं सर्व्वशो मया॥ ३१९

कमेरनिषेधः (वा)

कमेरुकि निषेधो न षष्ठी तत्र प्रवर्त्तते।
लम्पटः कामुको दास्यास्तत्र ज्ञेयं निदर्शनम्॥ ३२०

द्विषः शतुर्वा (वा)

द्विषः शतुर्भवेत् षष्ठी पुनरिह विभाषया।
द्विषन् मुरस्य वा मुरं भवेदिह निदर्शनम्॥ ३२१
एभिर्निषिद्ध्यते षष्ठी षष्ठी स्यात् कारके यदि।
यत्र शेषे विवक्षा स्यात् तत्र षष्ठी भवेत् खलु॥ ३२२
नरकस्य स जिष्णुः स्यात् शेषे षष्ठी यदा भवेत्।
कुर्व्वन् विप्रस्य तत्रैव पुनर्निदर्शनं धृतम्॥ ३२३

६२९। अकेनोर्भविष्यदाधमर्ण्ययोः। २।३।७०

अगन्तस्य न षष्ठी स्यात् काले पुनर्भविष्यति।
ओदनं भोजको याति भवेदकि निदर्शनम्॥ ३२४
इनश्चापि न षष्ठी स्याद् काले तत्र भविष्यति।
ग्रामं गमी भवेत्तत्र ग्रामं गामी तथा पुनः॥ ३२५
इन्नन्तस्य न षष्ठी स्याद् भविष्यदाधमर्ण्ययोः।
निदर्शनं शतं दायी दर्शितं काशिकाकृता॥ ३२६
आधमर्ण्यं न चेत्तत्र न भविष्यत् पुनर्यदि।
षष्ठी तत्र भवत्येव यवानां लावको यथा॥ ३२७

६३०। कृत्यानां कर्त्तरि वा। २।३।७१

नित्यं प्राप्ता स्थिता षष्ठी कृद्योगे कर्त्तृकर्मणोः।
कर्त्तरि कारके तस्य विकल्पं कल्पते मुनिः॥ ३२८
कृत्यानां योगतः षष्ठी कर्त्तरि स्याद् विभाषया।
कर्त्तव्यं भवतः कर्म भवता वा निदर्शनम्॥ ३२९
विकल्पः कर्त्तरि ज्ञेयः कर्मणि न तथा भवेत्।
गेयो मानवकः साम्नां नित्यं षष्ठी तु कर्मणि॥ ३३०
उभयप्राप्तौ कृत्या षष्ठ्याः प्रतिषेधो वक्तव्यः (वा)
उभयं चेद् भवेत् प्राप्तमुभयत्र निषिद्ध्यते।
ग्राममजा हि नेतव्या रामेणेति यथा भवेत्॥ ३३१
सिद्धान्तकौमुदीग्रन्थे वार्त्तिकं नेह दृश्यते।
अत्र योगविभागेन समाधानं प्रदर्शितम्॥ ३३२
"कृत्यानामि"ति भागः स्यात् पश्चात् स्यादनुवर्त्तनम्।
वर्त्तत "उभयप्राप्तौ" "न" पुनरनुवर्त्तते॥ ३३३

६३१। तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्। २।३।७२

पक्षे षष्ठी तृतीया वा तुल्यार्थैर्योगतः पुनः।
तुल्यः कृष्णस्य नेह स्यात् कृष्णेन वा निदर्शनम्॥ ३३४
तुला चेदुपमा चेद् वा न तृतीया विकल्प्यते।
तत्र तु केवलं षष्ठी न तुला नोपमा हरेः॥ ३३५

६३२। चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः। २।३।७३

आयुष्यञ्च तथा मद्रं भद्रञ्च कुशलं तथा।
सुखमर्थौ हितमेभिश्चतुर्थी स्यात् सदाशिषि॥ ३३६
पक्षे षष्ठी भवत्येव चकारादनुकृष्यते।
निदर्शनमहं वच्मि यथादृष्टं यथाश्रुतम्॥ ३३७
आयुष्यं हरये भूयात् हरेश्चैव तथा पुनः।
मद्रं तस्मै पुनस्तस्य भद्रं तस्मै पुनस्तथा॥ ३३८
कुशलं च पुनस्तस्मै तस्येति वा भवेत् पुनः।
सुखं तस्मै हितं तस्मै अर्थस्तस्मै तथैव च॥ ३३९
सुखं तस्य हितं तस्य अर्थस्तस्य तथा पुनः।
एवं चान्यत्र विज्ञेयं यत्र यत्र प्रयोजनम्॥ ३४०
आयुष्यादीनां पर्य्यायग्रहणं कर्त्तव्यम् (वा)
चिरजीवितमायुष्यं हितं पथ्यं सुखं च शम्।
प्रयोजनं तथार्थश्च प्रयोगे दिक् प्रदर्शिता॥ ३४१
एवं सर्व्वत्र पर्य्याया ऊहनीयाः स्वबुद्धिभिः।
तथा तथा प्रयोक्तव्या यथा यथा रुचिर्भवेत्॥ ३४२

---

## सप्तमी विभक्तिः

६३३। आधारोऽधिकरणम्। १।४।४५

कर्त्तृनिष्ठा क्रिया ज्ञेया कर्मनिष्ठा तथा पुनः।
तद्द्विधायाः क्रियायाः स्यादाधार इह कीर्त्तितः॥ ३४३
स औपश्लेषिको ज्ञेयो ज्ञेयो वैषयिकोऽपि सः।
स अभिव्यापको ज्ञेयस्त्रिधाधारो व्यवस्थितः॥ ३४४
वने सिंहस्तिले तैलं मोक्षे वाञ्छा निदर्शनम्।
त्रिविधं दर्शितं क्षेत्रं यथायथं समाहर॥ ३४५

६३४। सप्तम्यधिकरणे। २।३।३६

स्यादधिकरणे तत्र सप्तमीति सतां मतम्।
अन्तिकाच्च तथा दूरात् तथैव सप्तमी पुनः॥ ३४६
आस्ते कटे भवेदादौ पुनरिह निदर्शनम्।
दूरे ग्रामस्य विज्ञेयमन्तिके च तथा भवेत्॥ ३४७

## वार्त्तिकम्

१) सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् ।
२) साध्वसाधुप्रयोगे च सप्तमी वक्तव्या ।
३) कारकार्हाणाञ्च कारकत्वे सप्तमी वक्तव्या ।
४) अकारकार्हाणाञ्च अकारकत्वे सप्तमी वक्तव्या ।
५) तद्विपर्य्यासे च सप्तमी वक्तव्या ।
६) निमित्तात् कर्मसंयोगे सप्तमी वक्तव्या ।

१) स्यात् क्तस्येन्विषयस्येह सप्तमी वार्त्तिकात् पुनः ।
अधीती छन्दसि छात्रो भवेदिह निदर्शनम् ॥ ३४८
२) साध्वसाधुप्रयोगे स्यात् सप्तमी च तथा पुनः ।
साधुर्मातरि स कृष्णः स्यादसाधुश्च मातुले ॥ ३४९
३) यदा तु कारकार्हाणां कारकत्वं प्रतीयते ।
सप्तमी स्यात् तदा तेषामर्हाणामिति वार्त्तिकात् ॥ ३५०
सत्सु तरत्सु सर्व्वेषु त्वसन्त आसते यथा ।
सतां हि तरणं न्याय्यं तरणात्ते च कारकाः ॥ ३५१
४) भवेदकारकार्हाणामकारकतया तथा ।
आसीनेषु दरिद्रेषु धनिनो भुञ्जते यथा ॥ ३५२
कारकार्हा न दरिद्रा आसीना स्युरकारकाः ।
सप्तमी स्यात् ततश्चात्र प्राचीनानां निदर्शने ॥ ३५३
५) यत्रार्हाणामनर्हत्वमनर्हाणां तथार्हता ।
विपर्य्यासे तदा ज्ञेया सप्तमीति च वार्त्तिकम् ॥ ३५४

क) अर्हाणामनर्हत्वे

सत्सु तिष्ठत्स्वसन्तस्ते तरन्तीति निदर्शनम् ।
सतां च तरणं न्याय्यं न तरन्ति न कारकम् ॥ ३५५

ख) अनर्हाणामर्हत्वे

तरत्स्वसत्सु सर्व्वेषु सन्तस्तिष्ठन्ति चापरम् ।
असन्तस्तरणार्हा न तरन्ति च तथार्हता ॥ ३५६
६) निमित्तात् कर्मसंयोगे सप्तमीति च वार्त्तिकम् ।
चर्मणि द्वीपिनं हन्ति भाष्ये धृतं निदर्शनम् ॥ ३५७

**६३५। यस्य च भावेन भावलक्षणम्। २।३।३७**

सप्तमी स्यात् क्रिया यत्र लक्षयति क्रियान्तरम्।
रवावस्तं गते रामो जगामेति निदर्शनम्॥ ३५८

**६३६। षष्ठी चानादरे। २।३।३८**

षष्ठी चानादरे ज्ञेया सप्तमी "च"कारात् मता।
स्याद्रुदतः शिशोर्माता जगामेति निदर्शनम्॥ ३५९
स्याद्रुदति शिशौ माता जगामेति च सप्तमी।
अनादरे भवेद् भावे षष्ठी च सप्तमी तथा॥ ३६०

**६३७। स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च। २।३।३९**

परे स्वामी भवेद्व यस्मादीश्वरश्च पुनः परे।
अधिपतिः परे यस्मात् साक्षी यस्मात् परे भवेत्॥ ३६१
प्रतिभूश्च परे यस्मात् प्रसूतश्च भवेत् परे।
तस्मादिह भवेत् षष्ठी सप्तमी च तथा भवेत्॥ ३६२
गवां स्वामी भवेत् षष्ठी गोषु स्वामी च सप्तमी।
ऊहनीयं सर्व्वत्रैव तद्वदिह निदर्शनम्॥ ३६३
प्राप्ता षष्ठी स्थिता तत्र पुनः षष्ठी विधीयते।
सप्तमी स्याद् यथा पक्षे तथा मुनि र्व्यचेष्टत॥ ३६४

**६३८। आयुक्तकुशलाभ्याञ्चासेवायाम्। २।३।४०**

आयुक्तो व्यापृतो ज्ञेयः कुशलो निपुणो मतः।
षष्ठी च सप्तमी ताभ्यामासेवा गम्यते यदि॥ ३६५
आसेवया च तात्पर्य्यं प्रकथितं बुधैरिह।
आयुक्तो हरिपूजायाः कुशलो वा निदर्शनम्॥ ३६६
आयुक्तो हरिपूजायाः कुशलो वा तथा भवेत्।
षष्ठी च सप्तमी तत्र द्वयमेव प्रदर्शितम्॥ ३६७
आसेवा स्यान्न चेद्व गम्या न षष्ठी सप्तमी भवेत्।
आयुक्तः शकटे गौश्चेदीषद्युक्तः प्रतीयते॥ ३६८
आयुक्तकुशलाभ्याञ्च नेह पुनः प्रवर्त्तते।
इहाधिकरणे ज्ञेया सप्तमीति निबोध मे॥ ३६९

**६३९। यतश्च निर्द्धारणम्। २।३।४१**

पार्थक्यं विद्यते यत्र जाति-गुण-क्रियादिभिः।
तत्र निर्द्धारणे ज्ञेया षष्ठी च सप्तमी तथा॥ ३७०

अभेदे विभागो यत्र तत्र सूत्रं प्रवर्त्तते ।
विभागे च पुनर्हेतुर्जातिगुणास्तथा क्रिया ॥ ३७१
नृणां हि ब्राह्मणः श्रेष्ठो जातौ भवेन्निदर्शनम् ।
गवां कृष्णा बहुक्षीरा गुणे तत्र प्रदर्शितम् ॥ ३७२
धावंश्च गच्छतां शीघ्रः क्रियायां दर्शितं पुनः ।
नृषु गोषु च गच्छत्सु तत्र तत्र च सप्तमी ॥ ३७३

६४० । पञ्चमी विभक्ते । २।३।४२

सति निर्द्धारणे यत्र विभागः पुनः कल्प्यते ।
तत्र निर्द्धारणाश्रयात् पञ्चमी स्यादिति स्थितिः ॥ ३७४
भेदे यत्र विभागः स्यात् तत्र सूत्रं प्रवर्त्तते ।
बाधने च पुनः सूत्रं षष्ठीमिह च सप्तमीम् ॥ ३७५
पाटलिपुत्रकेभ्यः स्युराढ्यतरा हि माथुराः ।
भेदे चात्र विभागे स्यान्निदर्शनं सतां मते ॥ ३७६

६४१ । साधुनिपुणाभ्यामर्च्चायामप्रतेः । २।३।४३

न प्रतिर्युज्यते यत्र पुनरर्च्चा च गम्यते ।
साधुना निपुणेन स्यात् विभक्तिस्तत्र सप्तमी ॥ ३७७
रामो मातरि साधुर्व्वा निपुणो वा निदर्शनम् ।
रामो पितरि साधुर्व्वा निपुणो वा तथा पुनः ॥ ३७८
न सप्तमी न चेदर्च्चा साधुभृत्यो महीपतेः ।
इह तत्त्वकथा ज्ञेया नार्च्चा पुनः प्रतीयते ॥ ३७९
यत्र प्रतिः प्रयुक्तः स्याद् द्वितीया स्याद् यथाप्रति ।
मातरं प्रति साधुः स द्वितीयायां निदर्शनत् ॥ ३८०

अप्रत्यादिभिरिति वक्तव्यम् (वा)

"अप्रतेः" स्यान्न केवलं स्यादप्रत्यादिभिस्तथा ।
आदियोगात् परस्यापि ग्रहणं स्याद् यथोचितम् ॥ ३८१
दृश्यते च परेर्योगादनुयोगान्न सप्तमी ।
कर्मप्रवचनीयत्वाद् द्वितीया स्याद् यथाऽमृतम् ॥ ३८२
मातरि परि साधुः सः परियोगे निदर्शनम् ।
मातरमनु साधुः सः स्यादनौ च तथा पुनः ॥ ३८३

६४२। **प्रसितोत्सुकाभ्यां तृतीया च। २।३।४४**

प्रसितेन तृतीया स्यादुत्सुकेन तथैव च।
पक्षे च सप्तमी प्राप्ता चकारेण धृता भवेत्॥ ३८४
प्रसितो हरिणा चैत्रो हरौ वा स्यान्निदर्शनम्।
उत्सुको हरिणा चैत्रो हरौ वा स्यात्तथा पुनः॥ ३८५

६४३। **नक्षत्रे च लुपि। २।३।४५**

लुप्यति प्रत्ययो यत्र प्रत्ययार्थो न लुप्यति।
तृतीया सप्तमी तत्र नक्षत्रात् स्यात्तदर्थकात्॥ ३८६
"मूलेनावाहयेद्देवीं श्रवणेन विसर्ज्जयेत्।"
"मूलेन" च स्थितः शब्दः "श्रवणेन" स्थितः पुनः।
इह स्याल् लक्षितः कालो शब्दो यदा तथा तथा॥ ३८७

६४४। **सप्तमीपञ्चम्यौ कारकमध्ये। २।३।७**

द्वयोः कारकयोर्मध्ये कालोऽध्वनौ च यौ मतौ।
सप्तमी च भवेत्तयोः पञ्चमी च तथा पुनः॥ ३८८
अद्य भुक्त्वा द्व्यहे भोक्ता द्व्यहाद् भोक्ता निदर्शनम्।
क्रोशे लक्ष्यमिहस्थोऽयं क्रोशाल्लक्ष्यं च विध्यति॥ ३८९

६४५। **अधिरीश्वरे। १।४।९७**

स्व-स्वामिभावसम्बन्धे भवेदधिस्तथैव च।
अधिभुवि स्थितो रामः अधिरामे तथा च भूः॥ ३९०

६४६। **यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी। २।३।९**

अधिकन्तु मतं यस्माद् यस्यैश्वर्य्यं मतं भवेत्।
कर्मप्रवचनीयत्वे सप्तमी स्यात् ततः पुनः॥ ३९१
भवेदुपपरार्द्धे च हरेर्गुणा निदर्शनम्।
स्यादधिभुवि रामश्च निदर्शनं तथा पुनः॥ ३९२

६४७। **विभाषा कृञि। १।४।९८**

भवेदधिः करोतौ वा यदीश्वरो मतो भवेत्।
निदर्शनं यदत्र त्वामधिकरिष्यतीति च॥ ३९३
ईश्वरो विनियोगेन तदर्थं इह गम्यते।
न गति र्न "तिङि" प्राप्तं न निघातस्तथा भवेत्॥ ३९४

कारककारिका समाप्ता।

## ग्रन्थकृत्-परिचयः

भुवनो जनको यस्य माता यस्य मृणालिनी ।
प्रतिभा भगिनी यस्य भगिनी च मनोरमा ॥
हरिणायां जनिर्यस्य ढाकायामिति मण्डले ।
रामपुरहाटे यस्य स्थितिरिह च कर्मणा ॥
सोऽहं हरिपदो दत्तः करोमि कारिकामिह ।
अष्टादशशतात् परं पञ्चनवतिवर्षके ॥
वैशाखे तु धृतो ग्रन्थो ज्यैष्ठे ग्रन्थः समापितः ।
विंशतिर्दिवसास्तावद् रचनायां गता मम ॥
सप्तदशं दिनं ज्यैष्ठे गुरुवारः स्थितस्तदा ।
कृष्णपक्षे चतुर्द्दश्यां कृतिः समापिता मया ॥
"ऊर्म्मिः" कृता कृताः "कूहा" "लिपिः" "खुकी" कृता मया ।
"सम्पुट' च तथा "वर्षाशतकं" च मया कृतम ॥
पाणिनीये तिङ् विषये "तिङ्कारिका" कृता मया ।
अस्मिन् ग्रन्थे स्थिताः श्लोकाः शतान्यष्टौ च सप्ततिः ॥

कारकप्रकरणे श्लोकाः— ३९४ ।

इति—

श्रीहरिपददत्तविरचितायां व्याकरणकारिकायां
प्रथमः खण्डः समाप्तः ।

तत्र प्रथमे खण्डे श्लोकाः—

| | |
|---|---|
| संज्ञायाम्— | २३६ |
| परिभाषायाम्— | १२२ |
| सन्धौ— | ५६० |
| शब्दाधिकारे— | ३१२४ |
| अव्यये— | २० |
| स्त्रीप्रत्यये— | ३५१ |
| कारके— | ३९४ |
| | ४८०७ |

साकल्येन प्रथमे खण्डे श्लोकाः ४८०७ ।

———

# व्याकरणकारिका

## शुद्धिपत्रम्

| पृष्ठा/श्लोकः | अशुद्धम् | शुद्धम् |
|---|---|---|
| २३।१६ | तकार | ककार |
| ५८।१२ | इट्टे | ईट्टे |
| ६५।९७ | सँ/स्/स्/कर्त्ता | सँ/०/स्/कर्त्ता |
| | सं/स/स्/कर्त्ता | सं/०/स्/कर्त्ता |
| ६५।९९ | सँ/स्/स्/कर्त्ता | सँ/०/स्/कर्त्ता |
| ६५।१०१ | सं/स्/स्/कर्त्ता | सँ/०/स्/कर्त्ता |
| ६५।१०१ | सँ/स्/स्/कर्त्ता | सं/स्/स्/कर्त्ता |
| ६६।११९ | षच् | षट् |
| ६८।१३८ | पुंदासं | पुंदासः |
| ७०।१६८ | शास्त्रं | शास्त्रं |
| ७०।१७१ | शिवश्छागा | शिवच्छाया |
| ७४।पंक्तिः ५ | मृतागं | मृतानां |
| ७४।२७ | इसुषश्च | इसुसोश्च |
| ७४।१२८ | सर्पिष्करोतीह | सर्पिः करोतीह |
| ७५।३६ | सर्पिष्कुस्तिका | सर्पिष्कुण्डिका |
| ७८।२६ | इह त्र | इह च |
| ७८।२९ | भोस् अच्युत | भोयच्युत |
| ९२।११४ | परे मल् | परे झल् |
| ९२।११५ | तदा पुनः | तदा तु न |
| ९३।११९ | मन् स्यात् | सः स्यात् |
| ९३।१२४ | भवनयोः | भुवनयोः |
| ९४।१४२ | भुवने गु | भुवने षु |
| ९५।१५१ | तामि | तानि |
| ९६।१५२ | द्वन्वो | द्वन्द्वो |
| ९६।१६० | न तादन् | न तावत् |
| ९६।१६२ | —मितमाकाय | —मितमादाय |
| १०१।२२६ | भवेदकः | भवेदेकः |
| १०३।२५४ | प्रयोदिताः | प्रयोजिताः |
| १०६।२७८ | मते एव | मते तव |
| १०८।३०६ | मदजादिकम् | यदजादिकम् |
| १०८।३०८ | "ह्रस्वं खलु" | "ह्रस्वं" खलु |
| १०८।३१० | द्वयं प्राप्ता | द्वयं प्राप्तं |
| ११६।३९५ | न भवेत् "मु" | भवेत् "मु" न |

| पृष्ठा/श्लोकः | अशुद्धम् | शुद्धम् |
| --- | --- | --- |
| ११२।३४७ | "विश्वपाः" स्यात् | "विश्वपा" स्यात् |
| ११५।३८३ | यदिह | यदिह च |
| ११९।४३६ | स्वरूपास्वे | स्वरूपास्ते |
| १२६ ५२४ | स्थातिवत् | स्थानिवत् |
| १३३।६१५ | धातुवंश्च | धातुवश्च |
| १३४ ६२९ | "सु"प्रत्यय | सु औ जश् च |
| १४२।७३ | निभ् भ्याम् | निभ्भ्याम् |
| १४४।९२ | इवङ्वङ | इयङ् वङ् |
| १४५।पंक्तिः १२ | त्रिचतुरः | त्रि चतुर् |
| ११६।११९ | प्रियतिस्थ | प्रियतिस्रः |
| १५६।१४ | उपवाधाः | उपधायाः |
| १५६।२६ | तुधेरिह | वुधेरिह |
| १५७ ३० | अजवानि | अजराणि |
| १५८।४६ | वैदिके वत् | वैदिके तत् |
| १५९।६० | वाधित्वेव | वाधित्वैव |
| १६०।७३ | न शब्देन | च शब्देन |
| १६१।६४ | स्लूनि | स्नूनि |
| १६६।३७ | कथमिह | कथमपि |
| १६८।६० | तदापि च | तदपि च |
| १७१ ९८ | अञ्ची | आञ्ची |
| १७४।१३६ | थाल | शाल |
| १७५।१४५ | सरा् | यश् |
| १७६ १६१ | तुपषाड् | तुराषाड |
| १७७।१७२ | तइ नव च | तथैव च |
| १७९।१८८ | अव् | अच् |
| १८०।२०३ | क पदान्तश्च | पदान्तश्च |
| १८१।२१० | प्रत्यः | प्रत्ययः |
| १८६।२८१ | अन्वदेशो | अन्वादेशो |
| १८६।२८१ | अशच् | अश् च |
| १९३।३६६ | तदा ए स्यात् | तदा च स्यात् |
| १९४।३७५ | न तस्मात् च | न तस्माद् ए |
| १९४।३७६ | एस् | ए |
| १९६।३९३ | शम् | शस् |
| १९७।४१३ | वृत्रहणो | वृत्रहणौ |
| १९९।४४० | योगविभास्य | योगविभागस्य |

| पृष्ठा/श्लोकः | अशुद्धम् | शुद्धम् |
|---|---|---|
| २००।४४६ | तिङ्प्रस्य | तिङन्तस्य |
| २००।४६० | प्रकृति | प्रकृते |
| २००।४६० | अकारेः | अकारः |
| २०३।४८६ | मघवान्तास् | मघव/न्/त्/स् |
| २०३।४९६ | तवगरश्चे त् | तवर्गश्चे त् |
| २०३।४९६ | अनिद्धः | असिद्धः |
| २०३।४९८ | "वहलं" | "वहुलं" |
| २०४।५१२ | वहूनं | वहुलं |
| २०७।५४२ | पने वेद् | परे चेद् |
| २०७।५४६ | मुचि | सुटि |
| २०८।५६५ | भवेदिते | भवेदिति |
| २०८।५६६ | उकंदरः | उकारः |
| २०९।५७४ | व्वथो निटि | च्यथो लिटि |
| २१५।६४४ | युज्य | युज्यते |
| २१९।७०० | अष्टन था | अष्टन आ |
| २२०।७१७ | सुभ वेत् | सु भवेत् |
| २२९।८३० | ऋत्विज" | ऋत्विजः |
| २२९।८३५ | ऊऔं | ऊर्णो |
| २३१।८४८ | सीया | सीमा |
| २३२।८३८ | यः शिष्येते | यः शिष्यते |
| २३४।८९१ | वमादेशः | समादेशः |
| २३९।९१६ | यदा | रूपं यदा |
| २३९।९६८ | भवेदिह | भवेत् |
| २४५।१०२२ | अष्द् | अष्मद् |
| २४५।१०२५ | यथा मु | यथा स्यु |
| २४९।१०७१ | अतिगृत्मया | अतियूष्मया |
| २५०।१०८७ | अतियूष्मस् | अतियूष्मयि |
| २५१।१०९३ | त्र्यमधिकत | त्र्यमधिकृत |
| २५१।११११ | —मेदृनं | मोदनं |
| २५३।१११९ | हतो | हरो |
| २५४।११३४ | बावद्रिक | वागाद्रिक |
| २५४।११३७ | अरिद्यमानवत् | अविद्यमानवत् |
| २५४।११४० | सयादेशो | समादेशो |
| २५५।११४३ | पादः स्यात् | पादः |
| २५५।११४५ | कश्चित् | क्वचित् |

| पृष्ठा/श्लोकः | अशुद्धम् | शुद्धम् |
|---|---|---|
| २५६ ११५४ | "संयोगान्तस्य"च | "संयोगान्तस्य" |
| २५६।११५४ | भवेल्लोङ | भवेल्लोपो |
| २५६।११५४ | प्रापो | प्रान् |
| २५६।११६२ | प्राङ्यां | प्राङ्भ्याम् |
| २६१।१२२२ | अञ्च्स्यात् | अञ्च्, स्यात् |
| २६२।१२३५ | क्रुञ्च् | क्रुञ्च |
| २६२।१२३७ | चापि | चापि च |
| २६४।१२५४ | सुवृङ् | सुवृड् |
| २६५।१२६७ | तदापि | तदापि |
| २७१।१३४६ | चात्र | तत्र |
| २७२।१३६३ | यत्नमुष् | रत्नमुष् |
| २७७।१४२४ | चिकीष् | चिकीर्ष |
| | स्यात् पदं | स्यात् च पदं |
| २८०।१४६८ | आरभ्यये | आरभ्यते |
| २८१।१४८२ | तदा | तदा च |
| २८३।१५०५ | परं | पदं |
| २८६।१५७५ | त्यात् | च |
| २९२।८ | उष्णिह् | उष्णिह् |
| ३००।४८ | प्रदर्शिता | प्रदर्शितम् |
| ३०३।७८ | स्याच्च पुनः | स्याच्च तथा पुनः |
| ३१३।२०३ | द्विषश्चिश्च | त्रिषश्चिश्च |
| ३१४।२१३ | अवाञ्च् | गवाञ्च् |
| ३१८।२६७ | तुनः | पुनः |
| ३२०।२६१ | तेसाम् | तासाम् |
| ३३१।४२६ | ङि | ङे |

---